अक्षमालां डमरुगं कपालं परशुं सह ।
बिभ्राणं सहसा भान्तं व्यचष्ट हृदि विस्मितः ।। १२.९.११-१३

The sage saw Rudra accompanied by Umā opening his eyes, and saluted placing his head on his feet.

नेत्रे उन्मील्य ददृशे सगणं सोमयाऽऽगतम् ।
रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ।। १२.९.१४

He worshipped Rudra offering arghya, Pādya etc. and praised him.

ततो सपर्यां व्यदधात् सगणाय सहोमया ।
स्वागतासनपाद्यार्घ्यगन्धस्रग्धूपदीपकैः ।। १२.९.१५

Mahādeva asked Mārkaṇḍeya to request for any boon. We three, Brahma, Viṣṇu, Maheśvara give boons. The meeting in the three is invaluable, by this one attains in mortality.

वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ।
अमोघं दर्शनं येषां मर्त्यो यत् विन्दतेऽमृतम् ।। १२.७.१९

Myself, Caturmukha Brahmā, Hari are identical. There is not even an iota of difference among us.

अहं च न पृथग् ब्रह्मा स्वयं च हरिरीश्वरः ।
न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ।। १२.९.२१-२२

Near water places are not holy water places. The odds of mud and stone are not the deities. More who purify by their mere darśana are the real deity.

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन यूयं दर्शनमात्रतः । १२.९.२३

By wistening and seeing mere even a great sinner will be free from his sons. Even अन्त्यजs will get lifted. Hence it need not be said that are conversation then one will get free from his sins.

श्रवणाद् दर्शनाद् वाऽपि महापातकिनोऽपि वः ।
शुद्धयेरन्नन्त्यजाश्चापि किमु सम्भाषणादिभिः ।। १२.९.२५

Śaunaka asks Sūta, to inform him Bhāgavata-tattva and Kriyā-yoga by which one can attain immortality.

अथेममर्थं पृच्छामो भवन्तं बहुवित्तमम् ।
समस्ततन्त्रराद्धान्ते भवान् भागवततत्त्ववित् ।
तान्त्रिकाः परिचर्यायां केशवस्य श्रियः पतेः ।।
अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथैव यैः ।।
तान् नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् ।
येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ।। १२.१०.१-३

In response to this Sūta explains Vibhūtis of the Supreme God as under

The various limbs of Puruṣa are correlated with the various items of lokas as under.

एतद्धि पौरुषं रूपं भूः पादौ द्यौः शिरो नभः ।
नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ।।
प्रजापतिः प्रजननं अपानो मृत्युरीशितुः ।
तद्बाहवो लोकपालाः मनश्चन्द्रो भ्रुवोर्यमः ।।
लज्जोत्तरोऽधरो लोभो द्युतिर्ज्योत्स्ना स्मयो भ्रमः ।
रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः ।। १२.१०.६-७

Kaustubha etc., ornaments are described as under :

कौस्तुभव्यपदेशेन स्वात्मज्योतिः बिभर्त्यजः ।
तत्प्रभाव्यापिनी साक्षात् श्रीवत्समुरसा प्रभुः ।।
स्वां मायां वनमालाख्यां नानागुणमयीं दधत् ।
वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत् स्वरम् ।।
बिभर्ति साङ्ख्यं योगं च देवो मकरकुण्डले ।
मौलिं पदं पारमेष्ठ्यं सर्वलोकनमस्कृतम् ।
अव्याकृतं अनन्ताख्यं आसनं यदधिष्ठितम् ।
धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ।।
ओजस्सहोबलयुतं मुख्यतत्त्वं गदां दधत् ।
अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ।। १२.१०.१०-१४

नभोनिभं नभस्तत्त्वमसिं चर्म तपोमयम् ।
कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधी ।
इन्द्रियाणि शरानाहुः आकृतिरस्य स्यन्दनम् ।
तन्मात्राण्यस्याभिव्यक्तिः इन्द्रियार्थाः क्रियाः मताः ।
मण्डलं देवयजनं दीक्षा संस्कार आत्मनः ।
परिचर्या भगवत आत्मनो दुरितक्षयः ।।
भगवान् भगशब्दात्मा लीलाकमलमुद्वहन् ।
धर्मं यशश्च भगवान् चामरव्यजनेऽभजत् ।।
आतपत्रं तद्वैकुण्ठं निजधामाकुतोभयम् ।
त्रिवृद्वेदः सुपर्णाख्यो यज्ञे वहति पूरुषम् ।।
अनपायिनी श्रीः साक्षाद् आत्मभूता हरेः प्रभोः ।
विष्वक्सेनस्तन्त्रमूर्तिः विदितः पार्षदाधिपः ।
नन्दादयोऽष्टौ द्वाः स्थाश्च तेऽणिमाद्या हरेर्गुणाः ।। १२.१०.१५-२२

Bhāgavata mentions the following व्यूह forms of God.

वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम् ।
अनिरुद्ध इति ब्रह्मन् मूर्तिव्यूहेऽभिधीयते ।। १२.१०.२१

विश्व etc. four forms are also stated.

विश्वतैजसप्राज्ञस तुरीय इति वृत्तिभिः । १२.१०.२२

## Eleventh Chapter

Śaunaka asks Sīta to explain व्यूहs of Sūrya with reference to each month.

तेषां नामानि कर्माणि नियुक्तानामधीश्वरैः ।
ब्रूहि नः श्रद्धधानानां व्यूहं सूर्यात्मनो हरेः ।। १२.११.२

The God of the form of Sūrya is only one. But he is described in different ways by the sages.

एक एव हि लोकानां सूर्य आत्मा आदिकृत् हरिः ।
सर्ववेदक्रियामूलं ऋषिभिर्बहुधोदितः ।।

The explanation given by the ṛsis in the verses found in.

कालो देशः क्रिया..... upto विश्वामित्रमुखा एते उर्जमासं नयन्त्यमी ।
१२.११.५-१८

The god moves in the twelve months and enlightens. things.

द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ।
चरन् समन्तात् तनुते परत्रेह च सन्मतिम् ।। १२.११.२०

The sages offer prayers to him by ऋक्, यजुस् and सामन्. Gandharvas sing his glory and apsaras dance.

सामर्ग्यजुर्भिः तल्लिङ्गैः ऋषयः संस्तुवन्त्यमुम् ।
गन्धर्वास्तं प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः ।। १२.११.२१

Nāgas carry the chariot the villages arrange for the chariot. Thousands of Vālauhilyas and sings move in front of his chariot.

उन्नह्यन्ति रथं नागाः ग्रामण्यो रथयोजकाः ।
चोदयन्ति रथं पृष्ठे नैर्ऋता बलशालिनः
वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः ।
पुरतोऽभिमुखं यान्ति स्तुवन्त स्तुतिभिर्विभुम् ।। १२.११.२२-२३

In this way God Hari assuring the various forms in the age Kalpa shines.

एवं ह्यनादिनिधनो भगवान् हरिरीश्वरः ।
कल्पे कल्पे स्वमात्मानं व्यूह्य लोकान् तपत्यजः ।। १२.११.२४

In this chapter all the topics so far narraged in Bhāgavata are summarised. The great deeds of Śrī Kṛṣṇa are particularly stated.

Finally फलश्रुति of Bhāgavata śravaṇa is stated as follows :

एतद्वः कथितं विप्रा कथनीयोरुकर्मणः ।
माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ।।
य एवं श्रावयेन्नित्यं यामं क्षणमनन्यधीः ।
श्रद्धावान् योऽनु श्रृणुयात् पुनात्यात्मानमेव सः ।
द्वादश्यां एकादश्यां वा श्रृण्वन्नायुष्यवान्भवेत् ।।
पुष्करे मधुरायां च द्वारवत्यां यतात्मवान् ।
उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ।। १२.१२.५७-६०

An attempt is made above to highlight the special features of Bhāgavata tātparya nirṇaya. It is hoped that this will provide a new approach to the study of this valuable work.

**Prof. K.T. Pandurangi**

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# श्रीमद्भागवततात्पर्यनिर्णयः

ॐ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

# श्रीमद्भागवतम्

## प्रथमः स्कन्धः

### प्रथमोऽध्यायः

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यं सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

श्रीमद्भागवततात्पर्यनिर्णयः

सृष्टिस्थित्यप्ययेहानियतिदृशितमोबन्धमोक्षाश्च यस्माद्
अस्य श्रीब्रह्मरुद्रप्रभृतिसुरनरख्यीशशत्र्वात्मकस्य ।
विष्णोर्व्यस्ताः समस्ताः सकलगुणनिधिः सर्वदोषव्यपेतः
पूर्णानन्दोऽव्ययो यो गुरुरपि परमः चिन्तये तं महान्तम् ॥

**जन्माद्यस्येत्यादि** । तं **परं धीमहि** । **अन्वयात्** । 'यतो वा इमानि' इत्यादिश्रुतिस्मृतिभ्यः । **इतरतः** तर्कतः । चेतनाद्धि पित्रादेः पुत्रादिरुत्पद्यते । **अभिज्ञः** सर्वज्ञः । अतो युज्यते । 'यं कामये तं तमुग्रं कृणोमि' 'मम योनिः' इत्यन्येषां तदपेक्षत्वात् । न चान्यापेक्षोऽसौ । **स्वराट्** । कुतः?

**तेने ब्रह्म हृदा य आदिकवये ।** स हि 'विश्वा जातानि परिता बभूव' । नान्यः । हृदा स्नेहेन । 'यो ब्रह्माणं विदधाति पूर्वम्' इति च । स्वात्मत एव हि तस्य बुद्धिप्रकाशः । नच प्रसादं विना ज्ञातुं शक्यः । **मुह्यन्ति यं सूरयः ।** न चातृप्तः प्रवर्तते । किन्तु **मृषा** वृथैव । 'भित्वा मृषाश्रुः' इतिवत् । 'देवस्यैषः स्वभावोऽयम्' इति च । **यत्रेति** विशेषणान्नान्यत्र । स्वविषय एव वृथा । जीवेश्वरजडानां सर्गस्त्रिसर्गः । एकस्य तेजसो बहुत्ववदीश्वरसर्गः । वारिनिमित्तप्रतिबिम्बवज्जीवसर्गः । मृदो घटादिवदव्यक्ताज्जडसर्गः । नच मायामयी सृष्टिः । **धाम्ना स्वेन सदा निरस्तकुहकम् ।** तद्धाम्ना श्रियो निरस्तकुहकत्वं मुक्तानां च । नच मुक्तवत्पूर्वं बन्धभात्त्वम् । सदा निरस्तकुहकत्वात् । **सत्यं** निर्दुःखनित्यनिरतिशयानन्दानुभवरूपम् । **परं** सम्पूर्णगुणम् । परत्वसाधकं जन्मादीत्यादि ।

तन्त्रभागवते च–

'सृष्टिस्थित्यप्ययेहादेः श्रुतिस्मृतिसमन्वयात् ।
युक्तितश्चेत्तपूर्वादिः श्रीब्रह्मभवपूर्विणः ।
सुरगन्धर्वमनुजपितृदैत्यात्मनः पृथक् ।
कर्ता विष्णुरजो नित्यः सर्वज्ञत्वान्न चापरः ।
अनन्याधिपतिश्चासौ गरीयान् ब्रह्मणो यतः ।
तत्प्रसादमृते तस्य नान्यो वेत्तास्ति कश्चन ।
तेजसो रूपवद्रूपं बहुधा कुरुते हरिः ।
वारिस्थतेजःप्रतिमा जीवास्तस्माद् विनिर्गताः ।
कुलालेन मृदा यद्वन्निर्मीयन्ते घटादयः ।
विष्णुनैवं प्रकृत्यैव निर्म्यते जगदीदृशम् ।
एष त्रिसर्गो विष्णोस्तु वृथा लोकस्य चावृथा ।

इन्द्रजालविधां सृष्टिं मन्यन्ते ज्ञानदुर्बलाः ।
नित्यं निरस्तेन्द्रजाले स्वत एव कथं भवेत् ।
अक्षमाः सत्यसृष्टौ हि मायासृष्टिं वितन्वते ।
अनन्ताचिन्त्यविभवः कथं तामीहते हरिः ।
निर्दुःखपूर्णानन्दत्वाद्यमाहुः सत्यमच्युतम् ।
निर्दोषगुणपूर्णत्वात् परं चाहुर्जनार्दनम् ।
एवंविधानुभावो यः स कथं निन्दितं सृजेत् ।
स्वप्नादिकं परो देवः प्राणादिस्थस्तनोत्यसौ ।
केवलस्य परस्यास्य मायासृष्टिर्न युज्यते ।
तस्माद् बाधायुताः सर्वे स्वप्नाद्या ये त्वकेवलाः ।
इदं न बाध्यते सर्वं जगत्केवलजं यतः ।
मोक्षवत् केवलस्यास्य शक्त्या सम्यग्विजृम्भितम् ।
एतद्रहस्यं परमं ब्रह्मसूत्रपदोदितम् ।
ये त्वेवं न विजानन्ति ते हि यान्त्यधरं तमः ।
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ।
ये त्वेतदनुतिष्ठन्ति पारम्पर्यागतं मम ।
ते यान्ति परमं स्थानं ममैवोदितमञ्जसा' । इत्यादि ।

'वैधर्म्याच्च न स्वप्नादिवत्' इति च ।

'प्रघान्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्' इत्यादि ।
ब्रह्मसूत्रमहाभारतगायत्रीवेदसम्बन्धश्चायं ग्रन्थः ।

उक्तं च गारुडे–

'अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ।
गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः ।
पुराणानां साररूपः साक्षाद्भगवतोदितः ।
द्वादशस्कन्धसंयुक्तः शतविच्छेदसंयुतः ।
ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः' । इति ।। १ ।।

धर्मः प्रेज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ।। २ ।।

अधिकारिविषयफलान्युच्यन्ते **धर्म** इति । **प्रोज्झितकैतवः** फलानपेक्षया । ईश्वरार्पणेन **परमः** ।

'तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ।
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम्' । इत्यादि सतां लक्षणम् ।

सतां च मात्सर्यमर्जुनस्य एकलव्य इव कुत्रचिद् दृश्यते । तद्वर्जनीयमुत्तमेषु ज्ञानार्थिना ।

महासंहितायां च–

'उत्तमे स्वात्मनो नित्यं मात्सर्यं परिवर्जयेत् ।
कुरुते यत्र मात्सर्यं तत्तत् तस्य विहीयते' । इति ।

नित्यनिरस्तदोषपूर्णगुणं **वास्तवम्** ।

नित्यसंहितायां च–

'निरस्ताखिलदोषं यदानन्दादिमहागुणम् ।
सर्वदा परमं ब्रह्म तस्माद्वास्तवमीयते' ।। इति ।

वस्तु अप्रतिहतं नित्यम् च ।

स्कान्दे च–

'वसनाद् वासनाद्वस्तु नित्याप्रतिहतं यतः ।
वासनेदं यतस्तुन्नमतस्तद् ब्रह्म शब्यते' ।। इति ।

**किं वा परैः** अर्थकामादिकथनैः ?

गारुडे च–

'धर्मार्थकाममोक्षाणामेकमेव पदं यतः ।
अवरोधो हृदीशस्य पृथग्वक्ष्ये न तानहम्' । इति ।

सद्यःशब्दः आपेक्षिक इति तत्क्षणादिति । नचासम्पूर्णाधिकारिणां तत्क्षणादवरुध्यत इति सद्यःशब्दः । अधिकारिविषयफलानां स्मरणात् फलाधिक्यं भवति ।

वामने च–

'अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत् ।
स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलम्' । इति ।। २ ।।

निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ।। ३ ।।

ज्ञातफलस्यापि प्रशंसाविधिभ्यां क्षिप्रप्रवृत्तिर्भवतीति प्रशस्य विधत्ते । **निगमकल्पतरोरिति** । भगवता गलितम् । शुकेन द्रवीकृतम् ।

उक्तं च ब्रह्माण्डे-

'धर्मपुष्पस्त्वर्थपत्रः कामपल्लवसंयुतः ।
महामोक्षफलो वृक्षो वेदोऽयं समुदीरितः ।
शातितानि फलानीह कृष्णद्वैपायनेन तु ।
भारताख्यानि यानीह तथा भागवतं भुवि ।
आर्द्रीकृतानि तानीह शुकप्रभृतिभिर्जनैः ।
ख्यापयद्भिर्गुरुप्रोक्तान् वेदार्थान् ग्रन्थनिष्ठितान् ।
कानिचित् दर्शयामास वृक्षस्याग्रे फलानि तु ।
व्याचक्षमाणो वेदार्थं भगवान् लोकपूजितः ।
एतेषामथ तेषां वा रसान् पिबत सज्जनाः ।
आमोक्षान्महती तृप्तिरहो मे पश्यतो भवेत्' । इति ।। ३ ।।

**नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः**
**सत्रं स्वर्गाय लोकाय सहस्रसममासत ।। ४ ।।**

प्रकारान्तरेण पुरुषार्थशङ्कानिवृत्त्यर्थमाख्यायिका ।

पाद्मे च–

'आख्यायिकाः प्रदर्श्यन्ते सर्ववेदेषु सर्वशः ।
द्योतयन्त्यस्तु महतां तात्पर्यं तत्र तत्र ह ।
अलाभः पुरुषार्थस्य प्रोक्तमर्थमृते त्विति ।
द्योतनाय महाराज श्रद्धावृद्ध्यर्थमेव च' । इति ।। ४ ।।

यानि वेदविदां श्रेष्ठो भगवान् बादरायणः ।
अन्ये च मुनयः सूत परावरविदो विदुः ॥ ७ ॥

वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात् ।
ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥

यानि भगवज्ज्ञातान्यन्यैरप्यृषिभिः ज्ञायन्ते तानि वेत्थ ।

उक्तं हि ब्रह्माण्डे–

'द्वैपायनेन यद्बुद्धं ब्रह्माद्यैस्तन्न बुध्यते ।
सर्वबुद्धं स वै वेद तद्बुद्धं नान्यगोचरम्' इति ॥ ७-८ ॥

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यं बिभेति स्वयं भवः ॥ १४ ॥

**विवशः** बह्वभ्यासात् ।

उक्तं च ब्रह्मवैवर्ते–

'शारीराद् वाचिकाभ्यासो वाचिकान्मानसो भवेत् ।
मानसाद् विवशान्मुच्येन्नान्यथा मुक्तिरिष्यते' । इति ॥ १४ ॥

अथाऽऽख्याहि हरेर्धीमन्नवतारकथाः शुभाः ।
लीलाविदधतः स्वैरमीश्वरस्यात्ममायया ॥ १८ ॥

**आत्ममायया** स्वरूपभूतेच्छया ।

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त कथ्यते' । इति स्कान्दे ॥

विष्णुसंहितायां च–

'इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिरिति त्रिधा ।
शक्तिशक्तिमतोश्चापि न भेदः कश्चनेष्यते' ।। इति ।। १८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे प्रथमोध्यायः ।।



## द्वितीयोऽध्यायः

सूत उवाच–

यं प्रव्रजन्तमनुपेतमपेतकृत्यं
द्वैपायनो विरहकातर आजुहाव ।
पुत्रेति तन्मयतया तरवोऽपि नेदु-
स्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ।। २ ।।

अनुपेतं देहादिभिः । अनभिमानात् । अकातरः कातरवददर्शयत् ।

उक्तं च स्कान्दे–

'नित्यतृप्तः परानन्दो योऽव्ययः परमेश्वरः ।
यस्य पुत्रफलं नैव यज्जातं जगदीदृशम् ।
यदधीनश्रियोऽपाङ्गाद् ब्रह्मरुद्रादिसंस्थितिः ।
स पुत्रार्थं तपस्तेपे व्यासो रुद्रस्य चेश्वरः ।
कातर्यं दर्शयामास वियोगे लौकिकं हरिः ।
कुतः कातरता तस्य नित्यानन्दमहोदधेः' । इति ।।

'ईशन्नपि हि लोकस्य सर्वस्य जगतो हरिः ।
कर्माणि कुरुते विष्णुः कीनाश इव दुर्बलः' । इति चोद्योगे ॥

'देवत्वे देववच्चेष्टा मानुषत्वे च मानुषी' इति विष्णुधर्मे ।

सर्वभूतहृदयम् अहङ्कारात्मकत्वात् ।

'अहङ्कारात्मको रुद्रः शुको द्वैपायनात्मजः' । इति स्कान्दे ॥ २ ॥

यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ।
संसारिणां करुणयाऽऽह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ३ ॥

**स्वानुभावं** ब्रह्म ॥ ३ ॥

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११ ॥

**अद्वयं** असमाधिकम् । तथा च भाल्लवेयश्रुतिः–

'स पुरुषः सोऽद्वय इति । न ह्येनमभि कश्चन । न ह्येनमपि कश्चनेति' इति ।

'सोऽद्वयः पुरुषस्तस्मान्न समो नाधिको ह्यतः' । इति महासंहितायाम् ।

तत्त्वशब्दार्थस्तत्रैवोक्तः–

'अतीतानागते काले यत्तादृशमुदीर्यते ।
कुतश्चिदन्यथा नेयात् तत्तत्त्वं तत्त्वतो विदुः' ॥ इति ॥ ११ ॥

सत्तामात्रं तु यत्किञ्चित्सदसच्चाविशेषणम् ।
उभाभ्यां भाष्यते साक्षाद्भगवान् केवलः स्मृतः ।। १२ ।।

**सत्तामात्रम्** आनन्दमात्रम् ।

तथा च पैङ्गिश्रुतिः–

'अथ कस्मादुच्यते सत्तेति । नन्दति नन्दयति चेति' । इति ।

न कार्यकारणविषयविशेषितवैषयिकज्ञानम् । केवलमेव तज्ज्ञानम् । स्रष्टृत्वादिभिः कार्यकारणविशेषितं च ।

तन्त्रभागवते च–

'विषयापेक्षि न ज्ञानं विषयैश्च विशेषितम् ।
यत्तदानन्दमात्रं च तद् ब्रह्मेत्यवधार्यताम्' । इति ।

**यत्किञ्चित्** अलोकसिद्धम् ।। १२ ।।

तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतिगृहीतया ।। १३ ।।

यस्मात् परमात्मैव तत्त्वं तस्मात् तमेव पश्यन्ति मुनयः ।। १३ ।।

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ।। २२ ।।

आत्मनीश्वर इति न जीवैक्यमुच्यते । परेषामपि ब्रह्मादीनां यतोऽवरत्वं स परावरः । 'भेददृष्ट्याभिमानेन' इति च कापिलेये । 'ब्रह्म प्रधानमुपयान्त्य-गताभिमानाः' इति च । 'विद्याऽऽत्मनि भिदाबोधः' 'यत्र हि द्वैतमिव

भवति' । 'अन्यमीशमस्य महिमानमिति' । 'अनश्नन्नन्यो अभिचाकशीति' । 'छायातपौ ब्रह्मविदो वदन्ति' । 'एको बहूनां यो विदधाति कामान्' । 'सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' । 'सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः' । 'यत्र पूर्वे साध्याः सन्ति देवाः' । 'शृण्वे वीर उग्रमुग्रं दमायन्' इत्यादि च ।

'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत् ।
बहवः पुरुषाः ब्रह्मन्नुताहो एक एव तु ।
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' । इत्यादि मोक्षधर्मे ।।

'भेददृष्ट्याभिमानेन पश्यन्तो यान्ति तत्पदम्'– इति वायुप्रोक्ते । 'अनुपपत्तेस्तु न शारीरः', 'भेदव्यपेशाच्च', 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते', 'पृथगुपदेशात्' इत्यादि च ।

सत्यत्वं च भेदस्योक्तं भाल्लवेयश्रुतौ–

'स्थाणुर्होच्चक्राम स प्रजापतिमुवाच । कोऽसि के स्म कः स इति । स होवाच योऽस्मि ये स्थ यः स इति । अथ हैनमुपाक्रोशत् । सत्यं भिदा सत्यं भिदा सत्यं भिदेति । मैवारुवण्यो मैवारुवण्यो मैवारुवण्य इति' इति । 'सत्यमेनम्' 'सत्यः सो अस्य' इति चोक्तम् ।

महासंहितायां च–

'त्रिविधं जीवसङ्घं च परमात्मानमव्ययम् ।
तेषां भेदं च ये सत्यं विदुर्मोहविवर्जिताः ।
ते यान्ति परमं स्थानं विष्णोरेवाचलं ध्रुवम् ।
जीवेश्वरभिदां भ्रान्तिं केचिदाहुरपण्डिताः ।

अनारतं तमो यान्ति परमात्मविनिन्दनात् ।
पराधीनश्च बद्धश्च स्वल्पज्ञानसुखेहितः ।
अल्पशक्तिः सदोषश्च जीवात्माऽनीदृशः परः ।
वदता तु तयोरैक्यं किं तेनादुष्कृतं कृतम् ।
अन्तर्याम्यैक्यवाचीनि वचनानीह यानि तु ।
तानि दृष्ट्वा भ्रमन्तीह दुरात्मानोऽल्पचेतसः ।
अस्म्यस्मि त्वमहं स्वात्मेत्यभिधागोचरो यतः ।
सर्वान्तरत्वात् पुरुषस्त्वन्तर्यामी नियामयन् ।
अतो भ्रमन्ति वचनैरासुरा मोहतत्परैः ।
तन्मोहने परा प्रीतिर्देवानां परमस्य च ।
अतो महान्धकारेषु पतन्त्यज्ञानमोहिताः' । इत्यादि ।। २२ ।।

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एव इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनौ नृणां स्युः ।। २४ ।।

विष्णोरेव त्रिसञ्ज्ञाः । वामनपुराणे च–

'ब्रह्मविष्णवीशरूपाणि त्रीणि विष्णोर्महात्मनः ।
ब्रह्मणि ब्रह्मरूपः स शिवरूपी शिवे स्थितः ।
पृथगेव स्थितो देवो विष्णुरूपी जनार्दनः' । इति ।

त्रयोऽपि गुणा विष्णवाश्रयाः । तथाऽपि सत्त्वतनौ जीवे श्रेयांसि स्युः
।। २४ ।।

पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ।
तमसस्तु रजस्तस्मात् सत्त्वं यद् ब्रह्मदर्शनम् ।। २५ ।।

मेघरूपत्वात् धूम उत्तमः ।। २५ ।।

भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम् ।
सत्वं विशुद्धं क्षेमाय कल्पते नेतराविह ।। २६ ।।

सात्त्विकानां वासुदेवे भक्तिरुत्पद्यते ।। २६ ।।

रजस्तमःप्रकृतयः समशीलान् भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ।। २८ ।।

भूतेशप्रजेशादीन् ।। २८ ।।

स एवेदं ससर्जाग्रे भगवानात्ममायया ।
सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ।। ३१ ।।

**आत्ममायया** स्वेच्छया । **सदसद्रूपया** प्रकृत्या च ।। ३१ ।।

तया विलसितेष्वेषु गुणेषु गुणवानिव ।
अन्तःप्रविष्ट आभाति विज्ञानेन विजृम्भितः ।। ३२ ।।

**तया** सदसद्रूपया । **विज्ञानेन विजृम्भितः** विज्ञानेन सम्पूर्णः ।। ३२ ।

असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः ।
स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ।। ३४ ।।

तद्गुणान् एव भुङ्क्ते न दोषान् ।

'सर्वत्र सारभुग् देवो नासारं स कदाचन' इति वामनपुराणे ।

'अनश्नन्' इत्यशुभापेक्षया परवशत्वापेक्षया क्लृप्त्यपेक्षया च ।

'अक्लृप्त्या च स्वतन्त्रत्वादशुभस्य च वर्जनात् ।
अभोक्ता शुभभोक्तृत्वाद् भोक्तेत्येव च तं विदुः ।
अन्यूनानधिकत्वाच्च पूर्णस्वानन्दभोजनात् ।
विरागाच्च परस्यास्य भोक्तृत्वप्रतिषेधनम्' । इति स्कान्दे ।। ३४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे द्वितीयोऽध्यायः ।।



## तृतीयोऽध्यायः

सूत उवाच–

जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ।। १ ।।

व्यक्त्यपेक्षया **जगृह** इति । तथा हि तन्त्रभागवते–

'अहेयमनुपादेयं यद्रूपं नित्यमव्ययम् ।
स एवापेक्ष्य रूपाणां व्यक्तिमेव जनार्दनः ।
अगृह्णाद् व्यसृजच्चेति कृष्णरामादिकां तनुम् ।
पठ्यते भगवानीशो मूढबुद्धिव्यपेक्षया ।
तमसा ह्युपगूढस्य यत्तमःपानमीशितुः ।

एतत्पुरुषरूपस्य ग्रहणं समुदीर्यते ।
कृष्णरामादिरूपाणां लोकव्यक्तिमपेक्षया' । इति ॥

महदादिभिः सम्भूतं अन्तर्गतमहदादि । न महदादिशरीरम् । 'यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इति हि श्रुतिः ।

'यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशांपते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा विज्ञेयः सगुणो निर्गुणोऽपि च ।
भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम' । इति मोक्षधर्मे ।

'नाऽसीदहो न रात्रिरासीन्नासदासीत् तन्महद्भुस्तदा
अभवद्विश्वरूपं सा विश्वरूपस्य रजनी' इति भाल्लवेयश्रुतिः ।

'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा ।
न योगित्वादीश्वरत्वात् सत्यरूपोऽच्युतो विभुः' । इति वाराहे ।

'सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः ।
हानोपादानरहिता नैव प्रकृतिजाः क्वचित् ।
परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वतः ।
सर्वे सर्वगुणैः पूर्णाः सर्वे भेदविवर्जिताः ।
अन्यूनानधिकाश्चैव गुणैः सर्वैश्च सर्वतः ।
देहिदेहभिदा चात्र नेश्वरे विद्यते क्वचित् ।
तत्स्वीकारादिशब्दस्तु हस्तस्वीकारवत् स्मृतः ।
वैलक्षण्यान्न वा तत्र ज्ञानमात्रार्थमीरितम् ।

केवलैश्वर्यसंयोगादीश्वरः प्रकृतेः परः ।
जातो गतस्त्विदं रूपं तदित्यादि व्यवह्रियते' । इति महावाराहे ।
'एकमेवाद्वितीयं' 'नेह नानास्ति किञ्चन' 'एवं धर्मान् पृथक् पश्यन्' इत्यादि च ।

तस्यैवास्थूलत्वाद्यैश्वर्ययोगात् ।

तथा च कौर्मे–

'अस्थूलश्चानणुश्चैव स्थूलोऽणुश्चैव सर्वतः ।
अवर्णः सर्वतः प्रोक्तः श्यामो रक्तान्तलोचनः ।
ऐश्वर्ययोगाद्भगवान् विरुद्धार्थोऽभिधीयते ।
तथाऽपि दोषाः परमे नैवाऽहार्याः कथञ्चन ।
गुणा विरुद्धा अपि तु समाहार्याश्च सर्वतः ।' इति ।

विष्णुधर्मोत्तरे च–

'गुणाः सर्वेऽपि युज्यन्ते ह्यैश्वर्यात् पुरुषोत्तमे ।
दोषाः कथञ्चिन्नैवात्र युज्यन्ते परमो हि सः ।
गुणदोषौ माययैव केचिदाहुरपण्डिताः ।
न तत्र माया मायी वा तदीयौ तौ कुतो ह्यतः ।
तस्मान्न मायया सर्वं सर्वमैश्वर्यसम्भवम् ।
अमायो हीश्वरो यस्मात् तस्मात् तं परमं विदुः' । इति ।। १ ।।

यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।
तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ।। ३ ।।

यस्यावयवसंस्थानैः । 'नाभ्या आसीदन्तरिक्षम्' इत्यादि । **सत्त्वं** साधुगुणवत्त्वं ज्ञानबलरूपं वा ।

'बलज्ञानसमाहारः सत्त्वमित्यभिधीयते' इति मात्स्ये ।। ३ ।।

एतन्नानावताराणां निधानं बीजमव्ययम् ।
यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ।। ५ ।।

**निधानं** अत्रैकीभवन्त्यन्त इति । **अंशांशेन** सामर्थ्यैकदेशेन ।

ब्राह्मे च– 'यच्छक्त्यैकांशसम्भूतं जगदेतच्चराचरम्' इति ।। ५ ।।

स एव प्रथमं देवः कौमारं सर्गमास्थितः ।
चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम् ।। ६ ।।

'कुमारो नाम भगवान् स्वयं स्वस्मादजायत ।
दिदेश ब्रह्मणे ब्रह्म ब्रह्मचर्ये स्थितो विभुः ।
यस्मात् सनत्कुमारश्च ब्रह्मचर्यमपालयत् ।
यः स्थाणोः स्थाणुतां प्रादाद् भगवानव्ययो हरिः' । इति ब्राह्मे ।। ६ ।।

तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ।। ८ ।।

'अवतारस्तृतीयोऽस्य देवर्षिः प्रथितो दिवि ।
महिदासस्त्वैतरेयो यस्तन्त्रं नारदेऽवदत्' । इति च ।। ८ ।।

तुर्यं धर्मकलासर्गे नरनारायणावृषी ।
भूत्वाऽऽत्मोपशमोपेतमकरोद्दुश्चरं तमः ।। ९ ।।

धर्मकलासर्गः धर्मे स्वांशावतारः । लोकदृष्ट्याऽऽत्मशमोपेतम् ।। ९ ।।

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचाऽऽसुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम् ।। १० ।।

तन्त्रं **साङ्ख्यं** वेदानुसारि ।

पाद्मे च–

'कपिलो वासुदेवाख्यस्तन्त्रं साङ्ख्यं जगाद ह ।
ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ।
तथैवाऽऽसुरये सर्ववेदार्थैरुपबृंहितम् ।
सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह ।
साङ्ख्यमाऽऽसुरयेऽन्यस्मै कुतर्कपरिबृंहितम्' । इति ।। १० ।।

षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ।। ११ ।।

**आन्वीक्षिकीं** तत्त्वविद्याम्–

'आन्वीक्षिकी कुतर्काख्या तथैवाऽऽन्वीक्षिकी परा' इति मात्स्ये ।। ११ ।।

ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।
दुग्धवानोषधीर्विप्रास्तेनायं च उशत्तमः ।। १४ ।।

पृथुशरीराविष्टरूपम्–

'आविवेश पृथुं देवः शङ्खी चक्री चतुर्भुजः' इति पाद्मे ।

उश इच्छायाम् । सत्यकामः ।। १४ ।।

ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ।। २१ ।।

रामात् पूर्वमप्यस्ति व्यासावतारः–

'तृतीयं युगमारभ्य व्यासो बहुषु जज्ञिवान्' इति कौर्मे ।। २१ ।।

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरद्भरम् ।। २३ ।।

आवेशो बलभद्रे ।

'शङ्खचक्रभृदीशेशः श्वेतवर्णो महाभुजः ।
आविष्टः श्वेतकेशात्मा शेषांशं रोहिणीसुतम्' ।
इति महावाराहे ।। २३ ।।

ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ।। २४ ।।

'मोहनार्थं दानवानां बालरूपं पथि स्थितम् ।
पुत्रं तं कल्पयामास मूढबुद्धिर्जिनः स्वयम् ।
ततः सम्मोहयामास जिनाद्यानसुरांशकान् ।
भगवान् वाग्भिरुग्राभिरहिंसावाचिभिर्हरिः' । इति ब्रह्माण्डे ।। २४ ।।

अवतारा ह्यसङ्ख्येया हरेः सत्त्वनिधेर्द्विजाः ।
यथा विदासिनः कुल्याः सरसः स्युः सहस्रशः ।। २६ ।।

**विदासिनः** उन्नतात् भिन्नाद् वा । 'त्रिविधाः पुरुषा लोके नीचमध्य-विदासिनः' इति ब्राह्मे ।

'चतुर्धा वर्णरूपेण जगदेतद् विदासितम्' इति च ।। २६ ।।

एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ।। २८ ।।

एते प्रोक्तावताराः । मूलरूपी कृष्णः स्वयमेव ।

'जीवास्तत्प्रतिबिम्बांशा वराहाद्याः स्वयं हरिः ।
दृश्यते बहुधा विष्णुरैश्वर्यादिक एव तु' । इति ब्रह्मवैवर्ते ।। २८ ।।

एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः ।
मायागुणैर्विरचितं महदादिभिरात्मनि ।। ३० ।।

एतत् जडरूपम् ।

'नारायणवराहाद्याः परमं रूपमीशितुः ।
जैवं तु प्रतिबिम्बाख्यं जडमारोपितं हरेः ।
एवं हि त्रिविधं तस्य रूपं विष्णोर्महात्मनः' । इति पाद्मे ।। ३० ।।

यथा नभसि मेघौघा रेणुर्वा पार्थिवोऽनिले ।
एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ।। ३१ ।।

दृश्यत्वं जडरूपत्वम् ।

'अविज्ञाय परं देहमानन्दात्मानमव्ययम् ।
आरोपयन्ति जनिमत् पञ्चभूतात्मकं जडम्' । इति स्कान्दे ।। ३१ ।।

अतः परं यदव्यक्तमव्यूढगुणबृंहितम् ।
अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः ।। ३२ ।।

**अतः परं** जडेश्वररूपयोः परम् । **अव्यूढगुणबृंहितं** अनादिकाले कदाचिदप्यनपगतसत्वादिगुणबृंहितम् । अदृष्टाश्रुतवस्तुत्वात् पुनर्भवः ।। ३२ ।।

यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ।
अविद्ययाऽऽत्मनि कृते इति तद्ब्रह्मदर्शनम् ।। ३३ ।।

अविद्यया जीवे कृते परमेश्वरे प्रतिषिद्धे इति ब्रह्मदर्शनम् ।। ३३ ।।

यद्येषोपरता देवी माया वैशारदी मतिः ।
सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते ।। ३४ ।।

विशारदः परमेश्वरः । तन्मतिः **माया** । यदा नैनं शोचयामीत्युपरता तदा सम्पन्न एव ।। ३४ ।।

एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ।
वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ।। ३५ ।।

'अप्रयत्नात् स्वतन्त्रत्वात् फलानां च विवर्जनात् ।
क्रियायाश्च स्वरूपत्वादकर्तेति च तं विदुः ।
कर्तृत्वं भ्रान्तिजं प्राहुरतत्तत्त्वविदो जनाः ।
ऐश्वर्यजं तु कर्तृत्वं सम्यक् तत्तत्त्ववेदिनः' । इति पाद्मे ३५ ।।

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
उत्तमश्लोकचरितं चकार भगवानृषिः ।। ४० ।।

'धर्मः कं शरणं गतः' इत्यस्य तमेव व्यासरूपिणमिति परिहार उच्यते– **'इदं भागवतम्'** इत्यादिना ।। ४० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे तृतीयोध्यायः ।।

## चतुर्थोऽध्यायः

तस्य पुत्रो महायोगी समदृक् निर्विकल्पकः ।
एकान्तगतिरुन्निद्रो गूढो मूढ इवेयते ।। ४ ।।

निर्विकल्पकः । मदीयं तदीयमिति भेदमपहाय सर्वमीश्वराधीनमिति विज्ञाय स्थितः ।

'साम्यमीश्वररूपेषु सर्वत्र तदधीनताम् ।
पश्यति ज्ञानसम्पत्त्या विनिद्रो यः स योगवित्' । इति ब्राह्मे ।।४।।

सूत उवाच—

द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
जातः पराशराद्योगी वासव्यां कलया हरेः ।। १३ ।।

तृतीये द्वापरे युगे पर्यवसानं प्राप्ते सति ।। १३ ।।

दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुसा ।
सर्ववर्णाश्रमाणां यद् दध्यौ चिरममोघदृक् ।। १७ ।।

नित्यज्ञानस्य चिद्दृष्टिर्लोकदृष्ट्यपेक्षया–

'सर्वज्ञोऽप्यज्ञवद्देवः सर्वशक्तिरशक्तवत् ।
प्रत्यापयति लोकानामज्ञानं मोहनाय च' । इति कौर्मे ।। १७ ।।

स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ।। २४ ।।

'भारतं ब्राह्मणादीनां वेदार्थपरिवित्तये ।
त एव वेदास्त्वन्येषां नर्ते तत्कस्यचित् सुखम्' । इति स्कान्दे ।।२४।।

एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ।
सर्वात्मकेनाऽपि यदा नातुष्यद् हृदयं ततः ।। २५ ।।

नातिप्रसन्नहृदयः सरस्वत्यास्तटे शुचौ ।
वितर्कयन् विविक्तस्थ इदं चोवाच धर्मवित् ।।२६।।

अतोषोऽनलम्बुद्धिः ।

'श्रुत्वा कथां न तुष्यामि हरेरद्भुतकर्मणः' इति मात्स्ये ।

अप्रसादश्च स एव ।

'कः प्रसन्नो भवेद् दिव्यां कथां शृण्वन् हरेः पराम्' इति च ।।२५,२६।।

धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ।
मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ।। २७ ।।

आचारापेक्षया धृतव्रतत्वादिपरिपूर्णस्य ।। २७ ।।

अथापि बत मे दैह्यो ह्यात्मा चैवाऽत्मना विभुः ।
असम्पन्न इवाऽभाति ब्रह्मवर्चस्विसत्तमः ।। २९ ।।

**दैह्यः** देहरूपः । **आत्मना** विभुः स्वत एव व्याप्तः ।

'तस्य सर्वावतारेषु न विशेषोऽस्ति कश्चन ।
देहदेहिविभेदश्च न परे विद्यते क्वचित् ।

सर्वेऽवतारा व्याप्ताश्च सर्वे सूक्ष्माश्च तत्त्वतः ।
ऐश्वर्ययोगाद् भगवान् क्रीडत्येवं जनार्दनः' । इति महासंहितायाम् ।

अवताप्रयोजनासम्पत्त्याऽसम्पन्न इव । ब्रह्मवर्चसयुक्तानामुत्तमः ।।२९।।

किं वा भागवता धर्मा न प्रायेण निरूपिताः ।
प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ।। ३० ।।

पुनरपेक्षितत्वान्न प्रायेण निरूपिताः ।

'यथा तु भारते देवो न तथाऽन्येषु केषुचित् ।
उच्यते न तथाऽपीशं जानन्त्यज्ञा जनार्दनम्' । इति स्कान्दे ।।३०।।

तस्यैवं खिन्नमात्मानं मन्यमानस्य खिद्यतः ।
कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ।। ३१ ।।

खेदोऽनलम्बुद्धिः ।

'अतुष्टिरप्रसादश्च खेदोऽतृप्तिस्तथैव च ।
अनलत्वं वदन्त्येते सर्वे पर्यायवाचकाः' । इति ब्राह्मे ।

मन्यमानस्य स्वेच्छया ।। ३१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे चतुर्थोऽध्यायः ।।



## पञ्चमोऽध्यायः

नारद उवाच—

पाराशर्य महाभाग भवतः कच्चिदात्मना ।
परितुष्यति शारीर आत्मा मानस एव वा ।। २ ।।

शारीरमानसयोरभेदादुभयथाऽपि युज्यते । स्वतन्त्रत्वादात्मनैव ह्यलम्बुद्धिः ।। २ ।।

जिज्ञासितमधीतं च ब्रह्म यत्तत् सनातनम् ।
तथाऽपि शोचस्यात्मानमकृतार्थ इव प्रभो ।। ४ ।।

**शोचसि** प्रकाशयसि । 'अजस्रेण शोचिषा शोशुचानः' इति श्रुतिः ।।४।।

व्यास उवाच—

अस्त्येव मे सर्वमिदं त्वयोक्तं, तथाऽपि नात्मा परितुष्यते मे ।
तत्मूलमव्यक्तमगाधबोधं, पृच्छामहे त्वाऽऽत्मभवात्मभूतम् ।। ५ ।।

'ज्ञानशक्तिस्वरूपोऽपि ह्यज्ञाशक्तं वदेद्धरिः ।
अज्ञानां मोहनायेशस्तेन मुह्यन्ति मोहिताः' । इति पाद्मे ।। ५ ।।

यथा धर्मादयो ह्यर्था मुनिवर्यानुवर्णिताः ।
न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ।। ९ ।।

धर्मादीनामल्पकथनेन पूर्तिः । न वासुदेवमहिम्नोऽतिकथितस्यापि ।।९।।

न यद्वचश्चित्रपदं हरेर्यशो
जगत्पवित्रं न गृणीत कर्हिचित् ।
तद्वायसं तीर्थमुशन्ति मानसा
न यत्र हंसा न्यपतन् मिमङ्क्षया ।। १० ।।

**वायसं तीर्थं** वयोमात्रानुजीवि शास्त्रम् ।। १० ।।

नैष्कर्म्यमप्यच्युतभाववर्जितं
न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे
न चार्पितं कर्म यदप्यकारणम् ।। १२ ।।

परोक्षज्ञानं न शोभते । अपरोक्षज्ञानं न भक्त्या विनोत्पद्यते ।
'यस्य देवे परा भक्तिः' 'यमेवैष वृणुते तेन लभ्यः' 'यद्वासुदेवशरणा विदुरञ्जसैव' इत्यादेः ।। १२ ।।

अतो महाभाग भवानमोघदृक्
शुचिश्रवाः सत्यरतो धृतव्रतः ।
उरुक्रमस्याखिलबन्धमुक्तये
समाधिनाऽनुस्मर यद्विचेष्टितम् ।। १३ ।।

**शुचिश्रवाः** विष्णुः । **समाधिना** समाधिभाषया । स्मरणं ग्रन्थकृतिः ।
'स्मरन्ति च' इत्यादेः ।। १३ ।।

जुगुप्सितं धर्मकृतेऽनुशासनं
स्वभावरक्तस्य महान् व्यतिक्रमः ।

यद्वाक्यतो धर्म इतीतरस्थितो
न मन्यते तस्य निवारणं जनः ।। १५ ।।

प्रवृत्तिधर्मकृते ।। १५ ।।

विचक्षणोऽस्यार्हति वेदितुं विभो-
रनन्तपारस्य निवृत्तितः सुखम् ।
प्रवर्तमानस्य गुणैरनात्मन-
स्ततो भवान् दर्शय चेष्टितं विभोः ।। १६ ।।

अनन्तपारस्य विभोः सकाशाद् यत् सुखम् ।। १६ ।।

इदं हि विश्वं भगवानिवेतरो
यतो जगत्स्थाननिरोधसम्भवः ।
तद्धि स्वयं वेद भवांस्तथापि
प्रादेशमात्रं भवतः प्रदर्शितम् ।। २० ।।

इतरोऽपि भगवान् विश्वमिव । स्वातन्त्र्यात् ।। २० ।।

तस्मिंस्तदा लब्धरुचेर्महामते
प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाऽहमेतत् सदसत् स्वमायया
पश्ये मयि ब्रह्मणि कल्पितं परे ।। २७ ।।

मयि स्थिते ब्रह्मणि । स्थीयतामत्रेतीश्वरेच्छया कल्पितम् ।। २७ ।।

त्वमप्यदभ्रश्रुत विश्रुतं विभोः
समाप्यते येन विदां बुभुत्सितम् ।

प्रख्याहि दुःखैर्मुहुरर्दितात्मनां
सङ्क्लेशनिर्वाणमुशन्ति नान्यथा ।। ४० ।।

त्वमीश्वरोऽपि ।। ४० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे पञ्चमोऽध्यायः ।।



## षष्ठोऽध्यायः

स्फीतान् जनपदान् तत्र पुरग्रामव्रजाकरान् ।
खेटान् पट्टनवाटीश्च वनान्युपवनानि च ।। ११ ।।

'मृगयाजीविनां खेटो वाटी पुष्पोपजीविनाम् ।
ग्रामो बहुजनाकीर्णो राजराजाश्रयं पुरम् ।
जलस्थलायतिस्फीतं पट्टनं कीर्त्यते बुधैः' । इति स्कान्दे ।। ११ ।।

प्रेमातिभारनिर्भिन्नपुलकाङ्गोऽतिनिर्वृतः ।
आनन्दसंप्लवे लीनो नापश्यमुभयं मुने ।। २१ ।।

**उभयं** द्वितीयं **नापश्यं** तमेवापश्यम् ।। २१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे षष्ठोऽध्यायः ।।



## सप्तमोऽध्यायः

सूत उवाच—

ब्रह्मनद्याः सरस्वत्याः आश्रमः पश्चिमे तटे ।
शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्धनः ।। २ ।।

शम्यां प्रास्य तत्र शालां कृत्वा यत्र यज्ञः क्रियते स **शम्याप्रासः** ।।२।।

भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत् पुरुषं पूर्णं मायां च तदपाश्रयाम् ।। ४ ।।

भक्तियोगेन सम्यक् प्रणिहिते लोकानां मनसि ।। ४ ।।

भर्तुः प्रियं द्रौणिरिति स्म पश्यन्
कृष्णासुतानां स्वपतां शिरांसि ।
अपाहरद्विप्रियमेतदस्य
जुगुप्सितं कर्म विगर्हयन्ती ।। १४ ।।

माता शिशूनां निधनं सुतानां
निशम्य घोरं परितप्यमाना ।
तदाऽरुदद् बाष्पकलाकुलाक्षी
तां सान्त्वयन्नाह किरीटमाली ।। १५ ।।

स्वात्मन एव विप्रियं न भर्तुः । प्रयोजनाभावाद् विप्रियमिव च अस्य (तस्य) प्रियमिति हि प्रस्वापोक्तम् ।।

स्वप्नोऽयम्–

'पार्थानुयातमात्मानं द्रौणिः स्वप्ने ददर्श ह ।
बन्धनं चाऽत्मनस्तत्र द्रौपद्या चैव मोक्षणम् ।। इति स्कान्दे ।

तस्मान्नैषीकविरोधः ।। १४-१५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे सप्तमोऽध्यायः ।।



## अष्टमोऽध्यायः

तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ।। २३ ।।

भक्तियोगविधानविषयम् ।। २३ ।।

विपदः सन्तु नः शश्वत् तत्र तत्र जगत्पते ।
भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ।। २८ ।।

अपुनर्भवं दर्शयति ।। २८ ।।

मन्ये त्वां कालमीशानं अनादिनिधनं परम् ।
समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ।। ३१ ।।

तत्तद्योग्यतया समत्वम् ।। ३१ ।।

ते वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः ।
भवतो दर्शनं यर्हि हृषीकाणामिवेशितुः ॥ ४१ ॥

यर्हि भवतो दर्शनं तदा यदूनामस्माकं च नामरूपे ॥ ४१ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे अष्टमोऽध्यायः ॥



## नवमोऽध्यायः

नैनो राज्ञः प्रजाभर्तुः धर्मो युद्धे वधो द्विषाम् ।
इति मे न तु बोधाय कल्पते शाश्वतं वचः ॥ ९ ॥

'यः पदातिं हन्ति स भवति चातुर्मास्ययाजी यः सादिनं सोऽग्निष्टोमस्य यो हन्ति गजरथौ सोऽश्वमेधराजसूयाभ्याम्' इत्यादि शाश्वतं वचः ॥९॥

शितविशिखहतो विशीर्णदंसः क्षतजपरिप्लुत आततायिनो मे ।
प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् मुदे मुकुन्दः ॥ ४९ ॥

'असङ्गश्चाव्यथोऽभेद्योऽनिग्राह्योऽशोष्य एव च ।
विद्धोऽसृगश्वितो बद्ध इति विष्णुः प्रदृश्यते ।
असुरान् मोहयन् देवः क्रीडयैव सुरेष्वपि ।
मानुषान् मध्यया दृष्ट्या न मुक्तेषु कथञ्चन' । इति स्कान्दे ॥४९॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे नवमोध्यायः ॥

## दशमोऽध्यायः

निशम्य भीष्मोक्तमथाच्युतोदितं
प्रवृत्तिविज्ञानविधूतविभ्रमः।
शशास गामिन्द्र इवाजिताश्रयः
प्रणिध्युपात्तामनुजानुवर्तितः ।। ४ ।।

'अमात्या मन्त्रिणो दूताः श्रेणयश्च पुरोहिताः ।
पुरं जनपदं चेति सप्त प्रणिधयः स्मृताः' । इति ब्राह्मे ।। ४ ।।

अश्रूयन्ताऽशिषः सत्यास्तत्र तत्र द्विजेरिताः ।
नानुरूपाऽनुरूपाश्च निर्गुणस्य गुणात्मनः ।। २० ।।

'पालनानुग्रहजयान् गौणेऽण्डे संस्थितो हरिः ।
करोत्यसौ बहिःसंस्थो न करोतीव निर्गुणः' । इति पाद्मे ।।

अतो **नानुरूपानुरूपाश्च** ।। २० ।।

स्त्रिय ऊचुः—

स वै किलायं पुरुषः पुरातनो
य एक आसीदविशेष आत्मनि ।
अग्रे गुणेभ्यो जगदात्मनीश्वरे
निमीलितात्मा निशि सुप्तशक्तिषु ।। २२ ।।

सत्वादिशक्तिषु ।। २२ ।।

स एव भूयो निजवीर्यचोदितां
स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।

अनामरूपात्मनि रूपनामनी
विधित्समानोऽनुससार शास्तिकृत् ।। २३ ।।

'श्रीर्भूर्दुर्गेति या भिन्ना जीवमाया महात्मनः ।
आत्ममाया तदिच्छा स्याद् गुणमाया जडात्मिका' ।
इति महासंहितायाम् ।।

'अप्रसिद्धेस्तद्गुणानामनामाऽसौ प्रकीर्तितः ।
अप्राकृतत्वात् रूपस्याप्यरूपोऽसावुदीर्यते' । इति वासुदेवाध्यात्मे ।।२३।।

यदा ह्यधर्मेण तमोऽधिका नृपाः
जीवन्ति तत्रै(व)ष हि सात्वतः किल ।
धर्मं भगं सत्यमृतं दयां यशो
भवाय रूपाणि दधद्युगे युगे ।। २६ ।।

सात्त्विकानामनुग्राहकः ।

'अगुणोऽपि परो देवो ह्यनुगृह्णाति सात्त्विकान् ।
देवांस्तु मानवान् मध्यानुपेक्ष्य क्लेश्यतेऽसुरान्' । इति ब्रह्मदर्शने ।

'सात्त्वतः सात्त्विकस्नेहात् सत्त्वो ह्यानन्दरूपतः' इति ब्रह्मवैवर्ते ।

'धारकत्वाद्धर्मरूपो ह्यैश्वर्यादिर्भगो ह्यसौ ।
सत्य आनन्दरूपत्वादृतो ज्ञानस्वरूपतः ।
यशो ह्यलं प्रसिद्धत्वाद् दया हि करुणाकरः' । इति तन्त्रभागवते ।

एवंविधगुणस्वरूपाणि रूपाणि दधद् युगे युगे ।। २६ ।।

एताः पुरा स्त्रीत्वमवाप्तये समं
निरस्तशोकं बत साधु कुर्वते ।
यासां गृहात्पुष्करलोचनः पतिः
न जात्वपैत्याकृतिभिः हृदि स्पृशन् ।। ३१ ।।

'अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे ।
भर्तारं च जगद्योनिं वासुदेवमजं विभुम्' । इति महाकौर्मे ।। ३१ ।।

अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ।
परेभ्यः शङ्कितः स्नेहात् प्रायुङ्क्त चतुरङ्गिणीम् ।। ३३ ।।

स्नेहमात्रात् ।। ३३ ।।

तत्र तत्र च तत्रत्यैर्हरिः प्रत्युद्यतार्हणः ।
सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा ।। ३७ ।।

**गविष्ठ** आदित्यः ।

'असौ वाव गविष्ठोऽप्सूदेत्यप्स्वस्तमेति' इति माध्यन्दिनायनश्रुतिः ।। ३७ ।।

यर्ह्यम्बुजाक्षाश्वति माधवो भवान्
कुरून् मधून् वाऽथ सुहृद्दिदृक्षया ।
तत्राब्दकोटिप्रतिमः क्षणो भवेद्
रविं विनाऽक्ष्णामिव नस्तवाच्युत ।। ४६ ।।

कुरूणां मधूनां च नः ।। ४६ ।।

**यत्तदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ।**
**न युज्यते सदाऽऽत्मस्थैर्यथा बुद्धिस्तदाश्रया ।। ७५ ।।**

तदाश्रया बुद्धिः । तज्ज्ञानिनामपि प्रकृतिस्थानां न तत्सङ्गः । किमु तस्येति व्यत्यासदृष्टान्तः ।

'व्यत्यासोऽनन्वयश्चैव प्रसिद्धोऽभूत एव च ।
सर्वसंहारिकश्चेति दृष्टान्तः पञ्चधा स्मृतः' । इति ब्राह्मे ।। ७५ ।।

**तं मेनिरे खला मूढाः स्त्रैणं चानुव्रतं हरेः ।**
**अप्रमाणविदो भर्तुरीश्वरं मतयो यथा ।। ७६ ।।**

**मतयो यथा** यथामति **मेनिरे** ।। ७६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे दशमोऽध्यायः ।।



## एकादशोऽध्यायः

ब्राह्मणा ऊचुः—

**पार्थ प्रजाविता साक्षादिक्ष्वाकुरिव मानवः ।**
**ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा ।। १९ ।।**

रामो दाशरथिर्यथा । अधिकदृष्टान्तः ।

'ऊर्णनाभ्यादिको विष्णोर्विष्णुर्विष्णोस्तथैव च ।
विष्णुर्जीवस्य दृष्टान्त ऊनसाम्याधिकः क्रमात्' । इति ब्राह्मे ।।१९।।

स राजपुत्रो ववृधे आशु शुक्ल इवोडुपः ।
आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ।। ३१ ।।

'पूरयन्ति दिशः सोमं देवा गावः सरस्वती' इति गारुडे ।। ३१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे एकादशोऽध्यायः ।।



## द्वादशोऽध्यायः

प्रत्युज्जग्मुः प्रहर्षेण प्राणांस्तन्व इवाऽगतान् ।
अभिसङ्गम्य विधिवत्परिष्वङ्गाभिवन्दनैः ।। ५ ।।

'तत्प्राणे प्रपन्न उदतिष्ठत्' इति श्रुतिः ।। ५ ।।

इत्युक्तो धर्मराजेन सर्वं तत्समवर्णयत् ।
यथानुभूतं भ्रमता विना यदुकुलक्षयम् ।। १२ ।।

यदुकुलक्षयं एष्यत् ।

'शापं श्रुत्वा ब्राह्मणानामुद्धवः खिन्नमानसः ।
उदासीनं तथा कृष्णमिव सुप्रीतमेव च ।
नशिष्यमाणं स्वकुलं स्वर्यियासुं च केशवम् ।
ज्ञात्वा पप्रच्छ भगवत्स्वरूपं तमुपह्वरे ।
मैत्रेयोऽपि तदैवाऽगाद् जिज्ञासुस्तत्त्वमुत्तमम् ।
तयोरदात् स भगवान् ज्ञानं निर्मलमञ्जसा ।

षड्विंशद्वत्सरात् पूर्वं स्वर्गतेः पुरुषोत्तमः ।
प्रेषयामास च हरिरुद्धवं बदरीमनु ।
कलापग्रामिणां वक्तुमेतत् तत्त्वमशेषतः ।
विदुरं तीर्थयात्रास्थमन्तराले स उद्धवः ।
दृष्ट्वा नशिष्यमाणं च कुलं जिगमिषुं हरिम् ।
कथयित्वा बदर्यां च कलापग्रामवासिनाम् ।
प्रोच्य तत्त्वमशेषेण वासुदेवमुखोद्गतम् ।
षड्विंशद्वर्षगमने पुनरागतिमात्मनः ।
तेषामुक्त्वा पुनः कृष्णसन्निधौ विचचार ह ।
मैत्रेयो विदुरायैतदूचिवान् कृष्णचोदितः ।
विदुरः पाण्डवानां च विना यदुविनाशनम् ।
षड्विंशद्वर्षतः पूर्वं ज्ञात्वाऽप्यप्रियमेव तत् ।
नावोचद् विदुरो धीमांस्तस्मान्नाप्रियमावदेत्' । इति पाद्मे ।।

'तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः' । इति चोपरि ।

'विदुरं चागतं पुनः' । इति च ।

भारते चैकविंशद्वर्षात् पूर्वं विदुरस्य युधिष्ठिरभाव उक्तः ।। १२ ।।

अबिभ्रदर्यमा दण्डं यथाघमघकारिषु ।
यावद्दभार शूद्रत्वं शापाद्वर्षशतं यमः ।। १५ ।।

योऽर्यमा दण्डमबिभ्रत् स वर्षशतं यावच्छूद्रत्वं बभार ।

'न देवानां न दैवीनां सामस्त्येन जनिर्भुवि ।
अंशांशेनैव जायन्ते सर्वे त्वाजानजादयः' ।। १५ ।।

प्रतिक्रिया न यस्येह कुतश्चित् कर्हिचित् प्रभो ।
स एष भगवान् कालः सर्वेषां नः समागतः ।। २० ।।

'संहर्ता भगवान् विष्णुः काल इत्यभिधीयते ।
अथवा गुणसर्वस्वं कालशब्दो व्यनक्ति हि' । इति हि स्कान्दे ।।२०।।

अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान् ।
इतोऽर्वाक्प्रायशः कालः पुंसां गुणविकर्षणः ।। २८ ।।

**स्वैरज्ञातगतिः** विविक्तगतिः ।। २८ ।।

अजातशत्रुः कृतमैत्रो हुताग्निर्विप्रान्नत्वा तिलगोवस्त्ररुग्मैः ।
गृहान्प्रविष्टो गुरुवन्दनाय न चापश्यत्पितरौ सौबलीं च ।।३१।।

**पितरौ** कुन्तीधृतराष्ट्रौ । न चापश्यत् । तस्य मनसि तेषां विपद्भावो वभूव । अन्यथा महाभारतविरोधात् ।

स्कान्दे च–

'भीमसन्तर्जितो राज्ञस्त्वनुज्ञां प्राप्य यत्नतः ।
धृतराष्ट्रो वने वासमकरोद् वत्सरत्रयम् ।
विदुरस्तद्दिदृक्षार्थमागतेषु वनं पुरात् ।
पाण्डवेषु तु राजानं प्रविश्यैकत्वमागतः ।
ततो दावाग्निना दग्धं धृतराष्ट्रं च सौबलीम् ।
श्रुत्वा कुन्तीं च चिन्तां ते प्रापुः पाण्डुसुतास्तदा' ।

'तांस्तदा नारदो विद्वान् शमयामास धर्मवित् ।
उक्त्वोत्तमां गतिं तेषां निष्ठां तात्कालिकीं तथा' । इत्यादि ।। ३१ ।।

तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः ।
गावद्गणे क नस्तातो वृद्धो हीनश्च नेत्रयोः ।
अम्बा वा हतपुत्राऽऽर्ता पितृव्यः क गतः सुहृत् ।।३२।।

ब्रह्माण्डे च–

'धृतराष्ट्रे मृते सूतः सञ्जयः पाण्डुसूनवे ।
गतिं शशंस कुन्त्याश्च गान्धारीधृतराष्ट्रयोः' । इत्यादि ।

पितृव्योऽपि धृतराष्ट्र एव । द्विरुक्तिस्तात्पर्यार्था ।

'यत्राधिकं तत्परता बहुवारमपि ध्रुवम् ।
तद्वदन्ति महाप्राज्ञा लोकवेदानुसारतः' । इति ब्रह्मवैवर्ते ।। ३२ ।।

पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून् ।
अरक्षतां व्यसनतः पितृव्यौ क गतावितः ।। ३४ ।।

पितृव्यौ गान्धारीधृतराष्ट्रौ ।। ३४ ।।

सञ्जय उवाच—

अहं च व्यंसितो राजन् पित्रोर्वः कुलनन्दन ।
न वेद साध्व्या गान्धार्या मुषितोऽस्मि महात्मभिः ।।३७।।

मुषितोऽस्मि इति प्रलापः ।। ३७ ।।

युधिष्ठिर उवाच—

नाहं वेद गतिं पित्रोर्भगवान् कगतावितः ।
अम्बा वा हतपुत्राऽऽर्ता क गता च तपस्विनी ।
कर्णधार इवापारे सीदतां पारदर्शनः ।। ४० ।।

क्व गतावित्यदृष्टापेक्षया ।। ४० ।।

यन्मन्यसे ध्रुवं लोकमध्रुवं चाथवोभयम् ।
सर्वथा हि न शोच्यास्ते स्नेहादन्यत्र मोहजात् ।। ४४ ।।

अपरिहार्यत्वादशोच्याः ।। ४४ ।।

धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया ।
दक्षिणेन हिमवता ऋषीणामाश्रमं गतः ।। ५१ ।।

गमनकाले सह भ्रात्रा ।। ५१ ।।

स्नात्वा त्रिषवणं तस्मिन् हुत्वा चाग्नीन् यथाविधि ।
अब्भक्ष उपशान्तात्मा स आस्ते(ऽ)विगतेक्षणः ।। ५३ ।।

आस्त इत्याद्यतीतार्थे ।

'स एष तर्ह्यध्यास्त आसनं पार्थिवोचितम्' इत्यादिवत् ।

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन' ।
इति महाव्याकरणे ।

'व्यासादयो वर्तमानमतीतानागते तथा ।
व्यत्यस्यापि वदन्त्यद्धा मोहनार्थं दुरात्मनाम् ।।
पौर्वापर्यं यतो नैव सदैव परिवर्तनात् ।
अतश्च व्यत्ययादेतद्वदन्ति ज्ञानचक्षुषः' । इति ब्राह्मे ।। ५३ ।।

विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ।
ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ।। ५५ ।।

'विज्ञानात्मा विरिञ्चोऽयं यस्तस्मिंल्लीयते जगत् ।
यादांसि सागरे यद्वत् स क्षेत्रज्ञे जनार्दने ।
हृदिस्थे च स च व्याप्ते स्वात्मन्येकीभवत्युत ।
प्रलयौ भेदवन्तौ तु पूर्वोक्तौ ब्रह्मकृष्णयोः ।
अन्तस्थस्य बहिष्ठे तु तस्य तस्मिन्नभेदतः' । इति ब्रह्मवैवर्ते ।

काले तस्य तत्र लयो भविष्यतीति ध्यानमात्रं विलापनम् ।

'अविद्यमानमपि यो ध्यायेतैवं विनिश्चितः ।
उच्यते तस्य कर्तेति तथैव मुनयोऽमलाः ।
जगद्विलापयामासुरित्युच्यन्तेऽथ तत्स्मृतेः ।
नच तत्स्मृतिमात्रेण लयो भवति निश्चितम्' । इति हि नारदीये ।

'स्वरूपं जायमानं च आकाशं च घटे द्विधा ।
स्वरूपं जायमाने तु घटे निर्भेदमेव हि ।
भिन्नवद् व्यवहारस्य समर्थं तल्लये च तत् ।
तद्वदेवावतारेषु देहस्थश्च हरिः स्वयम् ।
भिन्नवद् व्यवहाराय शक्तो लीने जगत्यपि ।
स एव पूर्ववज्ज्ञेयो निर्विशेषेण केशवः ।
जायमानं घटे जाते जायते तल्लये तु न ।
तस्माद्भिन्नं महाकाशादेवं जीवोऽपि कीर्तितः ।
उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम् ।
न चाभिन्नत्वमीशेन चिन्मात्रत्वं च युज्यते' । इति ब्रह्मतर्के ।।५५।।

ध्वस्तमायागुणोद्रेको निरुद्धकरणाशयः ।
निवर्तिताखिलाहार आस्ते स्थाणुरिवाधुना ।। ५६ ।।

'त्रिगुणात्मिका तथा ज्ञानं विष्णुशक्तिस्तथैव च ।
मायाशब्देन भण्यन्ते शब्दतत्त्वार्थवेदिभिः' । इति नाममहोदधौ ।।

अत्र सत्वादयो मायागुणाः ।। ५६ ।।

स वा अद्यतनाद् राजा परतः पञ्चमेऽहनि ।
कलेवरं हास्यति ह तच्च भस्मीभविष्यति ।। ५७ ।।

'परावरे तथैवाऽरादुभयार्थाभिधायिनः' इति च ।। ५७ ।।

विदुरस्तु तदाश्चर्यं निशाम्य कुरुनन्दन ।
हर्षशोकयुतस्तस्माद् गन्ता तीर्थनिषेवकः ।। ५९ ।।

एतत्सर्वं पूर्वमेव ज्ञात्वा तस्मादेव कारणात् विदुरस्तीर्थानि ययौ ।।५९।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे द्वादशोऽध्यायः ।।



## त्रयोदशोऽध्यायः

व्यतीताः कतिचिन् मासास्तदा तु शतशो नृपः ।
ददर्श घोररूपाणि निमित्तानि भृगूद्वह ।। २ ।।

मासशब्देनाहान्युच्यन्ते । तथाहि महाभारते–

'अहस्तु मासशब्दोक्तं यत्र चिन्तायुतं व्रजेत् ।
एवं संवत्सराद्यं च विपरीते विपर्ययः' । इति नाममहोदधौ ।।२।।

अपि देवर्षिणाऽऽदिष्टः स कालः प्रत्युपस्थितः ।
यदाऽऽत्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति ।। ८ ।।

अङ्गं पृथिवीम् ।

'यदा त्यागादिरुच्येत पृथिव्याद्यङ्गकल्पना ।
तदा ज्ञेया न हि स्वाङ्गं कदाचिद् विष्णुरुत्सृजेत्' । इति ब्रह्मतर्के ।।८।।

मृत्युदूतः कपोतोऽग्नावुलूकः कम्पयन्मनः ।
प्रत्युलूकश्च हुङ्कारैरनिद्रौ शून्यमिच्छतः ।। १४ ।।

अग्नौ पदं करोति ।

'यदुलूको वदति मोघमेतद् यत् कपोतः पदमग्नौ कृणोति' इति हि श्रुतिः
।। १४ ।।

भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः ।
कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ।। ३४ ।।

यथाऽन्येषां सुखं भविष्यति तथा । नित्यसुखत्वाद्धरेः ।

'अत्युत्तमानां कुशलप्रश्नो लोकसुखेच्छया ।
नित्यदाऽऽप्तसुखत्वात्तु न तेषां युज्यते क्वचित्' । इति नारदीये ।।३४।।

कच्चित्तेऽनामयं तात भ्रष्टतेजा विभासि मे ।
अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः ।। ३९ ।।

पूर्वं चिरोषितः ।। ३९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे त्रयोदशोऽध्यायः ।।

## चतुर्दशोऽध्यायः

पत्न्यास्तवापि मखकॢप्तमहाभिषेक-
श्लाघिष्ठचारुकबरं कितवैः सभायाम् ।
स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्यो
यैस्तत्स्त्रियो न्यकृत तत् सविमुक्तकेश्यः ।। १० ।।

**यत् पादयोः** पतिताश्रुप्रधानो यैः कबरं स्पृष्टं तत्स्त्रियः तत्पदयोः पतितत्वादेव । सविमुक्तकेश्यो न्यकृत ।। १० ।।

तद्वै धनुस्त इषवः स रथो हयास्ते
सोऽहं रथी नृपतयो यत आमनन्ति ।
सर्वं क्षणेन तदभूदसदीशरिक्तं
भस्मन् हुतं कुहकराद्धमिवोप्तमूषे ।। २१ ।।

स रथो हयास्ते । तादृशा इत्यर्थः । त इषव इतिवत् ।

'सदृशे वा प्रधाने वा कारणे वा तदित्ययम् ।
शब्दः सङ्घटते भेदे विद्यमानेऽपि तत्त्वतः' । इति ब्रह्मतर्के ।

तद्रथहयानां दाहोक्तेः ।। २१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे चतुर्दशोऽध्यायः ।।



## पञ्चदशोऽध्यायः

सूत उवाच—

वासुदेवाङ्घ्र्यभिध्यानपरिबृंहितरंहसा ।
भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ।। १ ।।

ज्ञानिनां प्रारब्धस्यैव निर्मथनं(विनिर्मथनं) योग्यस्यैव ।

'महता कारणेनैव प्रारब्धान्यपि कानिचित् ।
कर्माणि क्षयमायान्ति ब्रह्मदृष्टिमतः क्वचित्' । इति भविष्यत्पर्वणि ।

तेषामपि काम्यकर्मफलदृष्टेश्च ।। १ ।।

गीतं भगवता ज्ञानं यत्तत्सङ्ग्राममूर्धनि ।
कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः ।। २ ।।

तम आदिरोधश्च प्रारब्धकर्मणैव ।

'ज्ञानादिव्यक्तिरव्यक्तिः सुखदुःखादिकं तथा ।
सुदृष्टब्रह्मतत्त्वानां भवत्यारब्धकर्मणा । इति ब्रह्मवैवर्ते ।। २ ।।

विशोको ब्रह्मसम्पत्या सञ्छिन्नद्वैतसंशयः ।
लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ।। ३ ।।

ब्रह्मसम्पत्तिरवगतिः ।

'भगवन्तं विनाऽन्यत्र प्रवृत्त्यादिप्रकाशनम् ।
प्रारब्धकर्मणैव स्यात् कदाचिज्ज्ञानिनामपि ।
तां द्वैतदृष्टिं मे देव छिन्धि ज्ञानवरासिना' । इति ब्राह्मे ।

# चतुर्दशोऽध्यायः

पत्न्यास्तवापि मखक्लृप्तमहाभिषेक-
श्लाघिष्ठचारुकबरं कितवैः सभायाम् ।
स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्यो
यैस्तत्स्त्रियो न्यकृत तत् सविमुक्तकेश्यः ।। १० ।।

यत् पादयोः पतिताश्रुप्रधानो यैः कबरं स्पृष्टं तत्स्त्रियः तत्पदयोः पतितत्वादेव । सविमुक्तकेश्यो न्यकृत ।। १० ।।

तद्वै धनुस्त इषवः स रथो हयास्ते
सोऽहं रथी नृपतयो यत आमनन्ति ।
सर्वं क्षणेन तदभूदसदीशरिक्तं
भस्मन् हुतं कुहकराद्धमिवोप्तमूषे ।। २१ ।।

स रथो हयास्ते । तादृशा इत्यर्थः । त इषव इतिवत् ।

'सदृशे वा प्रधाने वा कारणे वा तदित्ययम् ।
शब्दः सङ्घटते भेदे विद्यमानेऽपि तत्त्वतः' । इति ब्रह्मतर्के ।

तद्रथहयानां दाहोक्तेः ।। २१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे चतुर्दशोऽध्यायः ।।



## पञ्चदशोऽध्यायः

सूत उवाच—

वासुदेवाङ्घ्र्यभिध्यानपरिबृंहितरंहसा ।
भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ।। १ ।।

ज्ञानिनां प्रारब्धस्यैव निर्मथनं(विनिर्मथनं) योग्यस्यैव ।

'महता कारणेनैव प्रारब्धान्यपि कानिचित् ।
कर्माणि क्षयमायान्ति ब्रह्मदृष्टिमतः क्वचित्' । इति भविष्यत्पर्वणि ।

तेषामपि काम्यकर्मफलदृष्टेश्च ।। १ ।।

गीतं भगवता ज्ञानं यत्तत्सङ्ग्राममूर्धनि ।
कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः ।। २ ।।

तम आदिरोधश्च प्रारब्धकर्मणैव ।

'ज्ञानादिव्यक्तिरव्यक्तिः सुखदुःखादिकं तथा ।
सुदृष्टब्रह्मतत्त्वानां भवत्यारब्धकर्मणा । इति ब्रह्मवैवर्ते ।। २ ।।

विशोको ब्रह्मसम्पत्या सञ्छिन्नद्वैतसंशयः ।
लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ।। ३ ।।

ब्रह्मसम्पत्तिरवगतिः ।

'भगवन्तं विनाऽन्यत्र प्रवृत्त्यादिप्रकाशनम् ।
प्रारब्धकर्मणैव स्यात् कदाचिज्ज्ञानिनामपि ।
तां द्वैतदृष्टिं मे देव छिन्धि ज्ञानवरासिना' । इति ब्राह्मे ।

तदेव सञ्छिन्नद्वैतसंशयत्वम् । लीनप्रकृतित्वं नैर्गुण्यं च लीनप्रकृतिनैर्गुण्यम् । तस्मादसूक्ष्मशरीरत्वाद् अनारब्धकर्ममूलत्वात् असम्भवः पुनरुत्पत्तिवर्जितः । ज्ञानोदयकाल एवैवंभूतः सन् पुनरध्यगच्छत् ।

'प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्वादिकानपि ।
कर्माणि सूक्ष्मदेहं च जायमाना हरेर्दृशिः ।
दहेदथापि सन्दग्धेन्धनवत् तत्पुनः पुनः ।
यावदारब्धकर्म स्यादाविर्वाऽपि तिरो व्रजेत्' । इति ब्रह्मतर्के ।।३।।

स्वराट् पौत्रं विनीतं तमात्मनोऽनवमं गुणैः ।
तोयनीव्याः पतिं भूमेरभ्यषिश्चद्व्रजाह्वये ।। ७ ।।

पौत्रत्वे योग्यत्वमनवमत्वम् ।

'इन्द्राद्युत्तमताऽन्येषां समता वा स्वके कुले ।
उत्तमत्वमुपास्त्यादियोग्यता वा निगद्यते' । इति च ब्रह्मतर्के ।।७।।

वाचं जुहाव मनसि तत्प्राण इतरे परम् ।
धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् ।। १० ।।

त्रित्वे हुत्वाऽथ पश्चत्वं तच्चैकत्वेऽजुहोन्मुनिः ।
सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ।। ११ ।।

प्राणमपाने । तं व्याने । समानोदानौ तेषु । तांश्च मूलप्राणे । आत्मा हृदिस्थो विष्णुः । ब्रह्म सर्वगतम् ।

'उमा वागात्मिका रुद्राज्जाता सा मनआत्मनः ।
प्राणाह्वयात् स वायोश्च सोऽपानादात्मरूपतः ।

स्वरूपादेव स व्यानादुदानो व्यानतस्तथा ।
तस्मात् समानो व्यानाच्चाप्यपानः प्राण एव च ।
अपानात् तिसृभिश्चापि समानोदानयोर्जनिः ।
त्रयाणामथ पञ्चानामनाद्वा प्राणतो भवः ।
एकस्यैव स्वरूपाणि प्राणस्यैतानि पञ्च च ।
स च प्राणो हरेर्जातो हृदिस्थादात्मनो मतः ।
स आत्मा ब्रह्मणो जातो विश्वरूपाज्जनार्दनात् ।
एतेषां ब्रह्मपर्यन्तं विलयोत्पत्तिचिन्तनम् ।
ब्रह्मयज्ञ इति प्रोक्तः सर्वसंसारमोचकः' । इति नारायणाध्यात्मे ।

'अस्यास्मिन् विलयो भावीत्येवं विज्ञानमाहुतिः ।
नतु तत्कालविलयस्त्वन्यो वा तस्य दर्शनात्' ।
इति ब्रह्मतर्के ।। १०-११ ।।

उदीचीं प्रविवेशाऽशां गतपूर्वां महात्मभिः ।
हृदि ब्रह्म ध्यायन् नाऽवर्तेत गतो यतः ।। १३ ।।

नाऽवर्तेत वीरगतिं गतः ।। १३ ।।

ते साधुकृतसर्वार्थाः ज्ञात्वाऽऽत्यन्तिकमात्मनः ।
मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ।। १५ ।।

आत्मनः स्वरूपम् आत्यन्तिकं ज्ञात्वा ।। १५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे पञ्चदशोऽध्यायः ।।

※ ※ ※

## षोडशोऽध्यायः

शौनक उवाच—

कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ।
नृदेवचिह्नधृक् शूद्रः कोऽसौ गां यः पदाऽहनत् ।। ५ ।।

कोऽसौ इत्याक्षेपः । कलिम् इत्युक्तत्वात् ।। ५ ।।

तत्कथ्यतां महाभाग यदि विष्णुकथाश्रयम् ।
अथ वाऽस्य पदाम्भोजमकरन्दलिहां सताम् ।। ६ ।।

**अथ** इति पक्षान्तरे । वा यदि ।। ६ ।।

किमन्यैरसदालापैरायुषो यदसद्व्ययः ।
क्षुद्रायुषां नृणामङ्ग मर्त्यानां मृति(ऋत)मि(मृ)च्छताम्
।। ७ ।।

अन्यथा चेदायुषोऽसद्व्ययः इत्यर्थः ।

'यद्यर्थे च विकल्पार्थे वाशब्दः समुदीर्यते' इति नाममहोदधौ ।। ७ ।।

एतदर्थं हि भगवान् आहूतः परमर्षिभिः ।
अहो नृलोके पीयेत हरिलीलामृतं वचः ।। ९ ।।

एतदर्थं हि मृत्युरुपहूतः । अहो नृलोके पीयेत इति ।। ९ ।।

सारथ्यपार्षदसेवनसख्यदौत्य-
वीरासनानुगमनस्तवनप्रणामैः ।
स्निग्धेषु पाण्डुषु जगत्प्रणतस्य विष्णोः
भक्तिं करोति नृपतिश्चरणारविन्दे ।। १७ ।।

स्निग्धेषु पाण्डुषु विष्णोः सारथ्यादिभिर्विशेषतो भक्तिं करोति ।। १७ ।।

धरोवाच—

सत्यं शौचं दया दानं त्यागः सन्तोष आर्जवम् ।
शमो दमः तपः साम्यं तितिक्षोपरतिः श्रुतम् ।। २७ ।।
ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो धृतिः स्मृतिः ।
स्वातन्त्र्यं कौशलं कान्तिः सौभगं मार्दवं क्षमा ।। २८ ।।

**त्यागो** मिथ्याभिमानवर्जनम् ।

'मिथ्याभिमानविरतिस्त्याग इत्यभिधीयते' इति नारायणाध्यात्मे ।।

एकान्ततः शुभभागित्वं सौभाग्यम् ।

'शुभैकभागी सुभगो दुर्भगस्तद्विपर्ययः' इति गीताकल्पे ।

'शमः प्रियादिबुद्ध्युज्झा क्षमा क्रोधाद्यनुत्थितिः ।
महाविरोधकर्तुश्च सहनं तु तितिक्षणम्' ।। इति पाद्मे ।

'स्वयं सर्वस्य कर्तृत्वात् कुतस्तस्य प्रियाप्रिये' इति च पाद्मे ।

'प्रियमेव यतः सर्वमप्रियं नास्ति कुत्रचित् ।
स्वयमेव यतः कर्ता शान्तोऽतो हरिरीश्वरः' । इति ब्रह्मतर्के ।।२७,२८।।

प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ।
गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः ।। २९ ।।

**मानः** परेषाम् ।। २९ ।।

इमे चान्ये च भगवन्नित्या यत्र महागुणाः ।
प्रार्थ्या महत्वमिच्छद्भिः न च यान्ति स्म कर्हिचित् ।।३०।।

'गुणैः स्वरूपभूतैस्तु गुण्यसौ हरिरीश्वरः ।
न विष्णोर्न च मुक्तानां कोऽपि भिन्नो गुणो मतः' ।। इति ब्रह्मतर्के ।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे षोडशोऽध्यायः ।।



## सप्तदशोऽध्यायः

वृषं मृणालधवलं मेहन्तमिव बिभ्यतम् ।
वेपमानं पदैकेन सीदन्तं शूद्रपीडितम् ।। २ ।।

बिभ्यतमिव मेहन्तम् ।। २ ।।

धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् ।
यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत् ।। २१ ।।

अथवा देवमायाया नूनं गतिरगोचरा ।
चेतसो वचसश्चापि भूतानामिति निश्चयः ।। २२ ।।

असतां सूचकस्य न दोषः तथाऽपि सतां न सूचनीयमिति दर्शयितुम् ।
ज्ञातुं शक्यत्वाच्च राज्ञः ।

'यद्यधर्मः कृतः सद्भिर्न स वाच्यः कथञ्चन ।
असत्कृतमधर्मं तु वदन् धर्ममवाप्नुयात्' । इति व्यासस्मृतौ ।

तस्य गोचरत्वेऽपि भूतानामगोचरेति ज्ञापयितुं वा ।। २१,२२ ।।

न वर्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये ।
ब्रह्मावर्ते यत्र यजन्ति यज्ञैः यज्ञेश्वरं ब्रह्मवितानयज्ञाः ।।३२।।

ब्रह्मयज्ञाः वितानयज्ञाश्च ।। ३२ ।।

यस्मिन् हरिर्भगवानिज्यमान इष्टात्ममूर्तिर्यजतां शं तनोति ।
कामानमोघान् स्थिरजङ्गमानां अन्तर्बहिर्वायुरिवेश आत्मा
।। ३३ ।।

इष्टात्ममूर्तिः इच्छातनुः ।। ३३ ।।

अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ।
विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ।। ४० ।।

विहितातिरेकेण न सेवेत ।। ४० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे सप्तदशोऽध्यायः ।।



## अष्टादशोऽध्यायः

उत्सृज्य सर्वतः सङ्गं विज्ञानार्जितसंस्थितिः ।
वैयासकेर्जहौ शिष्यो गङ्गायां स्वकलेवरम् ।। ३ ।।

'विज्ञानमात्मयोग्यं स्याज्ज्ञानं साधारणं स्मृतम्' इति भागवततन्त्रे ।।३।।

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताऽशिषः ।। १३ ।।

'सम्यक्स्वरूपस्याव्यक्तिरभावो जननस्य च ।
अल्पयत्नात् ततो वृद्धिहेतोः सत्सङ्गतिर्वरा' ।। इति वायुप्रोक्ते ।।१३।।

कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य ।
योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ।।१९।।

**अनन्तः** कालतो देशतश्च ।। १९ ।।

यत्रानुरक्ताः सहसैव धीराः व्यपोह्य देहादिषु सङ्गमूढम् ।
व्रजन्ति तत्पारमहंस्यसत्यं यस्मिन्नहिंसोपरमश्च धर्मः ।।२२।।

परमहंसाश्रमप्राप्यं सत्यं ब्रह्म ।। २२ ।।

प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिमुपारतम् ।
स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ।। २६ ।।

'स्वतो मनःस्थितिर्विष्णौ ब्रह्मभाव उदाहृतः' इति ब्रह्माण्डे ।। २६ ।।

अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ।
ब्राह्मणं प्रत्यभूद्ब्रह्मन् मत्सरो मन्युरेव च ।। २९ ।।

'अप्रीतिर्मद्वशो नायमिति मत्सर ईरितः' इति नाममहोदधौ ।। २९ ।।

इत्युक्त्वा रोषताम्राक्षः वयस्यान् ऋषिबालकान् ।
कौशिक्यप उपस्पृश्य वाग्वज्रं विससर्ज ह ।। ३६ ।।

**कौशिकी** कुशपाणिः ।। ३६ ।।

अरक्ष्यमाणे नरदेवनाम्नि
रथाङ्गपाणावयमङ्ग लोकः ।
तदा हि चोरप्रचुरो विनङ्क्ष्-
त्यरक्ष्यमाणो विवरूथवत् क्षणात् ।। ४३ ।।

'सेना वरूथिनी प्रोक्ता वरूथो गुप्तिरुच्यते' इत्यभिधानम् ।। ४३ ।।

तदद्य नः पापमुपैत्यनन्वयं
यन्नष्टनाथस्य पशोर्विलुम्पकाः ।
परस्परं घ्नन्ति शपन्ति वृञ्जते
पशून् स्त्रियोऽर्थान् पुरुदस्यवो जनाः ।। ४४ ।।

'विड्राष्ट्रं पशुरुत्सेको भ्रमरश्चेति कथ्यते' इति च ।। ४४ ।।

साधवः प्रायशो लोके परैर्द्वन्द्वेषु योजिताः ।
न व्यथन्ति न हृष्यन्ति यत आत्मा(ऽ)गुणाश्रयः ।। ५० ।।

स्वकृतो गुणः स्वस्यैव यतः ।। ५० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे अष्टादशोऽध्यायः ।।



## एकोनविंशोऽध्यायः

इति स्म राजा व्यवसाययुक्तः
प्राचीन(मूलेषु)काग्रेषु कुशेषु धीरः ।
उदङ्मुखो दक्षिणकूल आस्ते
समुद्रपत्न्याः स्वसुते न्यस्तभारः ।। १७ ।।

गङ्गायामुदक एव किञ्चिद्दक्षिणभागे प्रासादे । तथाहि महाभारते ।। १७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भागवततात्पर्यनिर्णये प्रथमस्कन्धे एकोनविंशोऽध्यायः ।।



## विंशोऽध्यायः

श्यामं सदाऽऽपीच्यवयोङ्गलक्ष्म्या
स्त्रीणां मनोज्ञं रुचिरस्मितेन ।
प्रत्युत्थिता मुनयश्चाऽसनेभ्यः
तल्लक्षणज्ञा अपि गूढवर्चसम् ।। ४ ।।

'कैशोरयौवनाभ्यन्तःकाल आपीच्यमुच्यते' इत्यभिधानात् ।। ४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये प्रथमस्कन्धे विंशोऽध्यायः ।।

## ।। प्रथमः स्कन्धः समाप्तः ।।



# द्वितीयस्कन्धः

## प्रथमोऽध्यायः

श्रीशुक उवाच—

वरीयानेष ते प्रश्नः कृतो लोकहितं नृप ।
आत्मवित्सम्मतः पुंसां श्रोतव्यादिषु यः परः ।। १ ।।

यः पर इति ।। १ ।।

श्रोतव्यानीह राजेन्द्र नृणां सन्ति सहस्रशः ।
अपश्यतामात्मतत्वं गृहेषु गृहमेधिनाम् ।। २ ।।

निद्रया ह्रियते नक्तं व्यवायेन नवं वयः ।
दिवा चार्थेहया राजन् कुटुम्बभरणेन वा ।। ३ ।।

अपश्यताम् निद्रया ।। २ ।।

देहापत्यकलत्रादिष्वात्मदैन्येष्वसत्स्वपि ।
तेषु प्रसक्तो निधनं पश्यन्नपि न पश्यति ।। ४ ।।

असत्सु अभद्रेषु । 'सद्भावे साधुभावे च' इति वचनात् ।। ४ ।।

प्रायेण मुनयो राजन्निवृत्ता विधिनिषेधतः ।
नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ।। ७ ।।

ध्यानापेक्षया प्रायेण । नैर्गुण्यस्था मुक्ताः ।
'एतत्सामगायन्नास्ते' इति श्रुतेः ।। ७ ।।

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम् ।। ८ ।।

द्वापरे आदौ च (द्वापरे च आदौ च) । कृष्णावतारापेक्षया ।

'व्यासः षट्शतवर्षीयो धृतराष्ट्रमजीजनत्' । इति स्कान्दे ।। ८ ।।

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे आख्यानं यदधीतवान् ।। ९ ।।

परिनिष्ठितोऽपि मुक्तिरस्य भविष्यतीति निश्चितोऽपि ।

'उदरं संशयः प्रोक्तः परिनिष्ठा विनिश्चयः' । इत्यभिधाने ।।

'ऋष्युत्तमा देवताश्च विमुक्तौ परिनिश्चिताः ।
तथाप्यधिकसौख्यार्थं यतन्ते शुभकर्मसु ।
विमुक्तास्तु स्वभावेन नित्यं ध्यानादितत्पराः' । इति गारुडे ।।९।।

नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धिसारथिः ।
मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ।। १८ ।।

शुभार्थे भगवति ।। १८ ।।

तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा ।
मनो निर्विषयं युंक्त्वा ततः किञ्चिन्न संस्मरेत् ।
पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति ।। १९ ।।

विषयेभ्यो निर्गत्य तत्रैव मनो युंक्त्वाऽन्यन्न स्मरेत् ।। १९ ।।

यस्यां सन्धार्यमाणायां योगिनो भक्तिलक्षणः ।
आशु सम्पद्यते योग आश्रयं भद्रमीक्षतः ।। २१ ।।

**भद्रं** हरिम् ।। २१ ।।

राजोवाच—

यथा सन्धार्यते ब्रह्मन् धारणा यत्र सम्मता ।
यादृशी वा हरेदाशु पुरुषस्य मनोमलम् ।। २२ ।।

यच्छब्दः प्रश्ने । 'यतश्चोदेति सूर्यः' । इत्यादिवत् ।

'यच्छब्दस्तु परामर्शे प्रश्नार्थे चापि भण्यते' । इत्यभिधाने ।।२२।।

श्रीशुक उवाच—

जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः ।
स्थूले भगवतो रूपे मनः सन्धारयेद्धिया ।। २३ ।।

यथेत्यस्य **जितासन** इत्यादि । यत्र **स्थूले** । यादृशीत्यस्य विशेष इत्यादि ।। २३ ।।

विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् ।
यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च यत् ।। २४ ।।

**विशेष** आण्डकोशः ।

'शिलावत्तस्य देहोऽयमाण्डकोशस्तु सावृतिः ।
तत्तन्त्रत्वान्न तत्संस्थदुःखभोगोऽस्य न (दुःखभोगो न तु)क्वचित्' ।
इति ब्रह्मवैवर्ते ।। २४ ।।

आण्डकोशे शरीरेऽस्मिन्सप्तावरणसंयुते ।
वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः ।। २५ ।।

‘**आण्डकोशो**(अण्डकोशो) विराट्प्रोक्तो विशेषेण प्रकाशनात् ।
वैराजस्तद्गतो विष्णुरथवा सर्वतो वरः’ । इति भागवततन्त्रे ।।२५।।

पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम् ।
महातलं विश्वसृजस्सुगुल्फौ तलातलं वै पुरुषस्य जङ्घे ।।२६।।

प्रतिमापेक्षयाऽङ्गानि स्वरूपापेक्षया तज्ज्ञानि तदाश्रितानि च ।। २६ ।।

छन्दांस्यनन्तस्य गिरो गृणन्ति दंष्ट्राऽर्यमेन्द्वुगणा द्विजानि ।
हासो जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः ।।३१।।

वहुरूपत्वाद्दंष्ट्रार्यमेन्दू इत्यादि ।

‘प्रतिमापेक्षयाङ्गानि भूरादीनि स्वरूपतः ।
तदाश्रितानि तज्ज्ञानि बह्वङ्गत्वं वहुत्वतः’ । इति ब्रह्मतर्के ।। ३१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे प्रथमोऽध्यायः ।।



# द्वितीयोऽध्यायः

शब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः ।
परिभ्रमंस्तत्र न विन्दतेऽर्थान् मायामये वासनया शयानः ।।२।।

**एष** हरिः । यदपार्थैर्ध्यायति । तत्रार्थान्न विन्दते ।। २ ।।

अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः ।
सिद्धेऽन्यथार्थे न यतेत तत्तत् परिश्रमं तत्र समीक्षमाणः ।।३।।

'सर्वनामा यतो विष्णुस्तदन्यार्थान्न तु स्मरेत् ।
स्मरंस्तु यावदर्थः स्यादन्यथा स्वात्महा स्मृतः' । इति ब्रह्माण्डे ।।३।।

एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्तः ।
तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ।।६।।

'एतमितः प्रेत्याभिसम्भविताऽस्मि' इति नियतार्थः ।। ६ ।।

स सर्वविद्हृद्यनुभूश्च सर्व आत्मा यथा सुप्तजनेक्षितैकः ।
तं सत्यमानन्दनिधिं भजेत सर्वात्मनाऽतोऽन्यत आत्मघातः
।। ७ ।।

'यथैकस्तु बहून्सुप्तानसुप्तः पश्यति प्रभुः ।
एवमीशो बहून् जीवानज्ञान्पश्यति नित्यदृक्' । इति व्योमसंहितायाम् ।

'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति' । इति च ।

'यथेष्टभवनाद्विष्णुरनुभूः परिकीर्तितः ।

उदधिः कर्मणामीशः सर्वः पूर्णगुणो यतः ।
सत्यः केवलसारत्वान्नियमो नियतेरजः' । इति बृहत्संहितायाम् ।।७।।

अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम् ।
ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठते
।। १३ ।।

**चिन्तामयं** चिन्ताप्रधानम् ।

'यस्मात्सञ्चिन्तितो विष्णुश्चिन्तितं प्रददात्यजः ।
तस्माच्चिन्तामयं देवं वदन्ति ज्ञानचक्षुषः' । इति च ।। १३ ।।

यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः ।
तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत
।। १५ ।।

**स्थवीयः** पातालमेतस्येत्यादि ।। १५ ।।

स्थिरं सुखञ्चासनमास्थितो यतिः
यदा जिहासुरिममङ्ग लोकम् ।
काले च देशे च मनो न सज्जेत्
प्राणान्नियच्छेन्मनसा जितासुः ।। १६ ।।

'भक्त्या प्राणं वशं नीत्वा जितप्राणो भवत्युत' । इति षाड्गुण्ये
।। १६ ।।

मनश्च बुध्याऽमलया नियम्य
क्षेत्रज्ञ एतां निनयेत्तमात्मनि ।

आत्मानमात्मन्यवरुध्य धीरो
लब्धोपशान्तिर्विरमेत कृत्यात् ।। १७ ।।

'जीवस्थो भगवान्विष्णुः क्षेत्रज्ञ इति गीयते ।
देहस्थोऽपि(हृद्गतस्तु) स एवात्मा व्याप्तोऽप्यात्मेति भण्यते' ।
इति तत्त्वनिर्णये ।

'हरौ हरेर्भवेन्नीतिस्तदेकत्वस्य चिन्तनम् ।
अन्यत्र तन्नियम्यादिचिन्तनं नीतिरुच्यते' । इति प्रकाशसंहितायाम्
।। १७ ।।

न यत्र कालोऽनिमिषां परः प्रभुः
कुतो नु देवा जगतां य ईशिरे ।
न यत्र सत्त्वं न रजस्तमश्च
न वै विकारो न महान् प्रधानम् ।। १८ ।।

**कालो** वायुः ।

'हरिश्च प्रकृतिश्चैव ब्रह्मवायू तथैव च ।
सुपर्णशेषरुद्राश्च शक्रः सूर्ययमावपि ।
अग्निर्यमानुजश्चैव कालशब्देरिताः क्रमात् ।
पूर्वोक्तास्त्वपरोक्तानां प्रभवः सर्वशो मताः' ।
इत्युद्दामसंहितायाम् ।। १८ ।।

नाभ्यां स्थितं हृद्यवरोप्य तस्माद्
उदानगत्योरसि तं नयेन्मुनिः ।

ततोऽनुसन्धाय धिया मनस्वी
स्वतालुमूलं शनकैर्नयेत ।। २१ ।।

तस्माद्भ्रुवोरन्तरमुन्नयेत
निरुद्धसप्ताश्वपथोऽनपेक्षः ।
स्थित्वा मुहूर्तार्धमकुण्ठदृष्टि-
र्निर्भिद्य मूर्धन्विसृजेत्परं गतः ।। २२ ।।

**उदानगत्या** ब्रह्मनाड्या । 'अथैकयोर्ध्व उदानः' इति श्रुतेः ।

'प्राणापानाविडायां च पिङ्गलायां च वर्ततः ।
व्यानः सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः ।
सर्वत्रैव समानस्तु समं चरति सर्वगः' । इति भारते ।।

**परं** चिन्तयन् ।। २१,२२ ।।

यदि प्रयास्यत्यथ पारमेष्ठ्यं वैहायसानामुत यद्विहारम् ।
अष्टाधिपत्यं गुणसन्निवाये सहैव गच्छेन्मनसेन्द्रियैश्च ।। २३ ।।

योगेश्वराणां गतिमामनन्ति बहिस्त्रिलोक्याः पवनान्तरात्मा ।
न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम्
।। २४ ।।

'चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदैव तु ।
तान्येव जडयुक्तानि ह्यभिन्नानि स्वरूपतः' । इति ब्राह्मे ।।

पवनस्यापि अन्तरात्मा यः तम् । पवनश्चान्तरात्मा चेति वा ।

'ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान् ।
तत्र मुख्या हरिं यान्ति तदन्ये वायुमेव तु ।
अपक्का ये न ते यान्ति वायुं वा हरिमेव वा ।
स्थानमात्राश्रितास्ते तु पुनर्जनिविवर्जिताः' । इति ब्रह्मतर्के ।।२३,२४।।

वैश्वानरं याति विहायसा गतः
सुषुम्नया ब्रह्मपथेन शोचिषा ।
विधूतकल्कोऽथ हरेरुदस्तात्
प्रयाति चक्रं नृप शैंशुमारम् ।। २५ ।।

**हरेः शैंशुमारं चक्रम्** । वैश्वानरोदस्तात्(वैश्वानरादुदस्तात्) ।

'वैश्वानरे द्युनद्यां वा सूर्ये वा देह एव वा ।
विधूय सर्वपापानि यान्ति किंस्तुघ्नकेशवम्' । इति ब्रह्माण्डे ।।२५।।

योऽन्तः पचति भूतानां यस्तपत्यण्डमध्यगः ।
सोऽग्निर्वैश्वानरो मार्गो देवानां पितृणां मुनेः ।। २६ ।।

'पितृयानं देवयानं ब्रह्मयानमिति त्रिधा ।
गच्छन्वैश्वानरं याति तस्मान्मार्गः स ईरितः' ।। २६ ।।

देवयानं पिङ्गलाभिरहान्येति शतायुषा ।
रात्रीरिडाभिः पितृणां विषुवत्तां सुषुम्नया ।। २७ ।।

'दक्षिणाः पिङ्गलाः सर्वा इडा वामाः प्रकीर्तिताः ।
नाड्योऽथ मध्यमा प्रोक्ता सुषुम्ना वेदपारगैः' । इति भागवततन्त्रे ।

'देवयानस्य(नाख्य)मार्गस्था अहःशब्दाभिसञ्ज्ञिताः ।
पितृयानस्य(नाख्य)मार्गस्था रात्रिशब्दाह्वया मताः' । इति बृहत्तन्त्रे ।।

'शतायुर्मरणं चैव कालिकं पर(पार)मावृतिः' । इत्यभिधाने ।।

**पिङ्गलाभिः शतायुषा** अहःसञ्ज्ञं **देवयानम्** इति । **इडाभी** **रात्रिसञ्ज्ञं** पितृयानम् ।

'विषुवत्ता ब्रह्मयानं विशेषेण सुखं यतः ।
पिङ्गला देवयानं स्यात्पिङ्गाख्यसुखदं यतः ।
इडाऽन्नदानात्पितृणामेवं मार्गाः प्रकीर्तिताः' । इति ब्रह्मतर्के ।।२७।।

तद्विश्वनाभिं त्वभिपद्य विष्णोरणीयसा विरजेनात्मनैकम् ।
नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते ।।२८।।

'अशेषजगदाधारः शिंशुमारो हरिः परः ।
सर्वे ब्रह्मविदो नत्वा तं यान्ति परमं पदम्' । इति ब्रह्माण्डे ।।

तद्विष्णोर्विश्वाधारं रूपं प्रतिपद्य यत्र **कल्पायुषः** तं महर्लोकं उपैति ।

'मन्वन्तरायुषः स्वर्ग्या महर्लोके तु काल्पिकाः ।
आब्रह्मणो जनाद्यास्तु महर्लोकेऽपि ये वराः' । इति ब्राह्मे ।।२८।।

न यत्र शोको न जरा न मृत्युर्नाधिर्न चोद्वेग ऋते कुतश्चित् ।
यश्चित्ततोदः क्रिययाऽनिदंविदां दुरन्तदुःखप्रभवानुदर्शनात्
।। ३० ।।

**ऋते** सत्यलोके । **अनिदंविदाम्** अब्रह्मविदाम् । **दुरन्तदुःखं** च प्रभवश्च ।

'सर्वदुःखविहीना ये मुक्ताः प्रायस्तु तादृशाः ।
अमुक्तास्तु जनाद्येषु विशेषेण तु सत्यगाः' । इति वाराहे ।।

‘विष्णोर्लोकं तदैवैके यान्ति कालान्तरे परे ।
आज्ञयैव हरेः केचिदपूर्तैः केचिदञ्जसा ।
विहृत्यैवान्यलोकेषु मुच्यन्ते ब्रह्मणा सह’ । इति वामने ।। ३० ।।

ततो विशेषं प्रतिपद्य निर्भय-
स्तेनात्मनाऽपोऽनलमूर्ध्नि च त्वरन् ।
ज्योतिर्मयो वायुमुपेत्य काले
वाय्वात्मना खं बृहदात्मलिङ्गम् ।। ३१ ।।

ब्रह्मणा सह । **विशेषं** पृथिवीम् । **तेनात्मना** पृथिव्यात्मना । **ज्योतिर्मय** अग्निप्रधानः ।

‘आकाशवत् सर्वगतश्च नित्यः’ इति परमात्मसदृशं किञ्चित् ।

‘ज्ञानिनः प्रलये सर्वे ब्रह्मणा सह पार्थिवम् ।
परमात्मानमाविश्य वारिस्थं तत्समन्विताः ।
अग्निस्थं तद्युताश्चैव तेन नीताश्च वायुगम् ।
नभोगतं तेन नीता मनःस्थं तद्युतास्तथा ।
ततो बुद्धिस्थमीशेशं ततोऽहङ्कारगं हरिम् ।
ततो विज्ञाननामानं महत्तत्त्वगतं हरिम् ।
तत आनन्दनामानमव्यक्तस्थं जनार्दनम् ।
प्राप्य नावृत्तिमायान्ति शान्ति(ती)भूता निरामयाः ।
येषां पदान्तरापेक्षा वाय्वादीनां महात्मनाम् ।
आवृत्य ते पुनर्यान्ति ज्ञानिनोऽपि निरामयाः ।
अनावृत्तिमसंमूढाः परानन्दैकभागिनः’ । इति ब्रह्मतर्के ।।

'भूम्यब्मयमन्ननामानं प्राणमग्न्यादिसंस्थितम् ।
मानसं मन आदिस्थं विज्ञानं महति स्थितम् ।
आनन्दमव्यक्तगतं क्रमशो यान्ति देवताः ।
ब्रह्माद्याः केचिदेवात्र तदन्ये क्रमशोऽपरान्(क्रमशः परान्)' ।
इति बृहत्तन्त्रे ।। ३१ ।।

घ्राणेन गन्धं रसनेन वै रसं
रूपन्तु दृष्ट्या स्पर्शं त्वचैव ।
श्रोत्रेण चोपेत्य नभोगुणं तत्
प्रायेण नावृत्तिमुपैति योगी ।। ३२ ।।

'पञ्चेन्द्रियैर्ये विषया एष्टव्याः सर्वतो वराः ।
मानसांश्चाखिलान् प्राप्य मुक्तौ मोदन्ति देवताः ।
तथोद्रिक्तनिजानन्दा नित्यानन्दा असंवृताः' । इति षाड्गुण्ये ।।३२।।

स भूतसूक्ष्मेन्द्रियसन्निकर्षात्
सनातनोऽसौ भगवाननादिः ।
मनोमयं देवमयं विकार्यं
संसाद्य मत्या सह तेन याति ।। ३३ ।।

भूतसूक्ष्मेन्द्रियैश्च **सह** अनादिर्भगवानाकाशगो **मनोमयं याति ।** नादवत्त्वात् सनातनः ।

'नादेन तेन महता सनातन इति स्मृतः' । इति मोक्षधर्मे ।।

विविधकार्ययुक्तं **विकार्यम् । देवमयं** देवप्रधानम् ।

'मनःस्थितो हरिर्नित्यं सर्वदेवेषु संस्थितः ।
देवप्रधानकाँल्लोकान्करोत्यनुगतः सदा' । इति वाराहे ।।

भूतसूक्ष्माणि पञ्चभूतानि जीवाश्च ।

'पञ्चभूतैश्च शब्दाद्यैरिन्द्रियैर्जीवराशिभिः ।
युक्त आकाशगो विष्णुर्मनःस्थमुपगच्छति' । इति वामने ।

योऽसावनादिर्मनोमयस्तमिति वा । विपर्ययश्चेत्तस्यैव गन्तृत्वमिति ज्ञापयितुम् । मतिस्थेन तेन मनःस्थेन च सह विज्ञानतत्वं याति ।।३३।।

**विज्ञानतत्वं गुणसन्निरोधं तेनाऽत्मनाऽऽत्मानमुपैति शा(न्त)न्तिम् ।**
**आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे ।। ३४ ।।**

**एतां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग ।**
**एते सृती ते नृप वेदगीते त्वयाऽभिपृष्टेऽथ सनातने च ।**
**ये द्वे पुरा ब्रह्मण आह पृष्टः आराधितो भगवान् वासुदेवः ।।३५।।**

**गुणसन्निरोधं** निर्गुणं वासुदेवम् । **वासुदेवे एतां गतिं गतो न विषज्जते ।**

'वासुदेवाश्रिता देवा ब्रह्माद्या मुक्तबन्धनाः ।
भेददृष्ट्याऽभिमानेन चावृत्तिं नैव यान्ति ते ।
भुञ्जते तु पृथग्भोगान्नानन्दं तत्स्वरूपकम् ।
स्वरूपं च पृथक्तेषामाविष्टग्रहवद्भवेत्' इति ब्रह्माण्डे ।।३४,३५।।

**न ह्यतोऽन्यः शिवः पन्थाः विश्रुतः संसृताविह ।**
**वासुदेवे भगवति भक्तियोगो यतो भवेत् ।। ३६ ।।**

यद् भगवानाह । **अतो** भागवताख्याद्ग्रन्थात् शिवः **पन्था न** ।।३६।।

भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।
तद्धि ह्यपश्यत्(तदध्यपश्यत्)कूटस्थे रतिरात्मन् यतो भवेत्
।। ३७ ।।

तद्भागवतं पुराणम् अपश्यत् ।

'नित्यज्ञानेन सिद्धं च पुनः पुनरवेक्षते ।
लीलयैव हरिर्देवो दुष्टानां मोहनाय च' ।
इति ब्रह्मतर्के (पाद्मे) ।। ३७ ।।

भगवान्सर्वभूतेषु लक्षितश्चात्मना हरिः ।
दृश्यैर्बुध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ।। ३८ ।।

लक्षितश्चास्मिन् पुराणे बुद्ध्यादीनां पारवश्यदर्शनादन्यो नियन्ताऽस्तीति ।

'समाधावसमाधौ च निःस्वतन्त्रस्य देहिनः ।
अन्यो नियन्ता भगवान्वासुदेवः परः प्रभुः' इति ब्रह्मतर्के ।।३८।।

तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम् ।। ३९ ।।

यस्मात् भगवतैष एवोक्तः तस्मात् स एव श्रोतव्यादिः ।। ३९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे द्वितीयोऽध्यायः ।।



## तृतीयोऽध्यायः

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ।। १० ।।

'अकामो धर्मकामो वा मोक्षकामोऽपि यो भवेत् ।
अथवा सर्वकामो यः स विष्णुं पुरुषं यजेत्' । इति स्कान्दे ।।१०।।

आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ।
तस्यर्ते यः क्षणो नीतः उत्तमश्लोकवार्तया ।। १७ ।।

तस्यायुष **उत्तमश्लोकवार्तया** ऋते **यः क्षणः स नीत** एव वृथा ।।१७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे तृतीयोऽध्यायः ।।



## चतुर्थोऽध्यायः

आत्मजायासुतागारपशुद्रविणबन्धुषु ।
राज्ये चाविकले नित्यनिरूढां ममतां जहौ ।। २ ।।

अन्येषां नित्यं निरूढा । तदा विशेषतो जहौ ।। २ ।।

संस्थां विज्ञाय सन्यस्य कर्म त्रैवर्गिकश्च यत् ।
वासुदेवे भगवति स्वात्मभावं दृढं गतः ।। ४ ।।

'आप्तेः सर्वगुणानां य आत्मनामतया हरिम् ।
उपास्ते नित्यशो विद्वानाप्तकामस्तदा भवेत्' । इति वामने ।।४।।

श्रीशुक उवाच–

नमः परस्मै पुरुषाय भूयसे
सदुद्भवस्थाननिरोधलीलया ।
गृहीतशक्तित्रितयाय देहिनाम्
अन्तर्ध्रुवायाऽनुपलभ्यवर्त्मने ।। १२ ।।

गृहीतशक्तित्रितयायेति,

'इच्छा ज्ञानं क्रिया चेति नित्याः शक्तय ईशितुः ।
स्वरूपभूता अपि तु भेदवद्व्यावहारिकाः' ।।

इति प्रकाशसंहितावचनान्नित्यगृहीतशक्तित्वमेव ।। १२ ।।

भूयो नमः सद्वृजिनच्छिदेऽसतां
असम्भवायाऽखिलसत्त्वमूर्तये ।
पुंसां पुनः पारमहंस्य आश्रमे
व्यवस्थितानामनुमृग्यदाशुषे ।। १३ ।।

अखिलसत्वमूर्तये पूर्णसाधुभावस्वरूपाय ।

'निःशेषगुणपूर्णत्वात्सत्व इत्येव तं विदुः' । इति महासंहितायाम्
।। १३ ।।

स एष आत्माऽऽत्मवतामधीश्वर-
स्त्रयीमयो धर्ममयस्तपोमयः ।
गतव्यलीकैरजशङ्करादिभि-
र्वितर्क्यलिङ्गो भगवान्प्रसीदताम् ।। १९ ।।

'वेदानुसारिवशगः स्वेच्छया तु हरिर्यतः ।
अतः स्वतन्त्रमप्याहुः प्राज्ञा वेदमयेति ह' । इत्यध्यात्मे ।।१९।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे चतुर्थोऽध्यायः ।। ४ ।।



## पञ्चमोऽध्यायः

नारद उवाच—

देवदेव नमस्तेऽस्तु भूतभावन पूर्वज ।
तद्विजानीहि यज्ज्ञानमात्मतत्वनिदर्शनम् ।। १ ।।

**विजानीहि** विज्ञापय । 'व्यत्ययो भेदस्वातन्त्र्यकरणेषु' । इति वचनात् ।। १ ।।

यद्रूपं यदधिष्ठानं यतः सृष्टमिदं विभो ।
यत्संस्थं यत्परं यच्च तत्तत्वं वद तत्वतः ।। २ ।।

'तद्वशत्वादिदं रूपं हरेर्नैव स्वरूपतः' । इति मानससंहितायाम् ।

'अधिष्ठानमिति प्रोक्तं मूलाधारं विचक्षणैः ।

यत्स्थितं दृश्यते वस्तु संस्थानं तदुदीरितम् ।
उभयं हरिरेवास्य जगतो मुनिपुङ्गव' । इति वामने ।।

'हरिः परोऽस्य जगतो ह्यव्यक्तादेश्च कृत्स्नशः ।
अतस्तत्परमेवेदं वदन्ति मुनयोऽमलाः' ।। इति सात्वतसंहितायाम् ।

'यदधीना यस्य सत्ता तत्तदित्येव भण्यते ।
विद्यमाने विभेदेऽपि मिथो नित्यं स्वरूपतः' इति भविष्यत्पर्वणि ।।२।।

यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः ।
एकः सृजसि भूतानि भूतैरेवात्ममायया ।। ४ ।।

तदधिकं ज्ञातुं पूर्वपक्षं दर्शयति–

'एकः सृजसि' इत्यादिना ।। ४ ।।

नाहं वेद परं त्वस्मात् नावरं न समं विभो ।
नामरूपगुणैर्भाव्यं सदसत् किञ्चिदन्यतः ।। ६ ।।

'त्वदधीना यतः सत्ता अवरस्यापि केशव ।
अतः स्वरूपतः सम्यक्सति भेदेऽपि तद्भवान्' इति मात्स्ये ।।६।।

नानृतं बत तच्चापि यथा मां प्रब्रवीषि भोः ।
अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ।। १० ।।

नानृतमित्याक्षेपः ।। १० ।।

नमस्तस्मै भगवते वासुदेवाय धीमहि ।
यन्मायया दुर्जयया मां वदन्ति जगद्गुरुम् ।। १२ ।।

विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ।
विमोहिता विकत्थन्ते ममाहमिति दुर्धियः ।। १३ ।।

'मुख्या माया हरेः शक्तिरमुख्या प्रकृतिर्मता ।
अथामुख्यतमा चैव माया दीना प्रकीर्तिता' ।। १२-१३ ।।

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तात्वतः ।। १४ ।।

परः अधिकः ।

'तद्वदेव स्थितं यत्तु तात्वतं तत्प्रचक्षते' । इति कौर्मे ।। १४ ।।

नारायणपरा वेदा देवा नारायणाङ्गजाः ।
नारायणपरा लोका नारायणपरा मखाः ।। १५ ।।

वेदप्रतिपाद्येषु स पर इत्यादि ।

'गम्येज्यज्ञेयवाच्येषु योज्येषु च परो हरिः ।
तपसा पूज्यमानानां सर्वलोकेभ्य एव च' ।। इति वाराहे ।। १५ ।।

सत्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ।
स्थितिसर्गनिरोधेषु गृहीता मायया विभोः ।। १८ ।।

युगपत्क्रमशोऽपि वेत्यस्य परिहारः 'सत्वं रजस्तम' इति ।

'नित्यं गृहीताः सत्वाद्याः स्थित्यादिषु विशेषतः ।
युगपत् क्रमशश्चैव गृह्णाति भगवान्स्वयम्' ।। इति ब्रह्मवैवर्ते ।।१८।।

कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः ।
बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ।। १९ ।।

'ज्ञानेन्द्रियैश्च मनसा सत्वं बध्नाति पूरुषम् ।
रजः कर्मेन्द्रियैर्नित्यं शरीरेण तमस्तथा ।
आन्तरं यत्तु कर्तृत्वं तत्सत्वेनाभिमन्यते ।
रजसा त्वभिमन्येत करणैः कर्मकारणैः ।
शारीरं वेदनाद्यं तु तमसा ह्यभिमन्यते ।
अकर्ता करणैर्हीनः शरीरेण विवर्जितः ।
नित्यज्ञानस्वरूपोऽसौ गुणैरेवाभिमन्यते ।
एवं जीवः परेणैव प्रेरितः संसृतिं व्रजेत् ।
न परः संसृतिं क्वापि स्वातन्त्र्यादधिकत्वतः ।
एवं जीवपरौ भिन्नौ किमन्यच्छ्रोतुमिच्छसि' ।। इति पाद्मे ।।

**मायिनं** ज्ञानिनं स्वतः ।। १९ ।।

स एष भगवाँल्लिङ्गैस्त्रिभिरेतैरधोक्षजः ।
स्वलक्षितगतिर्ब्रह्मन्सर्वेषां मम चेश्वरः ।। २० ।।

**लिङ्गैः** ज्ञापकैः । त्रिगुणैः । एतैर्लिङ्गैः । स्वप्रसादाज्जीवेन लक्षितगतिः ।
'स्वप्रसादादिमं जीवः पश्येत्तेन स्वलक्षितः' इति षाड्गुण्ये ।।२०।।

कालं कर्म स्वभावञ्च मायेशो मायया स्वया ।
आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे ।। २१ ।।

**स्वया मायया** स्वशक्त्या ।

'यत्रान्यहेत्वभावः स्यादीश्वरेच्छादिना विना ।
तदिच्छा हि यदृच्छा स्यादतस्तत्र यदृच्छया' । इति ब्रह्मतर्के ।

'कालकर्मस्वभावादि नित्ययेशेच्छया सदा ।
प्राप्तमेव विशेषेण सृष्ट्यादावुन्नयत्यजः' ।। इति च ।

**विबुभूषुः** बहुधा बुभूषुः ।

'ईशो बह्वीः पुरः सृष्ट्वा तत्रैव बहुरूपताम् ।
तत्तन्नियामकतया प्राप्तुं कालाद्युपाददे' ।। इति च ।। २१ ।।

**कालाद्गुणव्यतिकरात्परिणामस्वभावतः ।**
**कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ।। २२ ।।**

प्रकृतेः परिणामस्वभावतः ।

'गुणकालस्वभावेभ्य ईशेनाधिष्ठितत्वतः ।
जगदादि महत्तत्त्वमभूत्तस्येच्छया हरेः ।।' इति षाड्गुण्ये ।।२२।।

**महतस्तु विकुर्वाणाद्रजस्सत्वोपबृंहितात् ।**
**तमः प्रधानस्त्वभवद्द्रव्यज्ञानक्रियात्मकः ।। २३ ।।**

'भूतानि द्रव्यनामानि ज्ञानं ज्ञानेन्द्रियाण्यपि ।
क्रिया कर्मेन्द्रियाण्याहुस्तन्मूलत्वादहं त्रिधा' । इति गारुडे ।।२३।।

**सोऽहङ्कार इति प्रोक्तो विकुर्वन्समभूत्त्रिधा ।**
**वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ।**
**द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभोः ।। २४ ।।**

'विशिष्टकार्यशक्तित्वाद्देवा वैकारिकाः स्मृताः ।
अतिजाज्वल्यमानत्वात्तैजसानीन्द्रियाण्यपि ।
तामसानि तु भूतानि यतस्तावन्न तूभयम्' ।। इति पाद्मे ।

ज्ञानेन्द्रियाणां देवानां ज्ञानशक्तिरुदीरिता ।
क्रिया कर्मेन्द्रियाणां च भूतानां द्रव्यशक्तिता' ।। इति स्कान्दे ।

'द्रव्यं तु द्रवणप्राप्यं द्वयोर्विवदमानयोः ।
पूर्वं वेगाभिसम्बन्धादाकाशस्तु प्रदेशतः' ।। इति प्रकाशसंहितायाम्
।। २४ ।।

तामसादपि भूतादेर्विकुर्वाणादभून्नभः ।
तस्य मात्रागुणः शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः ।। २५ ।।

'पञ्चेन्द्रियाभिमेयत्वान्मात्रागुण इतीरितः' ।। इति मात्स्ये ।

'शब्देनैव परो द्रष्टा ज्ञायते जगदेव च ।'
इति विष्णुसंहितायाम् ।। २५ ।।

नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः ।
परान्वयाच्छब्दवांश्च प्राण ओजः सहो बलम् ।। २६ ।।

'सर्वचेष्टयितृत्वात्तु प्राणोऽभिभवशक्तितः ।
ओजस्त्वनभिभाव्यत्वात्सहश्च स्वेच्छया कृतेः ।
बलं विधारकत्वाच्च विधृतिर्वायुरुच्यते' । इति भारते ।। २६ ।।

वैकारिकान्मनो जज्ञे देवा वैकारिका दश ।
दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।। ३० ।।

'अनाद्यनन्तोऽपि हरिर्वैकारिकगणेष्वजः ।
अवतीर्णः पदाङ्गुष्ठमध्यास्ते विश्वभुग्विभुः ।
पाददेवस्तु यज्ञोऽन्यस्तं प्रविश्य हरिः स्वयम् ।
सर्वं विधारयन्देहे वर्ततेऽनन्तशक्तिधृक्' । इति वह्निपुराणे ।।३०।।

तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः ।
सदसत्वमुपादाय नो भयं ससृजुर्ह्यदः ।। ३३ ।।

**सदसत्वं** व्यक्ताव्यक्तत्वम् । **नः भयम्** । अदो ब्रह्माण्डम् । ब्रह्माण्डं हि वदन्तीति जीवानां भयकारणम् । तत्र हि संसृतिः ।

'आकाशवायू त्वव्यक्तावितरेऽण्डे प्रकाशिताः ।
तथात्वाद्बाह्यभूतानामण्डस्थानां च सा गतिः' ।। इति मात्स्ये ।।३३।।

वर्षपूगसहस्रान्ते तदण्डमुदकेशयम् ।
कालकर्मस्वभावस्थो(ऽ)जीवो(ऽ)जीवमजीजनत् ।। ३४ ।।

**कालकर्मस्वभावस्थ अजीवः** परमेश्वरः । **अजीवं** स्वात्मानम् **अजीजनत्** । **तदण्डं** यथा स्वात्मानं प्रसूते तथा चकार ।

'यः प्राणधारणं प्राणप्रसादात्कुरुतेऽनिशम् ।
स जीव इति सन्दिष्टस्तदन्योऽजीव उच्यते ।
यत्प्रसादात्स तु प्राणः कुरुते स्वस्य धारणम्' ।। इति वायुप्रोक्ते ।।

'कालकर्मस्वभावस्थो वासुदेवः परः पुमान् ।
अकरोदण्डमुद्बुद्धमात्मप्रसवकारणम् ।।' इति ब्रह्माण्डे ।

**जीव** इति वा ।

'प्राणं धारयते यस्मात्स जीवः परमेश्वरः ।
अजीवोऽपि महातेजास्त्वथवा जीवयन् जगत्' ।।
इति स्कान्दे ।। ३४ ।।

स एष पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः ।
सहस्रोर्वङ्घ्रिबाह्वक्षिः सहस्राननशीर्षवान् ।। ३५ ।।

'अण्डे जातौ पुमांसौ द्वौ हरिर्ब्रह्मा तथैव च ।
अनादिस्तु हरिस्तत्र ब्रह्मा सादिरुदाहृतः' । इति च ।। ३५ ।।

यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः ।
ऊर्वादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ।। ३६ ।।

'हरेरवयवैर्लोकाः सृष्टा इति विकल्पनम् ।
साक्षात्सत्यमतोऽन्यस्मात् व्यावहारिकमुच्यते' ।। इति मात्स्ये ।। ३६

पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ।
ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रो व्यजायत ।। ३७ ।।

'ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः ।
यथावदत् श्रुतौ तद्वज्जीवो ब्रह्मेति वाग्भवेत्' ।। इति ब्राह्मे ।।३७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे पञ्चमोऽध्यायः ।। ५ ।।



षष्ठोऽध्यायः

रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी ।
कर्णौ दिशाश्च तीर्थानां श्रोत्रमाकाशशब्दयोः ।। ३ ।।

**तीर्थानां** शास्त्राणाम् ।। ३ ।।

रोमाण्युद्भिजजातीनां यैर्वा यज्ञस्तु सम्भृतः ।
केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ।। ५ ।।

'याज्ञिका रोममूलस्था रोमान्तस्थास्तु तत्परे ।
उद्भिजो वासुदेवस्य लिङ्गगास्तु जरायुजाः' । इति पाद्मे ।

'हरेः श्मश्राश्रया विद्युच्छिलालोहा नखाश्रयाः' । इत्याग्नेये ।। ५ ।।

बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम् ।
विक्रमो भूर्भुवःस्वश्च क्षेमस्य शरणस्य च
सर्वकामवरस्यापि हरेश्चरण आस्पदम् ।। ६ ।।

ब्राह्मणवैश्यादीन् वर्जयितुं प्रायश इति ।

'मोक्षः शान्तिश्च शरणं निर्वाणं चाभिधीयते' इति ब्राह्मे ।

'भेजे खगेन्द्रध्वजपादमूलम्' । इति च ।

'स्वोत्पत्त्यङ्गेषु देवानामन्येषां पादमूलतः ।
मुक्तिस्तु विहिता विष्णोर्निर्दिष्टेषु यथावचः' । इत्यध्यात्मे ।। ६ ।।

धर्मस्य मम तुभ्यश्च कुमाराणां भवस्य च ।
विज्ञानस्य च तत्वस्य परस्यात्मा परायणम् ।। ११ ।।

'कुमारब्रह्मरुद्राद्या हरेर्मध्यात्समुद्गताः' । इति वामने ।

'आत्मेति मध्यदेहश्च सर्वदेहोऽपि वा भवेत् ।
मनोबुद्धिरहङ्कारश्चित्तं जीवश्च कथ्यते ।
अथवा स्वयमेवेति वायुर्ब्रह्माऽपि वा भवेत् ।
मुख्यतो ब्रह्म परममात्मशब्देन भण्यते' ।। इति नाममहोदधौ ।

'देहेन्द्रियादिभेदेन निर्भेदोऽपि हरिः स्वयम् ।
भण्यते केवलैश्वर्यादनाद्यानन्दचिद्घनः' ।। इति गारुडे ।। ११ ।।

सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ।
तेनेदमावृतं विश्वं वितस्तिमधितिष्ठता ।। १५ ।।

'सर्वं पुरुष एवेति भण्यतेऽभेदवज्जगत् ।
तदधीनं तु सत्तादि यतो ह्यस्य सदा भवेत्' । इति ब्रह्मतर्के ।

'वितस्तिमात्रं हृदयमास्थाय व्याप्नुते जगत्' । इति गारुडे ।। १५ ।।

स्वधिष्ण्यं प्रतपन् प्राणो बहिश्च प्रतपत्यसौ ।
एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान् ।। १६ ।।

'पश्यन् स्वधिष्ण्यं देहं स बहिष्ठान्विषयानपि ।
एवमण्डान्तरं पश्यन्बहिः सर्वं च पश्यति' । इति वामने ।। १६ ।।

सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ।
महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः ।। १७ ।।

'अव्यक्तमात्मनोऽन्नं च महदादि विनाशि च ।
यदतीतः परो विष्णुः स एवातो विमोक्षदः' ।। इति नारदीये ।।१७।।

पादोऽस्य सर्वा भूतानि (सर्वभूतानि) पुंसः स्थितिविदो विदुः ।
अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ।। १८ ।।

'स्वरूपांशो विभिन्नांश इति द्वेधांश इष्यते ।
अनन्तासनवैकुण्ठपद्मनाभाः स्वयं हरिः ।
जीवा इमे विभिन्नांशा धर्माधर्मादिसंयुताः' ।। इति वामने ।

सर्वस्य यथावत्स्थितिविदः ।

'त्रिमूर्धा सन् हरिर्धत्ते द्युत्रयं मूर्धभिस्त्रिभिः ।
अनन्तासनवैकुण्ठनारायणपुराणि तु ।
बहुलक्षोच्छ्रितेष्वेषु स वसत्यमृतो हरिः' ।। इति मात्स्ये ।। १८ ।।

पादास्त्रयो बहिस्त्वासन्नप्रजानां य आश्रयाः ।
अन्तस्त्रिलोक्यास्त्वपरो गृहमेधैर्बृहद्धुतः ।। १९ ।।

'अनन्तासनवैकुण्ठनारायणपुराणि तु ।
त्रीणि धामानि वै विष्णोस्त्रिलोकाद्बहिरेव च ।
अदायदास्तु पुत्राणामुद्रिक्तज्ञानचक्षुषः ।
नारायणपरा देवा एवं तान्याप्नुवन्ति' च ।।

'स एवान्यस्वरूपेण शक्रलोकसमीपगः ।
इज्यो यज्ञपुमान्नाम ज्ञानिनां गृहिणां पदम् ।
यतीनां ध्रुवलोकस्थो वनिनां मेरुमध्यगः ।
आदित्यमण्डलस्थस्तु ज्ञानिनां ब्रह्मचारिणाम्' ।।
इति ब्रह्माण्डे ।। १९ ।।

सृती विचक्रमे विष्वक्साशनानशने उभे ।
यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ।। २० ।।

'त्रिपात्स एव भगवान् सर्वप्राणिषु संस्थितः ।
निरन्नेषु च विद्वत्सु त्रिदशेष्वितरेषु च' ।। इत्यध्यात्मे ।। २० ।।

तस्मादण्डाद्विराड् जज्ञे भूतेन्द्रियगुणाश्रयः ।
तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवाश्रयम् ।। २१ ।।

यदास्य नाभ्यात् नलिनात् अहमासं महात्मनः ।
नाविन्दं यज्ञसम्भारान् पुरुषावयवान् ऋते ।। २२ ।।

'तस्माद्धरेरण्डमभूदण्डादपि चतुर्मुखः ।
स विराण्नामकस्तस्मादधिको हरिरेव तु ।
अण्डाज्जातस्य तस्यान्यद्रूपं पद्मादभूद्धरेः ।
यदोभयात्मको जज्ञे ब्रह्मा लोकपितामहः ।
तदैव सोऽतिरिक्तोऽभूच्छर्वपूर्वापराज्जनात् ।
त्रिलोकस्थानगं विष्णुमयजच्च समाहितः ।
तद्रूपभूतांस्त्रींल्लोकान् पशून् कृत्वा महामनाः' ।।
इति गारुडे ।। २१-२२ ।।

नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च ।
देवतानुक्रमः कल्पः सङ्कल्पः सूत्रमेव च ।। २५ ।।

सूत्रं मीमांसासूत्रम् ।। २५ ।।

नारायणे भगवति तदिदं विश्वमाहितम् ।
गृहीतमायोरुगुणे सर्गादावगुणे स्वतः ।। ३० ।।

यस्मात् तमेवायजन् तस्मादिदं तस्मिन्नाहितम् ।

'नित्यं गृहीताः सत्वाद्या जीववज्जडवन्न तु ।
मिथ्यामानात्स्वरूपत्वात्स्वातन्त्र्याद्बहिरेव तु' ।। इति ब्रह्मतर्के ।।३०।।

इति तेऽभिहितं तात यथेदमनुपृच्छसि ।
नान्यद्भगवतः किञ्चिद्भाव्यं सदसदात्मकम् ।। ३२ ।।

'सदिति व्यक्तमुद्दिष्टमसदव्यक्तमुच्यते ।
गम्यागम्यस्वरूपत्वात्तत्सत्तादिर्हरेर्यतः ।
अतस्तस्मादन्यदेव ह्यनन्यदिति भण्यते' ।। इति च ।। ३२ ।।

नतोऽस्म्यहं तच्चरणं समीयुषां
भवच्छिदं स्वस्त्ययनं सुमङ्गलम् ।
यः स्वात्ममायाविभवं स्वयं गतो
नाहं नभस्वांस्तमथापरे कुतः ।। ३५ ।।

'सर्वजीवनिकायेषु ब्रह्मवायू हरेर्विदौ ।
न चान्यस्तादृशो वेत्ता यावद्वेत्ति हरिः स्वयम् ।
तावत्तावपि नो विष्णुं जानीतो लोकवन्दितौ' ।।
इति ब्रह्माण्डे ।। ३५ ।।

स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः ।
आत्माऽऽत्मन्यात्मनाऽऽत्मानं स संयच्छति पाति च ।।३८।।

'स्वयमेव स्वरूपाणि मत्स्यकूर्मादिकान्यजः ।
स्वात्मन्येवेच्छया सृष्ट्वा तैर्देवादीन्प्रपात्यसौ ।

संयच्छत्यसुरान्विष्णुः कल्पे कल्पे जगत्प्रभुः ।
तिरोहितं स्वरूपं च प्रकाशयति शास्त्रतः' ।।

इति भागवततन्त्रे ।। ३८ ।।

विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम् ।
सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ।। ३९ ।।

ऋतं विद(न्द)न्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः ।
यदा तदैवासत्तर्कैस्तिरोधीयेत विप्लुतम् ।। ४० ।।

'ऋतं तदात्मना ज्ञप्तेः सत्यं साधुत्वतः परम् ।
सम्यक्संस्थमदूष्यत्वाच्छुद्धं दोषोज्झितत्वतः ।
केवलं तादृशाभावात्प्रत्यगन्तरवस्थितेः ।
एतदेतादृशं तत्त्वं यो वेद स विमुच्यते' ।। इति ब्रह्मतर्के ।।३९,४०।।

आद्योऽवतारः पुरुषः परस्य
कालः स्वभावः सदसन्मनश्च ।
द्रव्यं विकारो गुण इन्द्रियाणि
विराड् स्वराट्स्थास्नु चरिष्णु भूम्नः ।। ४१ ।।

अहं भवो यज्ञ इमे प्रजेशाः
दक्षादयो ये भवदादयश्च ।
स्वर्लोकपालाः खगलोकपालाः
नृलोकपालास्तललोकपालाः ।। ४२ ।।

गन्धर्वविद्याधरचारणेशाः
ये यक्षरक्षोरगनागनाथाः ।
ये वा ऋषीणामृषभाः पितॄणां
दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः ।। ४३ ।।

अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपश्वधीशाः ।
यत्किञ्च लोके भगवन्महस्वदोजः सहस्वद्बलवत्क्षमावत् ।
ह्रीश्रीविभूत्यात्मवदद्भुतार्णं तत्तत्परं रूपवदस्वरूपम् ।।४४।।

प्राधान्यतो यानृषय आमनन्ति
लीलावतारान् पुरुषस्य भूम्नः ।
आपीयतां कर्मकषायशोषा-
ननुक्रमिष्ये त इमान् सुपेशलान् ।। ४५ ।।

'यः शेते प्रलये विष्णुः शून्यनामा महाकृतिः ।
स तु नारायणो नाम नराणामयनत्वतः ।
रूपं द्वितीयं भवति दीपाद्दीपान्तरं यथा ।
सिसृक्षोस्तस्य पुरुष इत्याहुस्तद्विदो जनाः ।
स रमाया द्वितीये तु रूपे प्रकृतिसंज्ञिते ।
वीर्यमाधत्त पुरुषो महांस्तस्मादजायत ।
योऽसौ हिरण्यगर्भाख्यः पुरुषः सोऽपि भण्यते ।
श्रद्धेत्युक्ता तु तत्पत्नी साऽपि प्रकृतिरुच्यते ।
प्रलये त्वशरीरौ तौ विभागेन व्यवस्थितौ ।
शरीरं प्राप्य पुरुषात्संयोगं तौ प्रचक्रतुः ।

ततः पुनर्महत्तत्त्वं प्रजातं जगदङ्कुरम् ।
स्वस्यैव पुत्रतां यातमहङ्कारस्ततोऽजनि' ।। इति व्योमसंहितायाम् ।

**पुरुषः** तस्यैव **आद्योऽवतारः** । कालादयो रूपवत् । अस्वरूपमपि प्रियत्वात् ।

'पुरुषाद्या हरेरूपं ब्रह्माद्यास्तत्प्रियाः स्मृताः ।
स्वरूपभूता नैवैते तत्सन्निधियुता अपि' ।। इति पाद्मे ।

'कालो वस्तुस्वभावश्च प्रकृतिः प्राण एव च ।
मनश्च पञ्चभूतानि विकारस्त्रिगुणा अपि ।
न स्वरूपं हरेरेतत्तथाऽप्येषु हरिः स्थितः' ।। इति पाद्मे ।

**सत्** प्राणः । 'सदिति प्राणः' इति श्रुतेः ।

'द्रव्यं तु पञ्चभूतानि विकारोऽण्डमुदाहृतम् ।
विराजं गरुडं प्राहुः स्वराडिन्द्र उदाहृतः' ।। इति षाड्गुण्ये ।

'सर्वं तु रूपवद्विष्णोर्विशेषेण विभूतिमत् ।
अतिप्रियत्वान्नैवैतत्स्वरूपमपि भण्यते' ।। इति स्कान्दे ।

'स्वतो महत्वं तु महोविशेषप्राप्तिशक्तिता ।
विभूतिर्लक्षणोन्नाहो लक्ष्मीशब्देन भण्यते' ।। इति ब्रह्मतर्के ।

'प्रधानत्वेन सर्वस्मान्मत्स्यकूर्मादयो हरेः ।
अवताराः श्रुतौ ख्याताः स एवैते ततः स्मृताः ।
न स्वरूपं तु ब्रह्माद्याः स्मृता मायाविभूतयः ।
स्वेच्छयैषां विशिष्टत्वं कुरुते तत्तथा स्मृताः ।' इति व्योमसंहितायाम् ।।

'यज्ञशब्दोदितौ द्वौ तु देवौ लोकपुरस्कृतौ ।
एको नारायणस्तत्र रुद्रच्छिन्नस्तथापरः ।
स तु यज्ञाभिमानी स्यात्तत्पतिः केशवः स्मृतः' ॥
इति पाद्मे ॥ ४१-४५ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥



## सप्तमोऽध्यायः

जातो रुचेरजनयत्सुयशाः सुयज्ञः
आकूतिसूनुरमरानथ दक्षिणायाम् ।
लोकत्रयस्य महतीमहरद्य आर्तिं
स्वायम्भुवेन मनुना हरिरित्यनूक्तः ॥ २ ॥

'क्रियाभिमानाद्यज्ञोऽसाविन्द्रसूनुः प्रकीर्तितः ।
यज्ञेशत्वात्स्वयं विष्णुर्यज्ञो रुचिसुतः स्मृतः' ॥ इति पाद्मे ।

**हरिरिति** ज्ञात्वेशावास्यमित्यादिनाऽ**नूक्तः** ।

'त्रयी श्रुतिर्नित्यवाक्च वेदोऽनुवचनं तथा' ॥ इति ह्यभिधानम् ॥२॥

अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो
दत्तो मयाहमिति यद्भगवान्स दत्तः ।
यत्पादपङ्कजपरागपवित्रदेहा
योगर्धिमापुरमयीं यदुहैहयाद्याः ॥ ४ ॥

**अमर्यी** विष्णुप्रधानाम् ।। ४ ।।

तप्तं तपो विविधलोकसिसृक्षया मे
आदौ सनात्सुतपसस्तपतः स नोऽभूत् ।
प्राक्कल्पसम्प्लवविनष्टमिहात्मतत्त्वं
सम्यग्जगाद मुनयो यदचक्षतात्मन् ।। ५ ।।

मे तपतः सतः । सः नः अर्थे । **सनात्** पूर्वम् ।

'ब्रह्मणस्तपतः पूर्वं विष्णुर्जात उरुक्रमः ।
सर्वलोकहितार्थाय येन रूपं प्रकाशितम् ।
यश्च पाति सदा लोकानजितो जयतां वरः ।
तस्माद्रुद्रः समुत्पन्नः सर्वसंहारकृद्विभुः ।
एते त्रिपुरुषाः प्रोक्ताः सृष्टिस्थित्यन्तकारिणः ।
निमित्तमात्रं तौ देवौ विष्णुः सर्वस्य कारणम्' ।। इति स्कान्दे ।। ५ ।।

धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्या
नारायणो नर इति स्वतपःप्रभावः ।
दृष्टात्मनो भगवतो नियमावलोपं
देव्यस्त्वनङ्गपृतना घटितुं न शेकुः ।। ६ ।।

'नरो नारायणश्चैव हरिः कृष्णस्तथैव च ।
चत्वारो धर्मतनया हरिरेव त्रयो मतः ।
अनन्तो नरनामाऽत्र तस्मिंस्तु नरनामवान् ।
विशेषेण स्वयं विष्णुर्निवसत्यम्बुजेक्षणः ।
तस्माच्चतुर्धा धर्मस्य जातो विष्णुरितीरितः' ।। इति षाड्गुण्ये ।।६।।

विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञो
बालोऽपि सन्नपगतस्तपसे वनाय ।
तस्मा अदादध्रुवगतिं गृणते प्रसन्नो
दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात् ।। ८ ।।

'अवतारो महाविष्णोर्वासुदेव इतीरितः ।
यो ध्रुवाय निजं प्रादात्स्थानमन्यानधिष्ठितम्' ।।
इति प्रकाशसंहितायाम् ।। ८ ।।

यद्वेनमुत्पथगतं द्विजवाक्यवज्र-
निष्पिष्टपौरुषभगं निरये पतन्तम् ।
ज्ञात्वार्थितो जगति पुत्रपदश्च लेभे
दुग्धा वसूनि वसुधा सकलानि येन ।। ९ ।।

'पृथुर्नाम महाराजस्तत्र विष्णुः स्वयं प्रभुः ।
पृथुनामा चतुर्बाहुः प्रविष्टस्तेन चार्थितः' ।।
इति महासंहितायाम् ।। ९ ।।

नाभेरसावृषभ आस सुदेविसूनुः
यो वै चचार समदृग् हृदि योगचर्याम् ।
यत्पारमहंस्यमृषयः पदमामनन्ति
स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः ।। १० ।।

यद्रूपं परमहंसप्राप्यं **पदमामनन्ति** ।। १० ।।

सत्रे ममास भगवान्हयशीर्ष एषः
साक्षात् स यज्ञपुरुषस्तपनीयवर्णः ।
छन्दोमयो मखमयोऽखिलदेवतात्मा
वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ।। ११ ।।

'छन्दांसि च मखाश्चैव देवा लोकाश्च सर्वशः ।
सर्वे विष्णौ स्थिता यस्मादतः सर्वमयो ह्यसौ' ।।
इति महासंहितायाम् ।। ११ ।।

मत्स्यो युगान्तसमये मनुनोपलब्धः
क्षोणीमयो निखिलजीवनिकायकेतः ।
विस्रंसितानुरुभये सलिले मुखान्मे
आदाय तत्र विजहार ह वेदमार्गान् ।। १२ ।।

क्षोणीमयनौकाश्रयत्वात् क्षोणीमयः ।। १२ ।।

स्मृत्वा हरिस्तमरणार्थिनमप्रमेयः
चक्रायुधः पतगराजभुजाधिरूढः ।
चक्रेण नक्रवदनं विनिपाट्य तस्मात्
हस्ते प्रगृह्य भगवान्कृपयोज्जहार ।। १६ ।।

'हरिस्तापसनामाऽसौ जातस्तपसि वै मनुः ।
गजेन्द्रं मोचयामास ससर्ज च जगद्विभुः ।।' इति मात्स्ये ।।१६।।

नार्थो बलेरयमुरुक्रमपादशौचम्
अम्भः शिवं धृतवतो विबुधाधिपत्यम् ।

यो वै प्रतिश्रुतमृतेऽपि च शीर्षमाणं
आत्मन्यमङ्ग मनसा हरयेऽभिमेने ।। १८ ।।

'ऐन्द्रं पदं नान्तरीयं फलं तु हरितोषणम् ।
जगद्दातुर्बलेर्यस्मादानन्दोद्रिक्तता भवेत्' ।। इति ब्रह्मतर्के ।
शीर्षाख्यं मानम् ।। १८ ।।

तुभ्यञ्च नारदभृशं भगवान्वि-
वृद्धभावेन साधु परितुष्ट उवाच योगम् ।
ज्ञानञ्च भागवतमात्मसुतत्त्वदीपं
यद्वासुदेवशरणा विदुरञ्जसैव ।। १९ ।।

'ऐतरेयो हरिः प्राह नारदाय स्वकां तनुम् ।
यत्प्रापुर्वैष्णवा नान्ये यदृते न सुखं परम्' ।। इति ब्राह्मे ।।१९।।

चक्रञ्च दिक्ष्वविहतं दशसु स्वतेजो
मन्वन्तरेषु मनुवंशधरो बिभर्ति ।
दुष्टेषु राजसु दमं विदधत्स्वकीर्तिं
सत्ये निविष्ट उशतीं प्रथयंश्चरित्रैः ।। २० ।।

'मन्वन्तरेषु भगवान् चक्रवर्तिषु संस्थितः ।
चतुर्भुजो जुगोपैतद्दुष्टराजन्यनाशकः ।
राजराजेश्वरेत्याहुर्मुनयश्चक्रवर्तिनाम् ।
वीर्यदं परमात्मानं शङ्खचक्रगदाधरम्' ।। इति सत्यसंहितायाम् ।।२०।।

कृत्स्नप्रसादसुमुखः कलया कलेशः
इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे ।
तिष्ठन्वनं सदयितानुज आविवेश
यस्मिन्विरुध्य दशकन्धर आर्तिमार्च्छत् ।। २३ ।।

यस्मा अदादुदधिरूढभयाङ्गवेपो
मार्गं सपद्यरिपुरं हरवद्दिधक्षोः ।
दूरेसुहृन्मथितरोषसुशोषदृष्ट्या
तातप्यमानमकरोरगनक्रचक्रः ।। २४ ।।

वक्षःस्थलस्पर्शरुग्णमहेन्द्रवाह-
दन्तैर्विलम्बितककुब्जयरूढहासः ।
सद्योऽसुभिः सह विनेष्यति दारहर्तुः
विस्फूर्जितैर्धनुष उच्चरितैः ससैन्यः ।। २५ ।।

प्राणादिकलेशः । दूरस्था सुहृद्यस्य भगवतः स **दूरेसुहृत्** । **सुशोषो** अग्निः ।

'अग्निः सुशोषः कक्षघ्नस्तिमिरारिर्हिरण्यदः' । इति ह्यभिधाने ।

**विनेष्यति** विनाशम् एष्यति । **दारहर्तुः** भगवतः ।।

'धनुर्विस्फूर्जितैर्नष्टो रावणः पूर्वमेव तु ।
पुनः शरै राममुक्तैः सानुबन्धो विनेश्यति' ।। इति स्कान्दे

।। २३-२५ ।।

भूमेः सुरेतरवरूथविमर्दितायाः
क्लेशव्ययाय कलया सितकृष्णकेशः ।
जातः करिष्यति जनानुपलक्ष्यमार्गः
कर्माणि चात्ममहिमोपनिबन्धनानि ।। २६ ।।

'राम एको ह्यनन्तांशस्तत्र रामाभिधो हरिः ।
शुक्लकेशात्मकस्तिष्ठन् रमयामास वै जगत्' ।। इति ब्राह्मे ।
'विष्णोर्नान्येन कर्माणि परेषां तन्निबन्धनम्' ।। इति मात्स्ये ।।२६।।

तोकेन जीवहरणं यदुलूपिकायाः
त्रैमासिकस्य च पदा शकटोऽपवृत्तः ।
यद्रिङ्गताऽन्तरगतेन दिविस्पृशोर्वा
उन्मूलनन्त्वितरथाऽर्जुनयोर्न भाव्यम् ।। २७ ।।

'सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यते' । इति तन्त्रमालायाम् ।
इतरथा विष्णुर्न चेत् । स्वमहिमनिबन्धनत्वेन न भाव्यम् ।। २७ ।।

तत्कर्म दिव्यमिव यन्निशि निःशयानं
दावाग्निनाऽऽशु विपिने परिदह्यमाने ।
उन्नेष्यति व्रजमितोऽवसितान्तकालं
नेत्रे पिधाय्य(पिधाप्य) सबलोऽनधिगम्यवीर्यः ।। २९ ।।

दिव्यमिव स्तुत्यमिव । तदपेक्षया । अन्येषां स्तुत्यमेव यत्तस्य तच्च दिव्यमिव ।। २९ ।।

नन्दं च मोक्ष्यति भयाद् वरुणस्य पाशात्
गोपान् बिलेषु पिहितान् मयसूनुना च ।
जल्प्यावृतं निशि शयानमतिश्रमेण
लोके विकुण्ठ उपधास्यति गोकुलं सः ।। ३१ ।।

'अन्यथाज्ञानहेतुर्या वाक् सा जल्पिः प्रकीर्तिता' ।।
इति तन्त्रमालायाम् ।।

'यत्तु सर्वात्मनाऽज्ञानं निशा सा परिकीर्तिता' ।। इति कौर्मे ।।३१।।

क्रीडन् वने निशि निशाकररश्मिगौर्यां
रासोन्मुखः कलपदायतमूर्च्छितेन ।
उद्दीपितस्मररुजां व्रजसद्वधूनां
हर्तुर्हरिष्यति शिरो धनदानुगस्य ।। ३३ ।।

कलपदं च आयतं च ।

'सप्तस्वरसमाहारो मूर्च्छनेति प्रकीर्तिता' ।। इति गान्धर्वे ।। ३३ ।।

ये च प्रलम्बखरदर्दुरकेश्यरिष्ट-
मल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः ।
अन्येऽपि साल्वकपिबल्वलदन्तवक्र-
सप्तोक्षशंबरविडूरथरुग्मिमुख्याः ।। ३४ ।।

ये वा मृधे समितिशालिन आत्तचापाः
काम्भोजमत्स्यकुरुसृञ्जयकैकयार्णाः(कैकयाद्याः) ।

यास्यन्त्यदर्शनमिता बलपार्थभीम-
व्याजाह्वयेन हरिणा निलयं तदीयम् ।। ३५ ।।

'विद्वेषिणोऽप्युदासीना भक्ता अपि न संशयः ।
हरेर्हि सदनं यान्ति व्यक्तं भक्तैस्तु गम्यते ।
आरभ्य तम आमुक्तेः कृष्णस्य सदनं यतः ।
अव्यक्तहरिलोकत्वादन्येषामन्यलोकता' ।। इति बृहत्संहितायाम् ।।

'रामभीमार्जुनादीनि विष्णोर्नामानि सर्वशः ।
रमणाभयवर्णाद्याः शब्दवृत्तेर्हि हेतवः ।
हरिर्हि तत्र तत्रस्थो रमणादीन्करोत्यजः ।
अतस्तस्यैव नामानि व्याजादन्यगतानि तु ।
व्यवहारप्रवृत्त्यर्थं दुष्टानां मोहनाय च' ।। इति स्कान्दे ।।३४-३५।।

कालेन मीलितदृशामवमृश्य नृणां
स्तोकायुषां स्वनिगमो बत दूरपारः ।
आविर्हितस्त्वनुयुगं स हि सत्यवत्यां
वेदद्रुमं विटपशो विभजिष्यति स्म ।। ३६ ।।

'तृतीये सप्तमे चैव षोडशे पञ्चविंशके ।
अष्टाविंशे युगे कृष्णः सत्यवत्यामजायत ।
व्यासाचार्यस्तु पूर्वेषु चरमे स्वयमेव तु ।
विव्यास वेदांश्चक्रे च भारतं वेदसंमितम्' ।। इति च ।। ३६ ।।

सर्गे तु योऽहमृषयो नव ये प्रजेशाः
स्थानेऽथ धर्ममखमन्वमरावनीशाः ।

अन्ते त्वधर्महरमन्युवशासुराद्याः
मायाविभूतय इमाः पुरुशक्तिभाजः ।। ३९ ।।

'हरीच्छया विभूतिर्या ब्रह्मादीनां सदा भवेत् ।
इच्छया वा बहुविधस्तेषु विष्णुः स्वयं स्थितः ।
अतो मायाविभूतित्वं तेषां मत्स्यादिकाः(मत्स्यादयः) स्वयम्'
इत्यध्यात्मे ।। ३९ ।।

नान्तं विदाम्यहममी मुनयः प्रजेशाः
मायाबलस्य पुरुषस्य कुतोऽपरे ये ।
गायन् गुणान्दशशतानन आदिदेवः
शेषोऽधुनाऽपि समवस्यति नास्य पारम् ।। ४१ ।।

विदुः **नान्तम्** । अनन्तत्वात् ।। ४१ ।।

येषां स एव भगवान्दययेदनन्तः
सर्वात्मनाऽश्रितपदो यदि निर्व्यलीकम् ।
ते वै विदन्त्यतितरन्ति च देवमायां
नैषां ममाहमिति धीः श्वसृगालभक्ष्ये ।। ४२ ।।

**देवमायां विदन्ति** संसारमतितरन्ति च ।। ४२ ।।

ते वै विदन्त्यतितरन्ति च देवमायां
स्त्रीशूद्रहूणशबरा अपि पापजीवाः ।
यद्यद्भुतक्रमपरायणशीलशिक्षाः
तिर्यग्जना अपि किमु श्रुतधारणा ये ।। ४६ ।।

तत्परायणास्तच्छीलास्तच्छिक्षाश्च ।। ४६ ।।

शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं
शुद्धं समं सदसतः परमात्मतत्वम् ।
शब्दो न यत्र पुरुकारकवान् क्रियार्थो
माया परैत्यभिमुखे च विलज्जमाना ।। ४७ ।।

'अव्यक्ताद्यनहंमानादात्मतत्त्वं हरिः स्मृतः ।
अशब्दश्चाप्रसिद्धत्वाच्छान्तः पूर्णसुखत्वतः' ।। इति ब्रह्मतर्के ।।४७।।

स श्रेयसामपि विभुर्भगवान्यतोऽस्य
भावस्वभावविहितस्य सतः प्रसिद्धः ।
देहे स्वधातुविगमे तु विशीर्यमाणे
व्योमेव तत्र पुरुषो न विशीर्यतेऽजः ।। ४९ ।।

**भावस्वभावो** भक्तिस्वभावः । तेन निर्मितस्य सत्पुरुषस्य प्रसिद्धः ।

'भावो भक्तिः प्रणामश्च प्रावण्यमपि चादरः' । इत्यभिधानात् ।।४९।।

सोऽयं तेऽभिहितस्तात भगवान्विश्वभावनः ।
समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत् ।। ५० ।।

'सत्तादिर्यत्स्वतो विष्णोस्तस्मादन्यः स सर्वतः ।
यत्सत्तादिरतोऽन्यस्य नान्यत्वं भेदिनोऽपि तु' ।। इति ब्रह्माण्डे ।।५०।।

नृजन्मनि न तुष्येत किं फलं यमनश्वरे ।
कृष्णे यद्यपवर्गेशे भक्तिः स्यान्नानपायिनी ।। ५३ ।।

किं स्याद्वर्णाश्रमाचारैः किं दानैः किं तपःश्रुतैः ।
सर्वाघघ्नोत्तमश्लोके न चेद्भक्तिरधोक्षजे ।। ५४ ।।

'आक्षिप्यते किमित्येतद्यतोऽल्पफलता भवेत् ।
वस्तुनो यस्य चाल्पत्वं पुंसो वा नेति चोच्यते' ।।
इति प्रकाशसंहितायाम् ।। ५३,५४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे सप्तमोऽध्यायः ।। ७ ।।



## अष्टमोऽध्यायः

पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः ।
लोकैरमुष्यावयवाः सपालैरिति शुश्रुमः ।। ११ ।।

निजावयवेभ्यः सृष्टाः । बाह्यावयवा लोकैः कल्प्यन्ते ।। ११ ।।

यस्मिन्कर्मसमावापो यथा येनोपगृह्यते ।
गुणानां गुणिनां चैव परिमाणं सुविस्तरम् ।। १४ ।।

जीवे **कर्मसमावापः** । परमेश्वरेण **गृह्यते** । **गुणिनां** महदादिजीवानां सामर्थ्ये **परिमाणम्** 'देवासुरेभ्यो मघवान्' इत्यादि ।। १४ ।।

नृणां साधारणो धर्मः सविशेषश्च यादृशः ।
श्रेणीनां राजर्षीणाञ्च धर्मः कृच्छ्रेषु जीवताम् ।। १८ ।।

श्रेणीनाम् अङ्गरक्षकाणां युद्धेषूच्यते ॥ १८ ॥

तत्त्वानां परिसङ्ख्यानं लक्षणं हेतुलक्षणम् ।
पुरुषाराधनविधिः योगस्याऽध्यात्मिकस्य च ॥ १९ ॥

**हेतुलक्षणं** ब्रह्मलक्षणम् ॥ १९ ॥

योगेश्वरैश्वर्यगतिं लिङ्गभङ्गं च योगिनाम् ।
वेदोपवेदधर्माणामितिहासपुराणयोः ॥ २० ॥

योगतो **लिङ्गभङ्गः** पूर्वोक्तः । 'पानेन ते देव' इत्यादि पश्चात् ॥२०॥

यथाऽऽत्मतन्त्रो भगवान् विक्रीडत्यात्ममायया ।
विसृज्य च यथा मायामुदास्ते साक्षिवद्विभुः ॥ २३ ॥

'द्वेधा वावाऽत्ममाया तद्रूपा तद्वशा च' इति । तद्वशया संसारयति । स्वरूपया विमोचयत्युदास्ते तद्वशां विमुक्तस्थ इतरयैनं रमयत्येष आत्मैष आनन्दः' । इति सौकरायणश्रुतिः ॥ २३ ॥

अत्र प्रमाणं हि भवान् परमेष्ठी यथाऽऽत्मभूः ।
अपरे ह्यनुतिष्ठन्ति पूर्वेषां पूर्वजैः कृतम् ॥ २५ ॥

यस्मात् **अनुतिष्ठन्ति** तस्मात् **परमेष्ठी प्रमाणम्** ॥ २५ ॥

सूत उवाच—

स उपामन्त्रितो राज्ञा कथायामिति सत्पतेः ।
ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि ॥ २७ ॥

'बालोऽपि स गुरुत्वेन मुनिभ्यो ब्रह्मणा यतः ।
दत्तोऽतो ब्रह्मरातेति नाम वैयासकेरभूत्' ।। इति ब्राह्मे ।। २७ ।।

आह भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ।। २८ ।।

'यत्र ब्रह्मान्तरोत्पत्तिः ब्रह्मकल्पः स ईरितः' ।। इति च ।। २८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयसन्धे अष्टमोऽध्यायः ।। ८ ।।



## नवमोऽध्यायः

श्रीशुक उवाच—

आत्ममायामृते राजन् परस्यानुभवात्मनः ।
न घटेतार्थसम्बन्धः स्वप्ने द्रष्टुरिवाञ्जसा ।। १ ।।

बहुरूप इवाऽभाति मायया बहुरूपया ।
रममाणो गुणेष्वस्या ममाहमिति मन्यते ।। २ ।।

यर्हि चायं महित्वे स्वे परस्मिन्कालमाययोः ।
रमते गतसंमोहस्त्यक्त्वोदास्ते तदोभयम् ।। ३ ।।

**परस्य** अर्थव्यतिरिक्तस्य । 'यदधातुमतः' इत्यस्य ह्युत्तरम् ।

'अशरीरस्य जीवस्य शरीरोत्पत्तिकारणम् ।
ईश्वरेच्छा प्राथमिका तां विना न हि किञ्चन ।

द्वितीया प्रकृतिः प्रोक्ता तद्रूपा हि गुणास्त्रयः ।
तेषां सम्पातजो भावो ममाहमिति या मतिः ।
देहात्परस्य देहित्वमहंभावमृते कुतः ।
यथा रजस्तमोभावैर्विना स्वप्नो न जायते ।
निद्रा कामाद्यभावेन तद्वद्देहः क तान्विना ।
तस्मात्प्रकृत्यैव पुमान्मानुषादिविकारया ।
मानुषादिरिवाभाति नित्यचैतन्यरूपवान् ।
यदा स्वरूपं जानाति कालप्रकृतिवर्जितम् ।
वासुदेवप्रसादेन तदा मुक्तो भवत्यसौ' ।। इति भविष्यत्पुराणे ।।१-३।।

आत्मतत्वविशुध्यर्थं यदाह भगवानृतम् ।
ब्रह्मणेऽदर्शयद्रूपमव्यलीकव्रतादृतः ।। ४ ।।

यतो भगवदुक्तं प्रमाणमतस्तदुक्तं पुराणं त्वत्प्रश्नानामुत्तरत्वेन वक्ष्ये ।।४।।

दिव्यं सहस्राब्दममोघदर्शनो
जितानिलात्मा विजितोभयेन्द्रियः ।
अतप्यत स्माखिललोकतापनं
तपस्तपीयांस्तपतां समाहितः ।। ८ ।।

**तपो** ब्रह्म । 'तपसोऽध्यजायत' । इति श्रुतेः । अखिललोकप्रकाशनं यत् तदाऽऽलोचयामास । तपतां तपीयानित्यनेनात्युत्तमोत्तमत्वमुक्तं भवति ।

'महन्महीयसामादिं ब्रूयादत्युत्तमोत्तमम् ।
यत्राधिकं वदेत्किञ्चिज्ज्ञेयोऽर्थस्तत्र चाधिकः' । इति व्यासनिरुक्ते ।।

'तपोरूपं परं ब्रह्म ब्रह्माऽचिन्तयदञ्जसा' । इति षाड्गुण्ये ।। ८ ।।

तस्मै स्वलोकं भगवान्सभाजितः
सन्दर्शयामास परं न यत् पदम् ।
व्यपेतसंक्लेशविमोहसाध्वसं
सन्दृष्टवद्भिर्विबुधैरभिष्टुतम् ।। ९ ।।

**यत्** यतः । 'यत्तदित्यादयः शब्दाः पञ्चम्यन्ताः प्रकीर्तिताः' ।
इति च ।। ९ ।।

न वर्तते यत्र रजस्तमस्तयोः
सत्वं च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरे-
रनुव्रता यत्र सुरासुरार्चिताः ।। १० ।।

मायातीतत्वात् ।। १० ।।

श्रीर्यत्र रूपिण्युरुगायपादयोः
करोति मानं बहुधा विभूतिभिः ।
प्रेङ्खश्रिता याः कुसुमाकरानुगै-
र्विगीयमाना प्रियकर्म गायती ।। १३ ।।

**प्रेङ्खश्रिताः याः** विभूतयः ।। १३ ।।

ददर्श तत्राखिलसात्वतां पतिं
श्रियःपतिं यज्ञपतिं जगत्पतिम् ।

सुनन्दनन्दप्रबलार्हणादिभिः
स्वपार्षदमुख्यैः परिसेवितं विभुम् ।। १४ ।।

'सत्वं तु शोभनत्वं स्यात्तद्युक्ताः सात्वता मताः' । इत्यध्यात्मे ।।
'मुक्तैः स्वपार्षदैः पूर्वैर्ब्रह्माद्यैश्चैव संयुतम् ।
ब्रह्मा ददर्श तपसा भगवन्तं हरिं प्रभुम्' ।। इति गारुडे ।। १४ ।।

अध्यर्हणीयासनमास्थितं विभुं
वृतं चतुष्षोडशपञ्चशक्तिभिः ।
युक्तं भगैः स्वैरितरत्र चाध्रुवैः
स्व एव धामन्रममाणमीश्वरम् ।। १६ ।।

'इच्छाद्या मोचिकाद्याश्च अणिमाद्याश्च शक्तयः ।
प्रदिष्टा वासुदेवाद्या दामोदरपरास्तथा ।
अङ्गानि विमलाद्यास्तु प्रह्व्याद्यात्मादिका मताः ।
एवं षोडशभिश्चैव पञ्चभिश्च हरिः स्वयम् ।
चतुर्भिश्च वृतो नित्यं तत्स्वरूपाश्च शक्तयः' ।।
इति भागवततन्त्रे ।। १६ ।।

मनीषितानुभावोऽयं मम लोकावलोकनम् ।
यदुपश्रुत्य रहसि चकर्थ परमं तपः ।। २१ ।।

**मनीषितं** तपः ।। २१ ।।

प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते ।
तपो मे हृदयं साक्षादात्माऽऽहं तपसोऽनघ ।। २२ ।।

सृजामि तपसैवेदं ग्रसामि तपसा पुनः ।
बिभर्मि तपसा विश्वं वीर्यं मे दुस्तरं तपः ।। २३ ।।

**कर्मविमोहिते** इदं कार्यमित्यजानति । हृदयं प्रियम् ।

'प्रियं हृदयमुद्रिक्तं कान्तमित्यभिधीयते' । इत्यभिधानात् ।

'तपः प्रियं सदा विष्णोस्तपसैवाप्यते हरिः ।
स्वयं च तपसैवेदं बिभर्ति ज्ञानमेव हि ।
तपःशब्दाभिधं प्रोक्तं ज्ञानरूपो हरिर्यतः ।
ज्ञानवीर्यो ज्ञानबलो ज्ञानानन्द उदाहृतः' ।।
इति बृहत्संहितायाम् ।। २२,२३ ।।

भगवानुवाच—

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ।
सरहस्यं तदङ्गं च गृहाण गदितं मया ।। ३० ।।

'येन येन यथा ज्ञात्वा नियतं मुक्तिराप्यते ।
तद्विज्ञानमिति प्रोक्तं ज्ञानं साधारणं स्मृतम्' ।। इति वामने ।।३०।।

अहमेवासमग्रे च नान्यद्यत्सदसत् परम् ।
पश्चादहं त्वमेतच्च योऽवशिष्येत सोऽस्म्यहम् ।। ३२ ।।

**परं** स्वतन्त्रं न ।

विष्णोरधीनं प्राक् सृष्टेस्तथैव च लयादनु ।
अस्य सत्वप्रवृत्त्यादि विशेषेणाधिगम्यते ।
स्वातन्त्र्यं स्थितिकाले तु कथञ्चिद्बुद्धिमोहतः ।

प्रतीयमानमपि तु तस्मान्नैवेति गम्यताम् ।
जनिष्येऽहं लयिष्येऽहमिति न ह्यभिसन्धितः ।
अतो जीवनमप्येतद्धवेदीशाभिसं(धि)हितम् ।
अतः स्वरूपभेदेऽपि ह्यात्मैवेदमिति श्रुतिः ।
वदत्यस्येशतन्त्रत्वाद्यद(थाऽ)शक्तस्त्वसन्निति ।
विद्यन्ते हि तदा जीवाः कालकर्मादिकं तथा ।
कान्यथा हि पुनः सृष्टिः पूर्वकर्मानुसारिणी' ।। इति ब्रह्मतर्के ।

त्वमेतच्च परं न भवेत् । स्वतन्त्रं न ।। ३२ ।।

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ।। ३३ ।।

यथा महान्ति भूतानि भूतेषूच्चावचेषु च ।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ।। ३४ ।।

अर्थवदिव प्रतीयते । न च परमात्मन्यर्थवत् प्रतीयते । **अर्थं** प्रयोजनमृते । न हि जीवप्रकृतिभ्यामीश्वरस्यार्थः ।

'मुख्यतो विष्णुशक्तिर्हि मायाशब्देन भण्यते ।
उपचारतस्तु प्रकृतिर्जीवश्चैव हि भण्यते' ।। इति च ।

**यथाऽऽभासो जीवः ।।**

'सर्वं परे स्थितमपि नैव तत्रेति भण्यते ।
यतो हरेर्न जीवेन जीवनं न हरौ ततः ।
जीवः प्रकृतिरप्यत्र यतो नैव हि बन्धकृत् ।
कर्म चाफलदातृत्वात्कालश्चापरिणामनात् ।

यथा छत्रधराद्यास्तु रथस्था अपि सर्वशः ।
रथिनो नैव भण्यन्ते एवं हरिगता अपि' ।

'यथा महान्ति भूतानि शरीरेषु बहिस्तथा ।
एवं हरिश्च भूतेषु बहिश्च व्याप्तिहेतुतः ।
तस्मात्तत्स्थो न तत्स्थश्च प्रोच्यते हरिरीश्वरः' इति च ।।३३,३४।।

एतावदेव जिज्ञास्यं तत्वजिज्ञासुनाऽऽत्मनः ।
अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ।। ३५ ।।

अन्यभावाभावकाले देशे च तद्विद्यमानाविद्यमानशक्तिमांश्चेत्यन्वय-व्यतिरेकौ ।। ३५ ।।

अन्तर्हितेन्द्रियार्थाय हरयेऽवहिताञ्जलिः ।
सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत् ।। ३८ ।।

'सर्वस्यापि प्रधानत्वात् स सर्वमय ईर्यते' ।। इति च ।। ३८ ।।

मायां विविदिषुर्विष्णोः मायेशस्य महामुनिः ।
महाभागवतो राजन् पितरं पर्यतोषयत् ।। ४१ ।।

**मायां** माहात्म्यं **विविदिषुः** । अन्येषां माहात्म्यपतेः ।

'मुख्यतो विष्णुमाहात्म्यं मायाशब्दोदितं भवेत् ।
प्रधानत्वाच्च मातृत्वान्मेयत्वं चैव तस्य हि' ।। इति च ।।४१।।

नारदः प्राह मुनये सरस्वत्यास्तटे नृप ।
ध्यायते ब्रह्म परमं व्यासायामिततेजसे ।। ४४ ।।

'हरिर्व्यासादिरूपेण सर्वज्ञोऽपि स्वयं प्रभुः ।
शृणोति नारदादिभ्यो मोहायैषां प्रसिद्धये' ।। इति पाद्मे ।। ४४ ।।

यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम् ।
यथाऽऽसीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः ।। ४५ ।।

'विराड् ब्रह्मा समुद्दिष्टस्तद्गतः परमो यतः ।
अतो वैराजमित्येनमाहुरीशत्वतो विराट्' ।।
इति बृहत्संहितायाम् ।। ४५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे नवमोऽध्यायः ।। ९ ।।



## दशमोऽध्यायः

भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ।
ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ।। ३ ।।

महदाद्यण्डपर्यन्तः सर्गोऽण्डे ब्रह्मणस्तु यः ।
अनुसर्ग इति प्रोक्तः पौरुषश्चेति कथ्यते ।
पञ्चभूतसमूहेन जातः पुरुष उच्यते ।
बहुत्वात्तत्र भूतानां तावत्त्वात्तत्त्वमेकजम्' ।।
इति व्योमसंहितायाम् ।। ३ ।।

निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः ।
मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः ।। ६ ।।

'अनुप्रविश्य परमं जीवस्य शयनं तु यत् ।
सहैव शक्तिभिः स्वीयैरिच्छाद्यैरप्रकाशितैः ।
सन्निरोध इति प्रोक्तो विमुक्तिर्यत्र मोक्षणम्' ।। इति नारदीये ।।६।।

आभासश्च निरोधश्च यतस्तत्त्रयमीयते ।
स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ।। ७ ।।

'सृष्टिस्थित्यप्ययाभासा यद्बलाद्यत्र च स्थिताः ।
तद् ब्रह्म जगदाधारं वासुदेवेति तद्विदुः' ।। इति भागवततन्त्रे ।।७।।

आध्यात्मिको यः पुरुषः सोऽसावेवाधिदैविकः ।
यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः ।। ८ ।।

आधिभौतिकेन रूपेण हि चक्षुःप्रकाशयोः सम्यक् परिज्ञानम् ।। ८ ।।

एतदेकतमाभावे यदा नोपलभामहे ।
त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ।। ९ ।।

सुप्तावपि यः सर्वं वेत्ति जीवानां स परः ।

'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति' ।। इति श्रुतेः ।

सुष्ठ्वाश्रयाणामप्याश्रयः ।। ९ ।।

पुरुषोऽण्डं विनिर्भिद्य यदाऽसौ स विनिर्गतः ।
आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ।। १० ।।

तास्ववात्सीत् स्वसृष्टासु सहस्रपरिवत्सरान् ।
तेन नारायणो नाम यदापः पुरुषोद्भवाः ।। ११ ।।

**विनिर्गतः** प्रकाशितः ।

'अण्डं प्रविष्टो यो विष्णुः सोऽण्डं भित्त्वा प्रकाशितः ।
सोऽपोऽसृजत्ततो नारा नरोऽनाशात्परो यतः' ।।
इति नारायणाध्यात्मे ।। १०,११ ।।

एको नानात्वमन्विच्छन्योगतल्पात्समुत्थितः ।
वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा ।। १३ ।।

'तत्तन्नियामकत्वेन बहुत्वं प्राप्तुमीश्वरः ।
अण्डं स्ववीर्यं तत्स्थः सन् कामादन्तस्त्रिधा व्यधात्' ।। इति च ।

'अन्तःस्थितहरेः कामादण्डे ब्रह्मतनोर्जनिः (ब्रह्मा ततोऽजनि) ।
तत्र देवाश्च सञ्जाताः पुनस्तत्त्वात्मकाः प्रभोः' ।। इति च ।।१३।।

उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम् ।
ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः ।। २७ ।।

'मलादिकं कदाचित्तु ब्रह्मा लोकाभिपत्तये ।
आत्मनो निर्ममे कामात्सर्वेषामभवत्ततः ।
वशित्वात्तस्य दिव्यत्वादिच्छया भवति प्रभोः' ।। इति च ।।२७।।

एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया ।
मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम् ।। ३३ ।।

'स्थूलं भगवतो रूपं ब्रह्मदेह उदाहृतः ।
तत्तन्त्रत्वाच्च सूक्ष्मं च शङ्खचक्रगदाधरम्' ।। इति चाध्यात्मे ।।३३।।

अतःपरं सूक्ष्मतममव्यक्तं निर्विशेषणम् ।
अनादिमध्यनिधनं नित्यं वाङ्मनसोः परम् ।। ३४ ।।

**निर्विशेषणं** निरतिशयम् । 'अस्य काव्यस्य कवयो न समर्था विशेषणे' इतिवत् ।। ३४ ।।

अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते ।
उभे अपि न गृह्णन्ति मायासृष्टेऽविपश्चितः ।। ३५ ।।

**मायासृष्टे** जगति ये **अविपश्चितः** ।। ३५ ।।

स वाच्यवाचकतया भगवान्ब्रह्मरूपधृक् ।
नामरूपक्रिया धत्ते सकर्माऽकर्मकः परः ।। ३६ ।।

'नामैव वाचकत्वेन नामरूपक्रिया अपि ।
वाच्यत्वेन हरिर्देवो नियामयति चैकराट्' ।। इति च ।

'कर्तृत्वात्तु सकर्माऽसौ निष्फलत्वादकर्मकः' । इति च ।। ३६ ।।

प्रजापतीन् मनून् देवानृषीन् पितृगणान् पृथक् ।
सिद्धचारणगन्धर्वान् विद्याध्रासुरगुह्यकान् ।। ३७ ।।

**प्रजापत्यादीन्** धत्ते ।। ३७ ।।

सत्वं रजस्तम इति तिस्रः सुरनृनारकाः ।
तत्राप्येकैकशो राजन् भिद्यन्ते गतयस्त्रिधा ।। ४१ ।।

तामसास्तामसा दैत्याः प्रधाना देवशत्रवः ।
तामसा राजसास्तेषामनुगास्तेषु सात्विकाः ।

अनाख्यातासुराः प्रोक्ता मानुषा दुष्टचारिणः ।
राजसास्तामसाश्चैव मध्या राजसराजसाः ।
राजसाः सात्त्विकास्तत्र मानुषेषूत्तमा गणाः ।
देवाः पृथगनाख्याताः स्मृताः सात्त्विकतामसाः ।
अतात्त्विकास्तथाऽऽख्याताः स्मृताः सात्त्विकराजसाः ।
सात्त्विकाः सात्त्विकास्तत्र तात्त्विकाः परिकीर्तिताः ।
तेषां च सात्त्विकाः शेषगरुत्मद्रुद्रतत्स्त्रियः ।
ततोऽपि देवी ब्रह्माणी ब्रह्मा चैव ततः स्वयम् ।। ४१ ।।

यदैवैकतमो अन्याभ्यां (द्वाभ्यां) स्वभाव उपहन्यते ।
तदैवेदं जगद्धाता भगवान् धर्मरूपधृक् ।
पुष्णाति स्थापयन् विश्वं तिर्यङ्नरसुरात्मभिः ।। ४२ ।।

'सात्त्विकेषु त्रिषु यदा त्वेकस्य प्रतिबाधनम् ।
रजस्तमोभ्यां विष्णुर्हि तदा प्रादुर्भवत्यजः ।
राजसांस्तामसान् हत्वा सात्त्विकान् वर्धयिष्यति' ।।
इति स्कान्दे ।। ४२ ।।

ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः ।
सन्नियच्छति तत्काले घनानीकमिवानिलः ।। ४३ ।।

मत्स्यादिरूपी पोषयति नृसिंहो रुद्रसंस्थितः ।
विलापयेद्विरिश्वस्थः सृजते विष्णुरव्ययः ।। इति वामने ।। ४३ ।।

इत्थम्भावेन कथितो भगवान् भगवत्तमः ।
नेत्थम्भावेन हि परं द्रष्टुमर्हन्ति सूरयः ।। ४४ ।।

**भगवत्तमः** ना पुरुषः ।। ४४ ।।

न चास्य जन्मकर्माणि परस्य न विधीयते ।
कर्तृत्वं प्रतिषेधार्थं माययाऽऽरोपितं हि तत् ।। ४५ ।।

**जन्मकर्माणि विधीयत** इति क्रियाविशेषणम् ।

'प्रतिषेधाय बन्धस्य जीवानां परमेशितुः ।
स्वेच्छयैव तु कर्तृत्वं नित्यारूढं चिदात्मकम्' ।। इति भविष्यत्पुराणे ।।

रूप उपरिभाव इति धातुः । 'सुभद्रां रथमारोप्य' इत्यादिवच्च । 'स्वाभाविकी ज्ञानबलक्रिया च' ।। इति च ।। ४५ ।।

अयं (ते) तु ब्रह्मणः कल्पः सविकल्प उदाहृतः ।
विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ।। ४६ ।।

अन्यकल्पानां **साधारणः** । यत्रैव **प्राकृतवैकृताः** सर्वसर्गाः । अन्यब्रह्मकल्पानां च **साधारणः** ।। ४६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वितीयस्कन्धे दशमोऽध्यायः ।। १० ।।

## ।। द्वितीयः स्कन्धः समाप्तः ।।



# तृतीयः स्कन्धः

## प्रथमोऽध्यायः

श्रीशुक उवाच–

एवमेतत् पुरा पृष्टो मैत्रेयो भगवान् किल ।
क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ।। १ ।।

यदा त्वयं मन्त्रकृद् वो भगवानखिलेश्वरः ।
पौरवेन्द्रपुरं हित्वा प्रविवेशात्मसात्कृतम् ।। २ ।।

'युद्धकाले तु विदुरस्तीर्थयात्रां गतोऽपि सन् ।
प्राय आस्ते गजपुरे पाण्डवानां व्यपेक्षया' ।।

इति स्कान्दे ।। १,२ ।।

श्रीशुक उवाच–

यदा तु राजा स्वसुतानसाधून्
पुष्णन्नधर्मेण विनष्टदृष्टिः ।
भ्रातुर्यविष्ठस्य सुतान् विबन्धून्
प्रवेश्य लाक्षाभवने ददाह ।। ६ ।।

यदा सभायां कुरुदेवदेव्याः
केशाभिमर्शं सुतकर्म गर्ह्यम् ।
न वारयामास नृपः स्नुषाया
अस्रैर्हरन्त्याः कुचकुङ्कुमानि ।। ७ ।।

यदा ददाह । यदा केशाभिमर्शः प्राप्त इति यदाशब्दो हेत्वर्थः । 'यदा तदेति हेत्वर्थे कालार्थे चापि भण्यते' । इत्यभिधानम् ।। ६,७ ।।

इत्थं व्रजन् भारतमेव वर्षं
कालेन यावद् गतवान् प्रभासम् ।
तावच्छशास क्षितिमेकचक्रा-
मेकातपत्रामजितेन पार्थः ।। २० ।।

तत्राथ शुश्राव सुहृद्विनष्टिं
वनं यथा वेणुजवह्निनाऽऽश्रयम् ।
संस्पर्धया दग्धमथानुशोचन्
सरस्वतीं प्रत्यगियाय तूष्णीम् ।। २१ ।।

**सुहृद्विनष्टिं** यदुकुलविनष्टिमेष्याम् ।

'विदुरस्तु प्रभासस्थः शापं सङ्क्षेपतोऽशृणोत् ।
यदूनां विस्तरात्पश्चादुद्धवाद्यमुनामनु' ।। इति स्कान्दे ।

भारतविरोधाच्चान्यथा ।। २०,२१ ।।

अन्यानि चेह द्विजदेवदेवैः
कृतानि नानायतनानि विष्णोः ।
प्रत्यङ्गमुख्याङ्कितमन्दिराणि
यद्दर्शनात् कृष्णमनुस्मरन्ति ।। २३ ।।

प्रत्यङ्गमुख्यो विष्णुः ।

'ब्रह्मा प्रत्यङ्कवान् विष्णुः सम्यग्लक्षणवत्तमः' इति तन्त्रमालायाम् ।।२३।।

कच्चित् पुराणौ पुरुषौ स्वनाभ्य-
पद्मानुवृत्त्येह कलावतीर्णौ ।
आसात उर्व्याः कुशलं विधाय
कृतक्षणौ कुशलं शूरगेहे ।। २६ ।।

'पद्मो ब्रह्मा समुद्दिष्टः पद्मा श्रीरपि चोच्यते' इति ब्राह्मे ।

'लोकानां सुखकर्तृत्वमपेक्ष्य कुशलं विभोः ।
पृच्छ्यते सततानन्दात्कथं तस्यैव पृच्छ्यते' । इति पाद्मे ।।२६।।

कच्चित् कुरूणां परमः सुहृन्नो
भामः स आस्ते सुखमङ्ग शौरिः ।
यो वै स्वसॄणां पितृवद् ददाति
वरान् वदान्यो वरतर्पणेन ।। २७ ।।

**वरतर्पणेन** भर्तृतर्पणेन ।। २७ ।।

कच्चित् सुखं सात्वतवृष्णिभोज-
दाशार्हकाणामधिपः सः आस्ते ।
यमभ्यषिञ्चच्छतपत्रनेत्रो
नृपासनाधिं परिहृत्य दूरात् ।। २९ ।।

'आधिर्मनोवरूथं च आत्मा स्वमिति चोच्यते' इत्यभिधानम् ।।२९।।

किं वा कृताघेष्वघमत्यमर्षी
भीमोऽहिवद् दीर्घतमं व्यमुश्चत् ।
यस्याङ्घ्रिपातं रणभूर्न सेहे
मार्गं गदायाश्चरतो विचित्रम् ।। ३७ ।।

अघं व्यमुश्चत् । पुनरपराधबुद्धिं हित्वाऽऽस्ते ।। ३७ ।।

अजस्य जन्मोत्पथनाशनाय
कर्माण्यकर्तुर्ग्रहणाय पुंसाम् ।
न त्वन्यथा कोऽर्हति देहयोगं
परो गुणानामुत कर्मतन्त्रम् ।। ४४ ।।

'न देहयोगो हि जनिर्विष्णोर्व्यक्तिर्जनिः स्मृता' इत्याग्नेये ।

'हरिः कर्ताऽप्यकर्तेति फलाभावेन भण्यते' इति च ।। ४४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे प्रथमोऽध्यायः ।।



## द्वितीयोऽध्यायः

यद्धर्मसूनोर्बत राजसूये
निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ।
कात्स्न्र्येन चात्रोपगतं विधातु-
रर्वाक् सृतौ कौशलमित्यमन्यत ।। १३ ।।

त्रिलोकस्याज्ञानं बत ।

'आनन्दरूपं दृष्ट्वाऽपि लोको भौतिकमेव तु ।
मन्यते विष्णुरूपं च अहो भ्रान्तिर्बहुस्थिता' ।। इति स्कान्दे ।।१३।।

मन्येऽसुरान् भागवतांस्त्र्यधीशे
संरम्भमार्गाभिनिविष्टचित्तान् ।
ये संयुगेऽचक्षत तार्क्ष्यपुत्र-
स्यांसे सुनाभायुधमापतन्तम् ।। २४ ।।

'असुरा अपि ये विष्णुं शङ्खचक्रगदाधरम् ।
भक्तिपूर्वमवेक्षन्ते ज्ञेया भागवता इति ।

विद्विषन्ति तु ये विष्णुमृषिपुत्रा अपि स्फुटम् ।
असुरास्तेऽपि विज्ञेया गच्छन्ति च सदा तमः ।।

जीवद्वयसमायोगाद्धिरण्यकमुखाः परे ।
भक्तिद्वेषयुताश्च स्युर्गतिस्तेषां यथा निजा ।।

कंसपूतनिकाद्याश्च बान्धवादियुता यतः ।
जीवद्वयसमायोगाद्गतिद्वयजिगीषवः ।।

सर्वथा भक्तितो मुक्तिर्द्वेषात्तम उदीरितम् ।
नियमस्त्वनयोर्नित्यं मोहायान्यवचो भवेत्' ।। इति ब्राह्मे ।।२४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे द्वीतीयोऽध्यायः ।।



## तृतीयोऽध्यायः

समाहुता भीष्मककन्यया ये
श्रियः सवर्णेन जिहीर्षयैषाम् ।
गान्धर्ववृत्त्या मिषतां स्वभागं
जह्रे पदं मूर्ध्नि दधत् सुपर्णः ।। ३ ।।

भीष्मककन्याया अर्थे सवर्णमात्रतया आहूताः । एषां श्रियोजिहीर्षयाऽऽह्वानबुद्धिर्भगवता कृता ।

'सुपर्णः सुपरानन्दात्काकुत्स्थो वाचि संस्थितः' । इति पाद्मे ।। ३ ।।

तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः ।
एकैकस्यां दश दश प्रकृतेर्विबुभूषया ।। ९ ।।

'उत्तमैः सर्वतः साम्यं किञ्चित्साम्यमुदीर्यते' इत्याग्नेये ।। ९ ।।

भगवानपि विश्वात्मा लोकवेदपथानुगः ।
कामान् सिषेवे द्वार्वत्यामसक्तः साङ्ख्यमास्थितः ।। १९ ।।

'केवलं भगवज्ज्ञानं साङ्ख्यमित्यभिधीयते' इत्यध्यात्मे ।। १९ ।।

तस्येत्थं रममाणस्य संवत्सरगणान् बहून् ।
गृहमेधेषु योगेषु विरागः समजायत ।। २२ ।।

'सर्वदाऽपि विरक्तः सन् भासयीत विरागिवत् ।
कादाचित्कः कुतस्तस्य लोकशिक्षार्थमिष्यते' ।। इति पाद्मे ।।२२।।

दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् ।
को विश्रंभेत योगेन योगेश्वरमनुव्रतः ।। २३ ।।

तेनापि विरागः प्रदर्शितः । अतः कोऽन्यो विस्रम्भं कुर्यात् ।। २३ ।।

ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः ।
ययुः प्रभासं संहृष्टा रथैर्दैवविमोहिताः ।। २५ ।।

तत्र स्नात्वा पितॄन् देवान् ऋषींश्चैव तदम्भसा ।
तर्पयित्वाऽथ विप्रेभ्यो गावो बहुगुणा ददुः ।। २६ ।।

हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान् ।
हयान् रथानिभान् कन्यां धरां वृत्तिकरीमपि ।। २७ ।।

अन्नं चोरुरसं तेभ्यो दत्वा भगवदर्पणम् ।
गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ।। २८ ।।

'एष्यच्च निश्चितं यत्तदतीतत्वेन भण्यते ।
चक्रवत्परिवृत्तेर्वा दुष्टानां मोहनाय वा ।।'
इति स्कान्दे (नारदीये) ।। २५-२८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे तृतीयोऽध्यायः ।।



## चतुर्थोऽध्यायः

उद्धव उवाच–

भगवानात्ममायाया गतिं तामवलोक्य सः ।
सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ।। ३ ।।

अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह ।
बदरीं त्वं प्रयाहीति स्वकुलं सञ्जिहीर्षुणा ।। ४ ।।

अथापि तदभिप्रेतं जानन्नहमरिंदम ।
पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ।। ५ ।।

**आत्ममायायाः** आत्मसामर्थ्यस्य । **गतिं** पूर्वमेवावलोक्य ।

'ज्ञात्वा कतिपयैर्वर्षैः पूर्वमेव जनार्दनः ।
मौसलं ज्ञानसन्तत्या उद्धवं बदरीं नयत् ।
स ज्ञानं तत्र विस्तीर्य पुनर्द्वारवतीं ययौ ।
पूर्वमेवोपदिष्टोऽपि हरिणा ज्ञानमुद्धवः ।
स्वर्गारोहणकाले तु पुनः पप्रच्छ केशवम् ।
पुनः श्रुत्वा बदर्यां तु वर्षत्रयमुवास ह ।
ज्ञानं संस्थाप्य पश्चाच्च स्वेच्छया स्वर्गतः प्रभुः' ।। इति गारुडे ।।५।।

राजोवाच–

निधनमुपगतेषु वृष्णिभोजे-
ष्वधिरथयूथपयूथपेषु मुख्यः ।
स तु कथमवशिष्ट उद्धवो यद्
हरिरपि तत्यज आकृतिं त्र्यधीशः ।। २८ ।।

शुक उवाच–

ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः ।
संहृत्य स्वकुलं नूनं त्यक्ष्यन् देहमचिन्तयत् ।। २९ ।।

आकृतिं पृथिवीम् ।

'शरीरमाकृतिर्देहः कुः पृथ्वी च मही तथा' ।। इत्यभिधानम् ।

'पृथिवीलोकसन्त्यागो देहत्यागो हरेः स्मृतः ।
नित्यानन्दस्वरूपत्वादन्यन्नैवोपलभ्यते ।।
दर्शयेज्जनमोहाय सदृशीं मृतकाकृतिम् ।
नटवद्भगवान्विष्णुः परज्ञानाकृतिस्स्वयम्' ।। इति स्कान्धे ।

'राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य' ।
इति च ।। २९ ।।

नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्निर्जितः प्रभुः ।
अतो मद्वत् पुनर्लोकं ग्राहयन्निह तिष्ठतु ।। ३१ ।।

'उत्तमैरधिकत्वं वा साम्यं वा विजयोऽपि वा ।
उच्यतेऽपि तु नीचानां मोहार्थं वाप्युपेक्षया ।
मूढदृष्ट्यनुसाराद्वा किञ्चित्साम्येन वा क्वचित्' ।।
इति ब्रह्मतर्के ।। ३१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे चतुर्थोऽध्यायः ।।

❋ ❋ ❋

## पञ्चमोऽध्यायः

परावरेषां भगवन् कृतानि
श्रुतानि मे व्यासमुखादभीक्ष्णम् ।
न तृप्नुमः कर्णसुखावहानां
तेषामृते कृष्णकथामृतौघात् ।। १० ।।

ऋते अवगमे । ऋ गताविति धातोः । तेषां तात्पर्यावगमे कृष्णकथामृतौघ एवासौ यतः ।। १० ।।

मुनिर्विवक्षुर्भगवद्गुणानां
सखाऽपि ते भारतमाह कृष्णः ।
यस्मिन् नृणां ग्राम्यसुखानुवादै-
र्मतिर्गृहीता न हरेः कथायाम् ।। १२ ।।

यस्मिन् भारते हरेः कथायां ग्राम्यसुखानुवादैर्मतिर्न गृहीता ।

'भारतान्नाधिकं विष्णोर्महिमावाचकं क्वचित् ।
भारतान्न विरागाय भारतान्न विमुक्तये ।।' इति पाद्मे ।। १२ ।।

सा श्रद्दधानस्य विवर्धमाना
विरक्तिमन्यत्र करोति पुंसः ।
हरेः सदाऽनुस्मृतिनिर्वृतस्य
समस्तदुःखाप्ययमाशु धत्ते ।। १३ ।।

या ग्राम्यसुखानुवादैर्न गृहीता हरेः कथायां विवर्धमाना मतिः ।। १३ ।।

।। इति श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे पञ्चमोऽध्यायः ।।

## षष्ठोऽध्यायः

मैत्रेय उवाच–

भगवानेक आसेदमग्र आत्मात्मनां विभुः ।
आत्मेच्छानुगतो ह्यात्मा नानाशक्त्युपलक्षितः ।। १ ।।

**आत्मनां विभुः** जीवाधिपतिः ।। १ ।।

स वा एष तदा द्रष्टा नापश्यद् विश्वमेकराट् ।
मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ।। २ ।।

'परमात्मा यतो जीवं मेनेऽसन्तमशक्तितः ।
असन्नसावतो नित्यं सत्यज्ञानो यतो हरिः' ।। इत्याग्नेये ।।

'शक्यत्वाच्छक्तयो भार्याः शक्तिः सामर्थ्यमुच्यते' ।। इति ब्रह्मतर्के ।।

'सुप्तिस्तु प्रकृतेः प्रोक्ता अतीव भगवद्रतिः ।
अनास्थाऽन्यत्र च प्रोक्ता विष्णोश्चक्षुर्निमीलनम्' ।।
इति व्योमसंहितायाम् ।। २ ।।

सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ।
आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ।। ६ ।।

**अंशो** जीवः ।

'कालजीवगुणादीनामभिमानी चतुर्मुखः ।
सर्वजीवाभिमानित्वादंश इत्येव चोच्यते' ।। इति ब्राह्मे ।। ६ ।।

कालमायांशयोगेन भगवद्वीक्षितं नभः ।
तामसानुसृतं स्पर्शं विकुर्वन् निर्ममेऽनिलम् ।। ११ ।।

अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः ।
ससर्ज रूपतन्मात्रां ज्योतिर्लोकस्य लोचनम् ।। १२ ।।

अनिलेनान्वितं ज्योतिर्विकुर्वत् परवीक्षितम् ।
आधत्ताम्भो रसमयं कालमायांशयोगतः ।। १३ ।।

ज्योतिषाऽम्भोऽनुसंसृष्टं विकुर्वत् परवीक्षितम् ।
महीं गन्धगुणामाधात् कालमायांशयोगतः ।। १४ ।।

**कालमायांशयोगतः** । कालात्परिणामात्, प्रकृतेर्हिरण्यगर्भाच्च ।। ११-१४ ।।

एते देवाः कला विष्णोः कालमायांशलिङ्गिनः ।
नानात्वात् स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम् ।। १६ ।।

**कालमायांशलिङ्गिनः** तन्निमित्तशरीराः । हिरण्यगर्भस्यैव कालाभि-मानी जीवाभिमानीति द्विविधं रूपम् ।

'कालजीवाभिमानेन रूपद्वन्द्वी चतुर्मुखः' ।। इति पाद्मे ।। १६ ।।

ऋते यदस्मिन् भव ईश जीवा-
स्तापत्रयेणाभिहता न शर्म ।
आत्मल्लँभन्ते भगवंस्तवाङ्घ्रि-
च्छायांशविद्यामत आश्रयेम ।। १८ ।।

'ब्रह्मविद्या हरेश्छाया तदंशो हि सुरेष्वपि ।
सर्वविद्याः श्रियः प्रोक्ताः प्रधानांशश्चतुर्मुखे' ।। इति ब्राह्मे ।। १८ ।।

मार्गन्ति यत् ते मुखपद्मनीडै-
श्छन्दःसुपर्णैर्ऋषयो विविक्ते ।
यच्चाघमर्षो द्युसरिद्वरायाः
परं पदं तीर्थपदः प्रपन्नाः ।। १९ ।।

द्युसरितो धरायाश्च ।। १९ ।।

तथापरे त्वात्मसमाधियोग-
बलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति
तेषां श्रमः स्यान्न तु सेवया ते ।। २५ ।।

'वायोश्च प्रकृतेर्विष्णोर्जयो भक्त्यैव नान्यथा' ।
इति दत्तात्रेययोगे ।। २५ ।।

तत् ते वयं लोकसिसृक्षयाऽद्य
त्वया विसृष्टास्त्रिभिरात्मभिर्ये ।
सर्वे वियुक्ताः स्वविहारतन्त्रं
न शक्नुमस्तत् प्रतिकर्तवे ते ।। २६ ।।

त्रिभिरात्मभिः कालमायांशैः ।। २६ ।।

ततो वयं सत्प्रमुखा यदर्थे
बभूविमात्मन् करवाम किं ते ।

त्वं नः स चक्षुः परिदेहि शक्ता
देव क्रियार्थे यदनुग्रहेण ।। २९ ।।

**सत्प्रमुखा** महदादयः ।। २९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे षष्ठोऽध्यायः ।।



## सप्तमोऽध्यायः

ऋषिरुवाच–

इति तासां स्वशक्तीनामसतीनां समेत्य सः ।
प्रसुप्तलोकतन्त्राणां निशम्य गिरमीश्वरः ।। १ ।।

'शक्यत्वाच्छक्तयो विष्णोर्महदाद्या रमा तथा ।
स्वरूपशक्तिः शक्तित्वान्मुख्यशक्तिर्हि सा यतः' ।। इति ब्रह्मतर्के ।।

**समेत्य** आसतीनां असमेतानां, **प्रसुप्तलोकतन्त्राणाम्** अनाविर्भूतलोक-सृष्टिशक्तीनाम् ।

'तनुते येन कार्यं यत्तन्त्रं साधनमुच्यते ।
कारणानां स्वशक्तिर्वा प्रधानं साधनं यतः' ।। इति ब्रह्मतर्के ।।१।।

कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः ।
त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ।। २ ।।

'शब्दाद्या नभ आद्याश्च मनोयुक्तेन्द्रियाणि च ।
अहङ्कारो महांश्चैव त्रयोविंशतिको गणः ।।

देवतेन्द्रिययोरैक्यान्न पृथग्गणनं तयोः ।
प्रकृतिस्तु चतुर्विंशा पञ्चविंशो हरिः स्वयम् ।।

यदा जडांशस्वीकारो जीवस्तत्पञ्चविंशकः ।
षड्विंशको महाविष्णुः श्रिया वा सप्तविंशकः' ।। इति तत्त्वनिर्णये ।

त्रयोविंशतितत्त्वानि प्राविशद्रमया सह ।
कालाख्यया स्वयं विष्णुः शक्यत्वाच्छक्तिरूपया ।। २ ।।

सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणम् ।
भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ।। ३ ।।

'सर्वचेष्टकरूपेण स्वसामर्थ्येन केशवः ।
तानि भिन्नानि तत्त्वानि योजयामास चांशतः' इति च ।। ३ ।।

प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः ।
प्रेरितोऽजनयत् स्वाभिर्मात्राभिरधिपूरुषम् ।। ४ ।।

मात्राभिः अंशैः ।। ४ ।।

स वै विश्वसृजां गर्भो दैवकर्मात्मशक्तिमान् ।
विबभाजाऽत्मनाऽत्मानमेकधा दशधा त्रिधा ।। ७ ।।

'ईश्वरो दैवमुद्दिष्टं सर्वस्यापि प्रभुत्वतः' ।। इति च ।

आत्मशक्तिः प्रकृतिः ।। ७ ।।

एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ।
आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ।। ८ ।।

'पुरुषेणाऽत्मभूतेन' इति योऽण्डमसृजत् स एष इत्युक्तः ।

'आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तितः ।
असृजत् स महत्तत्त्वं स एवाण्डं समाविशत्' ।। ८ ।।

साध्यात्मं साधिदैवं च साधिभूतमिति त्रिधा ।
विराट्प्राणो दशविध एकधा हृदयेन च ।। ९ ।।

'स ब्रह्मणो हृदिस्थत्वाद्धृदयं चेति कीर्त्यते' ।। इति च ।

'प्राणादिपञ्चकं चैव तथा नागादिपञ्चकम् ।
सनागकूर्मकृकलदेवदत्तधनञ्जयाः ।
एवं तु दशधा प्राण अध्यात्मादित्रिधाऽखिलाः' ।।
इति च व्योमसंहितायाम् ।। ९ ।।

निर्भिन्नान्यथ चर्माणि लोकपालोऽनिलोऽविशत् ।
प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते ।। १६ ।।

'प्राणः प्रथमजो यस्तु प्रधानो वायुरीरितः ।
त्वगात्मायास्तु तत्पुत्रा द्विधाभूतमुदाहृतम्' ।।
इति तत्त्वनिर्णये ।। १६ ।।

आत्मानं चास्य निर्भिन्नं वाचस्पतिरुपाविशत् ।
बुद्ध्या स्वांशेन येनासौ निश्चयं प्रतिपद्यते ।। २४ ।।

अहं चास्य विनिर्भिन्नमभिमानोऽविशत् पदम् ।
कर्त्रा स्वांशेन येनासौ कर्तव्यं प्रतिपद्यते ।। २५ ।।

सत्त्वं चास्य विनिर्भिन्नं महान् धिष्ण्यमुपाविशत् ।
चित्तेनांशेन येनासौ विज्ञानं प्रतिपद्यते ।। २६ ।।

'अहं सत्वमिति द्वेधा ब्रह्मनाड्या अवान्तरम् ।
कर्तृनामा ह्यहङ्कारस्त्वहंनाड्यां व्यवस्थितः ।
सत्त्वनाड्यां तथा चित्तमभिमानो हरस्तथा ।
अहंनाड्यां सत्वनाड्यां ब्रह्मा चैव व्यवस्थितः ।
आत्मनाड्यां तथा बुद्धिस्तत्रस्थश्च बृहस्पतिः' ।। इति ।। २६ ।।

मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ।
यत्रोन्मुखत्वाद् वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः ।। ३० ।।

बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः ।
यो जातस्त्रायते वर्णान् पुरुषान् कण्टकक्षतात् ।। ३१ ।।

विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः ।
वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत् ।। ३२ ।।

पद्भ्यां भगवतो जज्ञे शुश्रूषाकर्मसिद्धये ।
तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ।। ३३ ।।

'ब्रह्माभिमानी तु भृगुरजनि ब्रह्मणो मुखात् ।
क्षत्राभिमानी तु मनुर्ब्रह्मबाह्वोरजायत ।

ऊर्वोर्विडभिमानी च वास्तुः पादात्कृतिस्तथा ।
एते पूर्वं हरेर्जाता ब्रह्मणस्तदनन्तरम् ।
एवं रुद्राच्च वायोश्च तदन्तस्थहरेर्यतः' ।। इति षाड्गुण्ये ।।३०-३३।।

एतत् क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ।
कः श्रद्दध्यादुदाहर्तुं योगमायाबलोदयम् ।। ३५ ।।

'अधिकत्वाद्देवशब्दो दैवतेष्वधिको यतः ।
दैवं हरिः कर्म मूलं कृतिरित्येव भण्यते ।
व्याप्तत्वादात्मशब्दश्च श्रीपतित्वाच्च माधवः' ।। इति च ।। ३५ ।।

अतो भगवतो मायां मायिनामपि मोहिनीम् ।
यत् स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे ।। ३९ ।।

यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह ।
अहं चान्य इमे देवास्तस्मै भगवते नमः ।। ४० ।।

**'आत्मा ब्रह्मा न वेद । अहं रुद्रः ।**

'गुणपूर्तेरात्मशब्दो ब्रह्मा हीनत्वतो हरः ।
अहंशब्दस्तथाप्येतौ न जानीतो हरिं परम्' ।। इति ब्राह्मे ।

भगवतो मायां भगवतो महिमानम् ।

'माया तु महिमा प्रोक्ता प्राचुर्ये तु मयड्यतः' ।। इति पाद्मे ।

आत्मवर्त्मा परमात्मगतिः ।। ३९ ।।

।। इति श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे सप्तमोऽध्यायः ।।

## अष्टमोऽध्यायः

क्रीडाया मुद् यतोऽर्हस्य कामं चिक्रीडिषाऽन्यतः ।
स्वतस्तृप्तस्य तु कथं निर्वृतस्य सदात्मनः ।। ३ ।।

क्रीडाया मुत् । अर्हस्य अपूर्णसुखस्य । **अन्यतः** अरतेः ।। ३ ।।

देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा स युज्येताजया कथम् ।। ५ ।।

भगवानेष एवैकः सर्वक्षेत्रेष्ववस्थितः ।
अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ।। ६ ।।

दुर्भगक्लेशशरीरस्थत्वात्तस्यापि भाव्यम् । न च तद् युज्यते ।। ५-६ ।।

मैत्रेय उवाच–

सेयं भगवतो माया न्याय्यं येन विरुध्यते ।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ।। ९ ।।

सेयं भगवतो माया अयं हि भगवन्महिमा । तस्य कार्पण्यं बन्धनादि न युज्यत इति यदुक्तं तन्न्याय्यमेव । दुर्भगादिशरीरस्थस्यापि तद्दोषास्पर्श एव तन्महिमेत्यर्थः ।। ९ ।।

यथाऽर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः ।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ।। १० ।।

यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः ।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ।। ११ ।।

स वै निवृत्तिधर्मेण वासुदेवानुकम्पया ।
भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ।। १२ ।।

'कथं देहपरो देवो न लिप्येत हि बन्धनैः ।
कथं न दुःखी स भवेद्दुःखी चेदीश्वरः कुतः ।।

महिमा परमस्यैष यद्देहस्थो न बाध्यते ।
यददुःखी स ईशानो मायेति महिमोच्यते ।।

प्रधानं मय इत्याहुः प्राधान्यान्मयता भवेत् ।
अतो मायामयं प्राहुर्महामायमनामयम्' ।। इति भाल्लवेयश्रुतिः ।।

'अलुप्तबोधरूपत्वान्नासौ प्राकृतदेहवान् ।
न च सृष्ट्यादिकं भ्रान्तिर्भ्रान्तिवादा हि दानवाः ।।

'अतो भ्रान्त्यादिसम्बन्धो नास्य क्वचन युज्यते ।
भ्रान्त्या जीवस्य संसार ईशज्ञानाद्विलीयते ।
भ्रान्तिर्देहाद्यभिमतिरीशज्ञानाद्विनश्यति' ।। इति ब्रह्माण्डे ।। १०-१२ ।।

यदेन्द्रियोपरामार्थो दृष्टात्मनि परे हरौ ।
विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ।। १३ ।।

इन्द्रियोपरामाख्यः पुरुषार्थो मुक्तिः ।। १३ ।।

विदुर उवाच–

सञ्छिन्नः संशयो मह्यं तव सूक्तासिना विभो ।
उभयत्रापि भगवन् मनो मे सम्प्रधावति ।। १५ ।।

साधु तद् व्याहृतं विद्वन्नात्ममायायनं हरेः ।
आभात्यपार्थं निर्मूलं विश्वमूलं न यद् बहिः ।। १६ ।।

यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ।। १७ ।।

अर्थाभावं विनिश्चित्य प्रतीतस्याप्यनात्मनः ।
तां चापि युष्मच्चरणसेवयाऽहं पराणुदे ।। १८ ।।

स्वरूपसामर्थ्याश्रयम् । **यद् व्याहृतम्** । **अपार्थं निर्मूलं** च देहसम्बन्धित्वाद्याभाति । **विश्वमूलं** ब्रह्म च यन्ममज्ञानाद् **बहिः न** भवति । तस्मादुभयत्र धावति । तस्मादन्तरितोऽस्मि । तथापि तां प्रतीतिं पराणुदे ।। १५-१८ ।।

दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।
यत्रोपगीयते नित्यं देवदेवो जनार्दनः ।। २० ।।

'आत्मनस्तु गुणाभावं वदतो नत्वसत्यता ।
अपृष्टस्य दमार्थं च गुणायैव भवत्यपि' ।। इति व्यासस्मृतेः ।

विद्यमानमप्यनुभवमन्यथा वदति विदुरः ।

'द्रोणद्रौणिकृपाः पार्था भीष्मो विदुरसञ्जयौ ।
ये चान्ये तत्र देवांशाः सम्यकृतत्त्वापरोक्षिणः' ।।
इति स्कान्दे ।। २० ।।

सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् ।
तेभ्यो विराजमुद्धृत्य तमनु प्राविशद् विभुः ।। २१ ।।

यमाहुराद्यं पुरुषं सहस्राङ्‌घ्र्यूरुबाहुकम् ।
यत्र विश्व इमे लोकाः सविकाराः समासते ।। २२ ।।

यस्मिन् दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत् ।
त्वयेरिता यतो वर्णास्तद्विभूतीर्वदस्व नः ।। २३ ।।

यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः ।
प्रजा विचित्राकृतय आसन् याभिरिदं ततम् ।। २४ ।।

**विराजं** ब्रह्माणम् ।

'ब्रह्माणं प्राविशद्विष्णुः सहस्राक्षः सहस्रपात्' ।। इति ब्राह्मे ।।

'अनुप्रविश्य ब्रह्माणं प्राणं दशविधं तथा ।
इन्द्रियाणीन्द्रियार्थांश्च वर्णांश्चैवासृजद्धरिः ।। इति गारुडे ।।२१-२४।।

वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ।
ऋषीणां जन्मकर्माणि वेदस्य च विकर्षणम् ।
यज्ञस्य च वितानानि योगस्य च पथः प्रभो ।। २९ ।।

**विकर्षणं** विभागः ।। २९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे अष्टमोऽध्यायः ।।



## नवमोऽध्यायः

स्वमेव धिष्ण्यं बहुमानयन्तं
यं वासुदेवाभिधमामनन्ति ।
प्रत्यक्धृताक्षाम्बुजकोशमीषद्
उन्मीलयन्तं विबुधोदयाय ।। ४ ।।

'आधार आश्रयो धिष्ण्यं निधानं चाभिधीयते' ।। इत्यभिधानम् ।। ४ ।।

तस्यात्मसूक्ष्माभिनिविष्टदृष्टे-
रन्तर्गतोऽर्थो रजसा तनीयान् ।
गुणेन कालानुगतेन विद्धः
शुष्यंस्तदाऽभियत नाभिदेशात् ।। १३ ।।

'उदकं वायुना शुष्कं भिन्नं पद्मभूद्भरेः' ।। इति पाद्मे ।। १३ ।।

स पद्मकोशः सहसोदतिष्ठत्
कालेन कर्मप्रतिबोधितेन ।
स्वरोचिषा तत् सलिलं विशालं
विद्योतयन्नर्क इवात्मयोनिः ।। १४ ।।

आत्मा विष्णुरस्य योनिः ।। १४ ।।

तल्लोकपद्मं स उ एव विष्णुः
प्रावीविशत् सर्वगुणावभासम् ।
तस्मिन् स्वयं वेदमयो विधाता
स्वयंभुवं यं स्म वदन्ति सोऽभूत् ।। १५ ।।

'पद्मसंस्थाद्धरेस्तत्र ब्रह्माऽजनि चतुर्मुखः' ।। इति च ।

सर्वगुणावभासं पृथिव्यात्मकम् । पृथिव्यां हि सर्वे शब्दादयो गुणा अवभासन्ते ।

'तस्यासनविधानार्थं पृथिवी पद्ममुच्यते' ।। इति मोक्षधर्मे ।

'प्रधानवाचकस्त्वेकश्चानन्यः केवलः स्वयम्' ।। इति ब्राह्मे ।।१९।।

क एष योऽसावहमब्जपृष्ठ
एतत् कुतो वाऽब्जमनन्यदप्सु ।
अस्ति ह्यधस्तादिह किञ्चनैतद्
अधिष्ठितं यत्र सताऽनुभाव्यम् ।। १८ ।।

**सता** ब्रह्मणा ।

'स ब्रह्माऽचिन्तयत् कुतो नु पद्मं ब्रह्मणः स्यादिति' ।
इति मैत्रायणश्रुतिः ।। १८ ।।

पुंसां स्वकामाय विविक्तमार्गै-
रभ्यर्चतां कामदुघाङ्घ्रिपद्मम् ।
प्रदर्शयन्तं कृपया नखेन्दु-
मयूखभिन्नाङ्गुलिचारुपत्रम् ।। २६ ।।

भिन्नमन्येभ्यो विलक्षणम् ।। २६ ।।

परार्घ्यकेयूरमणिप्रवेक-
पर्यस्तदोर्दण्डसहस्रशाखम् ।

अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रम्
अहीन्द्रभोगैरधिवीतवल्कम् ।।२९ ।।

'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति मोक्षधर्मे ।। २९ ।।

निवीतमाम्नायमधुव्रताश्रयस्वकीर्तिमय्या वनमालया हरिम् ।
सूर्येन्दुवाय्वग्न्यगमत्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम्
।। ३१ ।।

सूर्येन्दुवाय्वग्न्यादिभिस्त्रिधाम्नो विष्णोरगच्छद्भिः प्राधनिकैः ।

'मुक्तवाय्वादिभिर्विष्णुं वृतं ब्रह्मा ददर्श ह ।
तदन्याभावतो नान्यदतस्तत्स्रष्टुमैच्छत ।।' इति ब्रह्माण्डे ।। ३१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे नवमोऽध्यायः ।।



## दशमोऽध्यायः

ब्रह्मोवाच–

ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां
न ज्ञायते भगवतो गतिरित्यवद्यम् ।
नान्यत् त्वदस्ति भगवन्नपि तत्त्वशुद्धं
मायागुणव्यतिकराद् यदुरुर्विभासि ।। १ ।।

स्वतो नास्ति । तदधीनविद्यमानमप्यशुद्धम् । यच्च स्वनानात्वं तदपि स्थानभेदादसदेव भाति ।

'एकोऽपि स्थाननानात्वान्नानेव हरिरीयते ।
सर्वान्तर्यामिणस्तस्य न भेदो विद्यते क्वचित्' ।। इति ब्रह्मवैवर्ते ।।१।।

रूपं यदेतदवबोध रसोदयेन
शश्वन्निवृत्ततमसः सदनुग्रहाय ।
आदौ गृहीतमवतारशतैकबीजं
यन्नाभिपद्मभवनादहमाविरासम् ।। २ ।।

नातः परं परम यद् भवतः स्वरूप
मानन्दमात्रमविकारमविद्धवर्चः ।
पश्यामि विश्वसृजमेकमविश्वमाद्यं
भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ।। ३ ।।

यन्नाभिपद्मभवनादहमाविरासम् । यच्चेदं भगवत्स्वरूपमानन्दमात्रं पश्यामि । यच्चाश्रितोऽस्मि अतः परं नास्ति । अतो न ज्ञायत इति अवद्यमत्युत्तमा-पेक्षया । अनादिगृहीतमेव नेदानीं गृह्यते ।

'यत्तद्दिव्यं हरेरूपं क्षीरसागरमध्यगम् ।
ज्ञानानन्दैकमात्रं च न ततः परमं क्वचित् ।
अनादिनित्यादव्यक्तात्तस्माज्जज्ञे चतुर्मुखः' ।। इत्यध्यात्मे ।

भूतेन्द्रियाणामात्मकम् । 'यच्चाप्नोति' इत्यादेः ।। २,३ ।।

ये तु त्वदीयचरणाम्बुजकोशगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां
नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ।। ५ ।।

'हृदि व्यक्तं तु यद्रूपं हरेर्गन्धः स उच्यते ।
गन्धगन्धवतोर्यस्मान्न भेदः क्वचनेष्यते' ।। इति ब्रह्मतर्के ।।

उत्तमानां तु पादेन सर्वं रूपं तु भण्यते ।
उत्तमानां स्वरूपं तु पादशब्देन भण्यते ।। ५ ।।

यावत् पृथक्त्वमिदमात्मन इन्द्रियार्थं
मायाबलं भगवतो जन ईश पश्येत् ।
तावन्न संसृतिरसौ प्रतिसङ्क्रमेत
व्यर्थापि दुःखनिवहं वहती क्रियार्था ।। ९ ।।

**मायाबलं** भगवदिच्छाबलम् ।

'ज्ञेयत्वं दुर्घटस्यापि घटनाधिकशक्तिता ।
अभेद ईश्वरेणापि सृष्ट्यादावन्तरङ्गता ।
उच्येत यस्याः सा माया हरेरिच्छाऽथवा बलम् ।
भगवत्तन्त्रता यस्यास्तद्धार्यात्वं सुरूपता ।
उच्येत माया सा तु श्रीर्दोषयुक्ता जडा स्मृता ।
परिणामिनी च यस्यास्तु दोषाश्चेतनता यथा ।
शैवली नाम सा माया जगद्बन्धात्मिका सदा' ।। इति ब्रह्मतर्के ।

'ध्याये मंस्ये तथा पश्ये शृणोमीति विभक्तता ।
जीवस्य तु हरेरिच्छाबलादिन्द्रियभुक्तये' ।। इति षाड्गुण्ये ।

इन्द्रियाणां भोगार्थम् । व्यर्थापि यज्ञादिक्रियार्था ।। ९ ।।

अध्याहृतार्थकरणा निशि निःशयाना
नानामनोरथधियः क्षणभङ्गनिद्राः ।
दैवाद्धतार्थरचना ऋषयोऽपि देव
युष्मत्प्रसङ्गविमुखा इह संसरन्ति ।। १० ।।

अर्थैरध्याहृतानि करणानि येषाम् ।

'अज्ञानं तु निशा प्रोक्ता दिवा ज्ञानमुदीर्यते' ।। इति स्कान्दे ।।१०।।

त्वद्भावयोगपरिभावितहृत्सरोजा
ये सच्छ्रुतेक्षितपथा ननु नाथ पुंसाम् ।
यद् यद् धिया त उरुगाय विभावयन्ति
तत् तद् वपुः प्रणयसे तदनुग्रहाय ।। ११ ।।

तत् तद् वपुः तेषां प्रणयसे ।

'यादृशोभावितस्त्वीशस्तादृशो जीव आभवेत्' । इति तन्त्रसारे ।

'तं यथा यथोपासते तदेव भवति ।' इति च ।। ११ ।।

नातिप्रसीदसि तथोपचितोपचारै
राराधितः सुरगणैर्हृदि बद्धकामैः ।

य: सर्वभूतदययाऽसदलभ्ययैको
नानाजनेष्ववहितः सुहृदन्तरात्मा ।। १२ ।।

सर्वभूतदयया सुरगणैर्हृद्याराधितस्त्वं बद्धकामैर्जनैरुपचितोपचारैर्नातिप्रसीदसि ।

'आराधितो यो ब्रह्माद्यैर्भक्तिज्ञानदयादिभिः ।
किं तस्य कामुकजनैः कृतया परिचर्यया' ।
इति सत्यसंहितायाम् ।। १२ ।।

शश्वत् स्वरूपमहसैव निपीतभेद-
मोहाय बोधधिषणाय नमः परस्मै ।
विश्वोदयस्थितिलयेषु निमित्तलीलाऽऽ-
रामाय ते नम इदं चकृमेश्वराय ।। १४ ।।

'ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता ।
भेदस्तस्यावतारेषु जीवस्येशत्वमेव च ।
तथा जीवत्वमीशस्य जडाभेदस्तयोरपि ।
भेदमोह इति प्रोक्तः स सदा न हरौ क्वचित् ।
अन्येषां तत्प्रसादेन शनैर्याति सतामपि' ।। इति स्कान्दे ।। १४ ।।

यस्यावतारगुणकर्मविडम्बनानि
नामानि येऽसुविगमे विवशा गृणन्ति ।
ते नैकजन्मशमलं सहसैव हित्वा
संयान्त्यपावृतमृतं तमजं प्रपद्ये ।। १५ ।।

भक्तिविवशाः ।

'ये भक्तिविवशा विष्णोर्नाममात्रैकजल्पकाः ।
तेऽपि मुक्तिं व्रजन्त्याशु किमुत ध्यायिनः सदा' ।।
इति व्योमसंहितायाम् ।। १५ ।।

यो वा अहं च गिरिशश्च विभुः स्वयं च
स्थित्युद्भवप्रलयहेतव आत्ममूलाः ।
भूत्वा त्रिपाद् ववृध एक उरुप्ररोह-
स्तस्मै नमो भगवते भुवनद्रुमाय ।। १६ ।।

'ब्रह्मादिभावो विष्णोस्तु तन्नियामकता भवेत् ।
मत्स्यादिता स्वभावस्तु (तत्स्वभावो) नान्यथा क्वचिदिष्यते' ।।
इति वामने ।

'अनन्तासनवैकुण्ठक्षीराब्धिस्थो हरिस्त्रिपात्' । इति च ।। १६ ।।

लोको विकर्मनिरतः कुशले प्रमत्तः
कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।
यस्तावदस्य बलवानिह जीविताशां
सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ।। १७ ।।

'नित्यज्ञानदृशा नित्यं लवकालमपीश्वरः ।
पश्येत्तात्कालिकं चैव तस्मादनिमिषो हरिः ।
कालस्यानिमिषत्वं च लवादेर्नित्यवीक्षणात्' ।। इति तन्त्रसारे ।।१७।।

तिर्यङ्मनुष्यविबुधादिषु जीवयोनि-
ष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः ।
रेमेऽनिरस्तरतिरप्युपलब्धकाष्ठ-
स्तस्मै नमो भगवते पुरुषोत्तमाय ।। १९ ।।

**अनिरस्तरतिः** नित्यरतिः ।। १९ ।।

एष प्रपन्नवरदो रमयाऽऽत्मशक्त्या
यद् यत् करिष्यति गृहीतगुणावतारः ।
तस्मिन् स्वविक्रम इदं सृजतोऽपि चेतो
युञ्जीत कर्मशमलं च यथा विजह्याम् ।। २३ ।।

'स्वसामर्थ्यात् (स)स्वकर्माणि रमया सह केशवः ।
कुरुते स्वयमेवैष कानिचित्पुरुषोत्तमः' ।। इति नारदीये ।। २३ ।।

लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः ।
तमाहागाधया वाचा कश्मलं शमयन्निव ।। २८ ।।

'आत्मशब्दस्य मुख्यार्थो विष्णुरेकः सनातनः ।
सन्देहदेहमनसो बुद्धिजीवाः स्वयं तथा ।
ब्रह्माप्यमुख्याः क्रमश उत्कर्षो ह्यात्मता भवेत्' ।
इति प्रकाशसंहितायाम् ।। २८ ।।

श्री भगवानुवाच–

मा वेदगर्भ गास्तन्द्रीं सर्ग उद्यममावह ।
तन्मया चोदितं ह्यग्रे यन्मां प्रार्थयते भवान् ।। २९ ।।

प्रार्थनमपि मत्प्रेरणमेव ।। २९ ।।

भूयश्च तप आतिष्ठ विद्यां चैव मदाश्रयाम् ।
ताभ्यामन्तर्हृदि ब्रह्मन् लोकान् द्रक्ष्यस्यपावृतान् ।। ३० ।।

'तप आलोचनं प्रोक्तं विद्या निष्ठा प्रकीर्तिता' ।
इति कपिलसंहितायाम् ।। ३० ।।

तत आत्मनि योगेन भक्तियुक्तः समाहितः ।
द्रष्टासि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनि ।। ३१ ।।

'देहे देहे हरिस्तस्मिंल्लोकाः सर्वे प्रतिष्ठिताः ।
अङ्गुष्ठमात्रेऽपि परे परशक्तिर्यतो विभुः' ।। इति च ।

आत्मनि स्थिते मयि ।। ३१ ।।

यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः ।
स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ।। ३३ ।।

स्वरूपेण मयोपेतं, हृदिस्थं जीवरूपं हि परमेश्वरसहितं भवति ।

'त्यक्त्वा देहाद्यात्मभावं जीवरूपे हृदि स्थिते ।
दृष्ट्वाऽऽत्मभावं तं चापि हरिपादाब्जसंस्थितम् ।
यदा पश्यत्यापरोक्ष्यात्तदा मुक्तिं व्रजत्यसौ' ।।
इति दत्तात्रेययोगे ।। ३३ ।।

ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् ।
यन्मां त्वं मन्यसे युक्तं भूतेन्द्रियगुणात्मभिः ।। ३६ ।।

'भूतेन्द्रियमनोबुद्धित्रिगुणादिषु सर्वशः ।
युक्तं नियामकतया पश्यञ्जानाति केशवम्' । इति च ।। ३६ ।।

प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया ।
यदस्तौषीद् गुणमयं निर्गुणं माऽनुवर्णयन् ।। ३९ ।।

'सार्वज्ञादिगुणैर्युक्तं सत्वादिगुणवर्जितम् ।
यो जानाति हरिं तस्य प्रीतो भवति केशवः' ।। इति व्योमसंहितायाम् ।

'आधिकारिकदेवानां स्वाधिकाराधिकामनम् ।
भवति प्रीतये विष्णोर्भक्त्यादेरपि यत्सदा' ।। इति च ।। ३९ ।।

पूर्तेन तपसा यज्ञैर्दानैर्योगैः समाधिना ।
राज्यं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ।। ४१ ।।

निःश्रेयसं राज्यम् । मोक्षेऽपि रञ्जनीया मत्प्रीतिरेव ।

'मुक्तस्यापि हरेः प्रीतिः सर्वतोऽप्यनुरज्यते' ।। इति वामने ।।४१।।

अहमात्मात्मनां धातः प्रेष्ठः सन् प्रेयसामपि ।
अतो मयि रतिं कुर्याद् देहादिर्यत्कृते प्रियः ।। ४२ ।।

'सर्वतोऽपि प्रियो ह्यात्मा तस्यापि प्रियतां हरिः ।
आपादयति यत्तस्मात्स्वात्मनोऽपि प्रियो हरिः' ।।
इति ब्रह्मवैवर्ते ।। ४२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे दशमोऽध्यायः ।।

## एकादशोऽध्यायः

मैत्रेय उवाच–

विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः ।
आत्मन्यात्मानमावेश्य यथाऽऽह भगवानजः ।। ४ ।।

आत्मनि परमेश्वरे मन आवेश्य ।। ४ ।।

एतावान् जीवलोकस्य संस्थाभेदः समासतः ।
धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठिनः ।। ९ ।।

अनिमित्तस्य ब्रह्मार्पणबुद्ध्या कृतस्य । 'अः इति ब्रह्म' इति श्रुतेः ।।९।।

विदुर उवाच–

यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः ।
कालाख्यं लक्षणं ब्रह्मन् यथा वर्णय नः प्रभो ।। १० ।।

'लक्षणं लक्ष्यमात्मा च स्वरूपमिति कथ्यते' । इत्यभिधानम् ।।१०।।

मैत्रेय उवाच–

गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ।
पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ।। ११ ।।

गुणव्यतिकरमाकरोति तद्द्रष्टा । अप्रतिष्ठितोऽन्यत्र ।

'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' । इति श्रुतिः ।

तदुपादानम् । गुणव्यतिकरोपादानकर्तारम् । सृष्ट्याद्यर्थत्वेन तस्य पुरुषस्य । ब्रह्मविष्णुमहेश्वर इति त्रीणि रूपाण्यात्मना सृष्टानि ।। ११ ।।

विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया ।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ।। १२ ।।

ब्रह्म निर्मातृकम् । मायया सामर्थ्येन । तत्र यत्संहर्त्रीश्वराख्यं रूपं तत्कालाख्यम् । कल च्छेदन इति धातोः ।

'अथ त्रयी वाव प्रकृतिः सत्वं रजस्तम इति तां नारायणः पर्यपश्यदनन्यप्रतिष्ठः तं वा एतमाहुः पुरुष इति पूर्णो ह्येष भवति स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्वस्य रजसो ब्रह्मेशानो नाम तमसः स आविवेश । ब्रह्मा ब्रह्माणं नाम चतुर्मुखं ईश ईशानं नाम पञ्चमुखं यो वा ईश ईशानमाविवेश तं वा एनं काल इत्याचक्षते काल इत्याचक्षते' इति सौकरायणश्रुतिः ।। १२ ।।

यथेदानीं तथा चाऽग्रे पश्चादप्येतदीदृशम् ।
सर्गो नवविधस्तस्य प्राकृतो वैकृतश्च यः ।। १३ ।।

सृष्टिश्च प्रलयश्चैव संसारो मुक्तिरेव च ।
देवऋषिप्रभृतयो लोका भूरादयस्तथा ।।

अनाद्यनन्तकालीनाः सर्वदैकप्रकारतः ।
जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथञ्चन ।।

ये त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते ।
देवैर्ब्रह्मादिभिः शप्ता ऋषिभिर्मानुषादिभिः ।।

## एकादशोऽध्यायः

मैत्रेय उवाच–

विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः ।
आत्मन्यात्मानमावेश्य यथाऽऽह भगवानजः ।। ४ ।।

आत्मनि परमेश्वरे मन आवेश्य ।। ४ ।।

एतावान् जीवलोकस्य संस्थाभेदः समासतः ।
धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठिनः ।। ९ ।।

अनिमित्तस्य ब्रह्मार्पणबुद्ध्या कृतस्य । 'अः इति ब्रह्म' इति श्रुतेः ।।९।।

विदुर उवाच–

यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः ।
कालाख्यं लक्षणं ब्रह्मन् यथा वर्णय नः प्रभो ।। १० ।।

'लक्षणं लक्ष्यमात्मा च स्वरूपमिति कथ्यते' । इत्यभिधानम् ।।१०।।

मैत्रेय उवाच–

गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ।
पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ।। ११ ।।

गुणव्यतिकरमाकरोति तद्द्रष्टा । अप्रतिष्ठितोऽन्यत्र ।

'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' । इति श्रुतिः ।

तदुपादानम् । गुणव्यतिकरोपादानकर्तारम् । सृष्ट्याद्यर्थत्वेन तस्य पुरुषस्य । ब्रह्मविष्णुमहेश्वर इति त्रीणि रूपाण्यात्मना सृष्टानि ।। ११ ।।

विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया ।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ।। १२ ।।

ब्रह्म निर्मातृकम् । मायया सामर्थ्येन । तत्र यत्संहर्त्रीश्वराख्यं रूपं तत्कालाख्यम् । कल च्छेदन इति धातोः ।

'अथ त्रयी वाव प्रकृतिः सत्वं रजस्तम इति तां नारायणः पर्यपश्यदनन्यप्रतिष्ठः तं वा एतमाहुः पुरुष इति पूर्णो ह्येष भवति स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्वस्य रजसो ब्रह्मेशानो नाम तमसः स आविवेश । ब्रह्मा ब्रह्माणं नाम चतुर्मुखं ईश ईशानं नाम पञ्चमुखं यो वा ईश ईशानमाविवेश तं वा एनं काल इत्याचक्षते काल इत्याचक्षते' इति सौकरायणश्रुतिः ।। १२ ।।

यथेदानीं तथा चाऽग्रे पश्चादप्येतदीदृशम् ।
सर्गो नवविधस्तस्य प्राकृतो वैकृतश्च यः ।। १३ ।।

सृष्टिश्च प्रलयश्चैव संसारो मुक्तिरेव च ।
देवऋषिप्रभृतयो लोका भूरादयस्तथा ।।

अनाद्यनन्तकालीनाः सर्वदैकप्रकारतः ।
जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथञ्चन ।।

ये त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते ।
देवैर्ब्रह्मादिभिः शप्ता ऋषिभिर्मानुषादिभिः ।।

सेतिहासैस्तथा वेदैः सर्वे यान्त्यधरं तमः ।
सर्वब्रह्मत्ववेत्तारो जीवब्रह्मत्ववेदिनः ।।

अन्यसाम्यविदो विष्णोर्विष्णुद्वेष्टार एव च ।
सर्वे यान्ति तमो घोरं न चैषामुत्थितिः क्वचित्' ।।
इति स्कान्दे ।। १३ ।।

**कालद्रव्यगुणैरस्य त्रिविधः प्रतिसङ्क्रमः ।**
**आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ।**
**द्वितीयस्त्वहमस्तत्र द्रव्यज्ञानक्रियादयः ।। १४ ।।**

'तामसस्य पदार्थस्य सत्त्वं हि लयकारणम् ।
सात्त्विकस्य तमश्चैव तयोरपि रजः क्वचित् ।।

गुणतोऽयं लयः प्रोक्तो द्रव्यतस्तु विरोधिना ।
कालतः कालसङ्ख्याजो लयः सर्वस्य वस्तुनः' ।। इति ब्रह्मतर्के ।

'तमसो रजस्तु द्विगुणं रजसः सत्त्वमेव च ।
परिमाणत एवं स्युस्त्रयः प्रकृतिजा गुणाः ।।

तत्र सत्त्वं केवलं स्याद्रजस्यपि शताधिकम् ।
सत्त्वं रजःशतांशं तु तमस्तत्र प्रकीर्तितम् ।।

तमस्यपि तथा सत्त्वं तमसस्तु दशोत्तरम् ।
तद्दशांशेन तु रजो मूलजं यद्रजस्तु तत् ।।

विलये दशांशतः सत्त्व एकांशेन तमस्यपि ।
मिश्रितं भवति ह्येतां साम्यावस्थां विदुर्बुधाः ।।

यदा तु तद्रजः सर्वं तमसा सह सङ्गतम् ।
तदा त्वाहुर्महत्तत्त्वं तच्चतुर्भागसम्भवम् ।।

तत्र त्रिभागो रजस एकोंऽशस्तमसस्तथा ।
तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम् ।।

तदेव केवलं सत्वमितरापेक्षया भवेत् ।
श्रीर्मूलसत्वं विज्ञेया भूर्मूलं रज उच्यते ।।

मूलं तमस्तथा दुर्गा महालक्ष्मीस्त्रिमूलिका ।
गुणेभ्यो गुणमूलाच्च योऽतीतः स जनार्दनः ।।

यद्रजो मूलरजसि मूले तमसि यद्रजः ।
तमश्च मूले तमसि महत्तत्त्वं तदात्मकम् ।।

दशांशास्तत्र सत्वं स्युरेकांशो रज एव तु ।
तद्दशांशं तमो ज्ञेयम् अहङ्कारस्तदात्मकः ।।

स रुद्रस्तामसो ज्ञेयो विरिञ्चापेक्षयैव तु ।
इतरापेक्षया सत्वं सत्वायास्तद्वदस्य च ।

तत्तमोंऽशात्सात्विकांशो मन आद्याः प्रकीर्तिताः ।
रजसोंशस्त्विन्द्रियाणि तमसोंऽशश्च खादयः' ।।

इत्यादि तत्त्वविवेके ।। १४ ।।

भूतसर्गस्तृतीयस्तु तन्मात्रद्रव्यशक्तिमान् ।
चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ।
वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ।। १५ ।।

भूतानि द्रव्यशक्तीनि भूतेषु द्रवणं यतः ।
तथा तन्मात्रशक्तीनि शब्दाद्यात्मकता यतः ।।
क्रियाशक्तीनि वागाद्यानीन्द्रियाणीतराणि तु ।
ज्ञानशक्तीनि मनसा देवाश्च ज्ञानशक्तयः ।।
एतेषां मूलभूतत्वादहङ्कारस्त्रिशक्तिमान् ।
मानुषापेक्षया देवाः सात्विकाः परिकीर्तिताः ।।
तत्रापि सात्विकाः प्रोक्तास्तात्विका यास्तु देवताः ।
तत्रापि सात्विको रुद्रस्तत्रापि तु चतुर्मुखः ।।
अविकारौ ब्रह्मरुद्रौ देहभेदादिसम्भवे ।
विकारवन्त इन्द्राद्यास्तस्माद्वैकारिका मताः ।।
त एवेन्द्रियरूपेण यतस्त्वतिविकारिणः ।
ज्ञानमात्रगुणोद्रिक्तास्तस्मात्तैजसनामकाः ।।
अविकारित्वयोग्यत्वं निवृत्तं हीन्द्रियेषु तु ।
वैकारिकत्वनामापि ततस्तेषां न विद्यते ।।
यथा विप्रकुले मूर्खो मूर्ख इत्यभिधीयते ।
विद्यायोग्यत्वतः शूद्रो न मूर्खो मूर्ख एव सन् ।।
तामसानि हि भूतानि किञ्चिद्व्यवहितत्वतः ।
ज्ञानस्य सुष्ठुज्ञत्वेऽपि पूर्णज्ञानो हरिः स्वयम्' ।। इति च ।।१५।।

षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभोः ।
षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ।। १७ ।।

अबुद्धिपूर्वमिव तु ब्रह्मणो हरिबुद्धितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ।।

तामसानां तु भूतानां सहस्रं सत्वभागिनाम् ।
शतांशरजसामेकतमसां सर्ववेदिनाम् ।।

केवलस्तमसो योंऽशः साऽविद्या पञ्चपर्विका ।
जाताऽतिकृष्णा तद्देहात् दैत्यरक्षःपिशाचकाः ।।

यद्रजो भौतिकं तेन मानुषाणां सदा जनिः ।
तमोगूढेन रजसा त्वितरस्थास्नुचारिणाम् ।।

भौतिकेन तु सत्वेन गूढं ब्रह्मण आण्डजम् ।
रूपं तत्रापि तु तमः शतांशेन प्रकीर्तितम् ।।

तज्जो रुद्रस्ततस्त्वेवमिन्द्रादीनां पुनर्जनिः ।
गूहितं भूतरजसा तत्सत्वं मानुषा यदा ।।

देवा एवं गुणास्त्वेते सर्वं व्याप्य व्यवस्थिताः ।
गुणातीतं च यद्रूपं ब्रह्मादीनां सुखात्मकम् ।।

चिद्रूपं तच्च सत्वस्यैवोत्कर्षो यत्र विद्यते ।
तच्चोत्कृष्टं तमो यत्र हीनं तत्र स्वभावतः ।।

उपगूहने तु नैवास्ति विशेषो नित्यचिन्मये ।
प्रकृतेर्गुणरूपाया मूलिकायाश्च न क्वचित् ।
विशेषः परमे तत्त्वे वासुदेवे कुतः पुनः' ।। इति च ।।

अव्यक्ताद्याः पृथिव्यन्ताः सर्वाः प्रकृतयः स्मृताः ।
तदुपादानकः सर्गः प्राकृतः परिपठ्यते ।।

अण्डं तु विकृतं ज्ञेयं तज्जो वैकृत उच्यते ।
पञ्चपर्वा त्वविद्या तु भूतेभ्यो हरिणा पुरा ।।

उद्धृत्य ब्रह्मणि क्षिप्ता सा पुनस्तेन निःसृता ।
तत्स्रष्टृत्वज्ञापनाय तस्मात्सा प्राकृता मता' ।। इति च ।। १७ ।।

रजोभाजो भगवतो लीलेयं हरिमेधसः ।
सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ।। १८ ।।

एते गुणा हरेः सम्यक्स्वातन्त्र्यविषयाः सदा ।
स्वतन्त्राः प्रकृतेश्चापि ब्रह्मणोऽन्येषु तु क्रमात् ।
देवेष्वेव तदन्येषु परतन्त्रा हि ते मताः' ।। इति च ।। १८ ।।

वनस्पत्योषधिलता त्वक्सारा वीरुधो द्रुमाः ।
उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशोषिणः ।। १९ ।।

स्थास्नुभिर्नियमान्मुख्या स्थितेर्गतिरवाप्यते ।
प्रायः परोपकर्तृत्वात्ते मुख्यस्रोतसः स्मृताः ।।

नाधो नोर्ध्वं तिरश्चां तु पुनस्तत्रैव यज्जनिः ।।
यज्ञोपयोगं च सतामुपकारं विनाऽपि च ।।

तिर्यक्स्रोतस इत्येव प्रोच्यन्ते ज्ञानिभिस्ततः ।
प्रायोऽधोगमनं यस्मात्प्रयत्नेन विना भवेत् ।।

अर्वाक् स्रोतस इत्येव मानुषाः परिकीर्तिताः ।
नियमादूर्ध्वगन्तारो देवा मोक्षैकभागिनः ।
ऊर्ध्वस्रोतस इत्येव तस्मात्ते परिकीर्तिताः' ।। इति ब्राह्मे ।

तिरश्चां स्थावराणां च बुद्धिपूर्वप्रवर्तिनाम् ।
असुराणां रक्षसां च पिशाचानां तथैव च ।
अर्वाक्स्रोतस्त्वमुद्दिष्टं नियमादसुरादिनाम्' ।। इति च ।

मुख्यस्रोतस इत्यस्यार्थ उत्स्रोतस इति ।

'ऊर्ध्व इत्येव यैस्तूच्चतम एवाभिधीयते ।
ऊर्ध्वस्रोतस एतस्माद्देवा एव न तत्परे ।
उच्छब्द उच्चमात्रेऽपि तस्मात्स्थास्नुषु भण्यते' ।। इति च ।

'तिरश्चीनाः स्थावराश्च अन्तःस्पर्शा इतीरिताः ।
यत्प्रत्यक्षानुमानाभ्यां हृद्गज्ञानं न शास्त्रतः' ।। इति पाद्मे ।

यदप्रयत्नाद्धृदयङ्गमं तदेव जानन्ति नो शास्त्रयुक्तिभ्यामित्यर्थः ।। १९ ।।

तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः ।
अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः ।। २० ।।

गौरजो महिषः कृष्णः सूकरो गवयो रुरुः ।
द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ।। २१ ।।

खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ।
एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून् ।। २२ ।।

श्वा सृगालो वृको व्याघ्रो मार्जारः शशशल्यकौ ।
सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ।। २३ ।।

कङ्कगृध्रबळश्येना भासवल्लूरबर्हिणः ।
हंससारसचक्राह्वकाकोलूकादयः खगाः ।। २४ ।।

अष्टाविंशद्विशेषेण यज्ञेषूपकृतं यतः ।
तिरश्चां तावदेतस्मात् गण्यते शास्त्रवेदिभिः ।।

गौरजो महिषः कृष्णः सूकरो गवयो रुरुः ।
अव्युष्ट्रौ च खराश्वौ च तथैवाश्वतरोऽपरः ।।

गौरश्च शरभश्चैव चमरी श्वसृगालकौ ।
वृको व्याघ्रश्च मार्जारो हरिश्च शशशल्यकौ ।
कपिर्गजश्च गोधाद्या जलजाः पक्षिणस्तथा' ।। इति ब्रह्माण्डे ।

कूर्मो जलजत्वेनाष्टाविंशत्स्वन्तर्भूतोऽपि पञ्चनखत्वप्रदर्शनार्थं पृथगुक्तः ।

'तत्तदाकारसंयुक्तान्सृज्यान्स्रष्टारमेव च ।
यः सदा संस्मरेद्योगी न स भूयोऽभिजायते' ।।

इति स्कान्दवचनात्प्रसिद्धानामपि द्विशफादीनां स्मरणविधानार्थमुक्तिः ।

'उच्यते सुप्रसिद्धं च स्मरणार्थं च कुत्रचित् ।
अप्रसिद्धज्ञापनार्थं द्विधा शास्त्रवचः स्मृतम्' ।। इति षाड्गुण्ये ।

'वल्लूरो नृत्तपक्षी च स वलूकश्च कथ्यते' । इत्यभिधाने ।

'अष्टाविंशत्प्रधानास्तु तिरश्चां यास्तु जातयः ।
यो यस्य सदृशस्त्वन्यः स तत्रान्तर्गतो भवेत् ।।

जलजान्तर्गताः सर्पाः कीटाद्या याश्च जातयः ।
तेषां जलप्रधानत्वाच्छरीरस्य तु सर्वशः' ।।

इति सत्यसंहितायाम् ।। २०-२४ ।।

**अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ।**
**रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः ।। २५ ।।**

'रजोनिष्ठास्तमोनिष्ठा द्वेधाऽर्वाक्स्रोतसः स्मृताः ।
असुराद्यास्तमोनिष्ठा मानुषास्तु रजोऽधिकाः' ।।

इति व्योमसंहितायाम् ।

दुःखे च सुखमानिनोऽसुराः ।

'सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी' । इति वचनात् ।।

'सुखे सुखैकभावास्तु देवा नैवं तु दानवाः' । इति षाड्गुण्ये ।।२५।।

**वैकृतास्त्रय एवैते देवसर्गश्च सत्तम ।**
**वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः ।। २६ ।।**

'कुमारन्तीति कौमारो देवानामण्डजोद्भवः ।
वैकारिकाणां जननात्प्राकृतो वैकृतश्च सः ।

वैकारिकेष्वेवान्येषामीषद्भोगित्वहेतुतः ।
उभयात्मकत्वं तेनैव प्रोच्यन्तेऽष्टगणा अपि' ।। इति ।

देवसर्गश्चेति चकारार्थ उभयात्मक इति वैकारिकस्तु देवसर्गः प्राकृतत्वे-नोक्तः ।। २६ ।।

देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः ।
गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ।। २७ ।।

भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ।
दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ।। २८ ।।

'प्रोक्ता अष्टविधा देवा विबुधाः सर्व एव तु ।
पितॄणां शतमेवात्र असुरास्त्रिंशदेव च ।।

गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम् ।
सप्ततिर्यक्षरक्षस्सु त्रिंशच्चारणजातिषु ।।

शतं सिद्धास्तथाऽन्यासु सप्ततिः सर्वजातिषु ।
ऊर्ध्वस्रोतस एते वै अन्येऽर्वाक्स्रोतसः स्मृताः ।।

वैकारिकेषु देवेषु एते वै मुग्धभोगिनः ।
अभोगिनस्तदन्ये तु देवा एते ततः स्मृताः ।।

सर्वज्ञास्तैः सहाराध्या भक्तास्तेष्वन्तरेव च ।
नृत्तगानादिकर्तारो वाहनादिकृतस्तथा ।।

सिद्धसिद्धेतिवक्तारश्चाराश्चैषां क्वचित्क्वचित् ।
सेवाकरा इति ह्येतैर्भेदैरष्टविधा मताः ।।

अन्ये च ये तु सर्वज्ञा विबुधास्ते प्रकीर्तिताः ।
तथाऽन्ये कर्मभिस्तैस्तैरष्टभेदान्तरं गताः' ।। इति तत्त्वविवेके ।

'यदि देवादयो दोषाज्जायेरन्मानुषादिषु ।
तथाऽपि देवा विज्ञेया असुराद्यास्तथा ध्रुवम्' । इति च ।।२७,२८।।

अतः परं प्रवक्ष्यामि वंशान् मन्वन्तराणि च ।
एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ।
सृजत्यमोघसङ्कल्प आत्मैवाऽत्मानमात्मना ।। २९ ।।

'गुणाप्लुतो हरिर्नित्यं गुणानां मध्यगो यतः ।
अनहंवेदनात्तस्य गुणासंस्पर्श एव च' ।। इति च ।

'सृष्ट्वा देवादिदेहान्स आत्मानं बहुधाऽकरोत् ।
तन्नियन्तृतयाऽऽत्मानं प्रकृतिं देहभेदतः' ।। इति नारदीये ।

'कर्ता च करणं चैव कर्म चैव स्वयं हरिः ।
आत्मनो बहुधाभावे प्रकृतेस्तु स्वतन्त्रता' ।। इत्याग्नेये ।। २९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे एकादशोऽध्यायः ।।



## द्वादशोऽध्यायः

मैत्रेय उवाच–

चरमस्तु विशेषाणामनेकांशायुतः सदा ।
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ।। १ ।।

कालपरिमाणं दर्शयितुं द्रव्यपरिमाणं दृष्टान्तत्वेन दर्शयति ।

'मनुष्या देवलोकेऽपि विशेषेणैव दर्शने ।
अंशांशित्वविशेषं तु यस्य द्रष्टुं न शक्नुयुः ।।

चरमो विशेष इति तं मुनयो ब्रूयुरञ्जसा ।
परमाणुः स विज्ञेयः कणादाद्या निरंशिनम् ।।

अनन्तांशयुतत्वेऽपि यं ब्रूयुर्भ्रान्तिदर्शनात् ।
ततोऽपि परमाणुत्वं तदंशानां तु यद्यपि ।
अनन्तत्वाद्विवेकार्थमस्योक्ता परमाणुता' ।। इति तत्त्वविवेके ।

अनेकांशैरासमन्ताद्युतः ।। १ ।।

सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ।
कैवल्यं परममहानविशेषो निरन्तरः ।। २ ।।

कालतो देशतो गुणतश्च परममहत्त्वं सतः परब्रह्मण एव । सच्छब्दोऽन्यत्राप्युपचारतो भवतीत्यतः पदार्थस्येति । सत्पदस्य यो मुख्याभिधेयस्तस्य ।

'मुख्याभिधेयस्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते ।
अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेत्' ।। इति ब्रह्मतर्के ।

यद्वेव समः प्लुषिणेत्यादिनाऽन्यत्र स्थितस्य तत्परिमाणत्वमप्यस्तीत्यतः स्वरूपावस्थितस्येति । जगदावरकस्य स्वरूपस्य ततः किञ्चिन्महत्त्वमित्यतः कैवल्यमिति । तत्रापि बहुविधानि रूपाणि तस्य सन्तीत्यविशेष इति । सर्वगते प्रादेशमात्रमपि विद्यत इत्यतो निरन्तर इति । परब्रह्मणो यः केवलभावः । अण्डाद्यन्तःप्रविष्टं तदावरकं तस्यैव परमपुरुषादिरूपान्तरं तदेकदेशं (प्रादेशः प्रादेशमात्रादिविशेषं) च विना यत्सर्वगतं रूपं तदेव परममहान् ।

'कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः ।
देशकोटिविहीनत्वं देशानन्त्यं तथैव च ।।

गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः ।
आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् ।।

तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम् ।
तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते ।।

परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते ।
तस्याचिन्त्याद्भुतैश्वर्याद्व्यवहारार्थमेव च ।।

गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ।
व्याप्तत्वं देशतोऽप्यस्ति सर्वरूपेषु यद्यपि ।।

न च भेदः क्वचित्तेषामणुमात्रोऽपि विद्यते ।
तथापि विद्यतेऽणुत्वं यस्मादैश्वर्ययोगतः ।।

तस्माद्बुध्यवतारार्थमव्याप्तत्वं च भण्यते ।
यत्तस्य व्यापकं रूपं परं नारायणाभिधम् ।।

शून्यं ब्रह्मेति तत्प्राहुर्द्वितीयं स्रष्टृ यत्ततः ।
परमः पुरुषो नाम मितं तद्देशतो विभोः ।।

तृतीयं वासुदेवाख्यं जगदावरकं मितम् ।
देशतो जगदाविष्टं तुरीयं विष्णुनामकम्' ।। इति ब्रह्मतर्के ।।

सर्वगतस्यापि ब्रह्मरूपस्य कालादिरूपया प्रकृत्या समव्याप्तावपि दार्ष्टान्ति-कान्तर्भावात्तदन्यस्मिन्ननवस्थानाच्च स्वरूपावस्थितस्येत्युक्तम् ।

'देव्यां कालादिरूपिण्यां स्थितं ब्रह्मापि सर्वगम् ।
उच्यतेऽनन्यगं यस्मादात्मवत्सा हरेर्विभोः ।
महदादिगतं यत्तु तदन्यगतमुच्यते' ।। इति ब्राह्मे ।। २ ।।

एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ।
संस्थानभुक्त्या भगवानव्यक्तोऽव्यक्तभुग् विभुः ।। ३ ।।

स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
सतोऽविशेषभुग् यस्तु स कालः परमो महान् ।। ४ ।।

अनुमितः शास्त्रलोकानुसारेण ज्ञातः ।

'अनुमेति द्वयं प्राहुर्यथाज्ञानं च लिङ्गजम्' । इत्यभिधानम् ।।

'यावन्तं देवलोकस्थो मानुषस्त्ववधारयेत् ।
महाप्राज्ञो देवजूकः स कालः परमाणुकः ।।
सर्गाद्यैरनवच्छिन्नस्तदनन्तर इत्यपि ।।

तथैव परमाण्वादिविशेषात्मापि नो भवेत् ।
पूर्वापरादिभेदो न स कालः परमो महान् ।।' इति ब्रह्मतर्के ।।

स्वरूपावस्थितस्य कैवल्यमविशेषो निरन्तर इत्येतानि विशेषणानि क्रमेण परममहतः कालस्याप्यत्रोक्तानि ।

'देशतः कालतश्चैव वस्तुतश्च त्रिधा हरेः ।
यथानन्त्यं न चान्यस्य प्रकृतेर्देशकालतः ।।
तथाशब्दस्य कालस्य देशानन्त्यं न कालतः ।
कालशब्दात्मिका सैव तथापि तु हरेः सदा ।।

नास्याः सामर्थ्यलेशोऽपि ज्ञानानन्दगुणेष्वपि ।
ज्ञेयस्तदवरो वायुः शेषवीन्द्रहरास्ततः ।।
अवरास्तत इन्द्राद्या गुणैः सर्वैर्न संशयः ।।' इति ब्रह्मवैवर्ते ।।

'अण्वादिकालसंस्थानभोक्तृत्वात्परमेश्वरः ।
अण्वादिनामवाच्योऽसौ कालश्चेत्यभिधीयते' ।। इति च ।।

सतो ब्रह्मणः अविशेषं स्वरूपं यः कालः कालान्तर्यामी तदेव ब्रह्म भुंक्ते । तदपि ब्रह्म परममहत् । तस्यापि त्रिधा परिच्छेदाभावात् ।

'सर्वं सर्वत्र भोक्ताऽपि विशेषादेकभोक्तृवत् ।
स्थितो हरिरचिन्त्यात्मा निजैश्वर्यादजो विभुः' ।।
इति ब्रह्मतर्के ।। ३-४ ।।

अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः ।
जालार्करश्म्यवगतः खमेवानुपतन्नगात् ।। ५ ।।

अगात् दृष्टिविषयं प्राप्य ज्ञात इत्यर्थः ।। ५ ।।

लघूनि वै समाम्नाता दश पञ्च च नाडिका ।
ते द्वे मुहूर्तं प्रहरः षड् यामः सप्त वा नृणाम् ।। ८ ।।

राशिभेदात् । ऊनातिरेकात्सप्त वेति ।। ८ ।।

द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ।
स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलं पिबेत् ।। ९ ।।

काकणिकाचतुष्कं तु विंशांशेत्यभिधीयते ।
कृष्णलेत्यपि तं ब्रूयुस्तैश्चतुर्भिस्तु माषकम् ॥

चतुरङ्गुलदीर्घे तु कृते माषचतुष्टये ।
यावत्स्यात्परिणाहेन तावद्वारं विधीयते ॥

प्रस्थस्य नाडीपात्रस्य षट्प(द)लस्य शुभे जले ।
भाराधिक्येनोदकेन क्षिप्रं पूर्तिर्भविष्यति ॥

अतिशैत्ये कलङ्के च ना(माघे)द्येनैव तु पूरणम् ।
तस्माद्वसन्तकाले तु प्रयागस्थोदकेन तु ।
नाडीशुद्धिपरीक्षा स्यादन्यथा न समं भवेत्' ॥ इति पाद्मे ॥

'निर्मलेन समोष्णेन नित्यसूर्यांशुवारिणा ।
प्रवाहगेन कार्या स्यात्कालशुद्धिः सदैव तु' ॥ इति ब्रह्माण्डे ॥९॥

यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे ।
पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद ॥ १० ॥

यत्रोभयोः स शब्दः स्यात्तत्र द्विवचनेऽप्युभे' । इत्यभिधानम् ॥१०॥

ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् ।
संवत्सरावसानेन पर्येत्यनिमिषो विभुः ॥ १३ ॥

संवत्सरः परिवत्सर इडावत्सर एव च ।
अनुवत्सरो वत्सरश्च विदुरेवं प्रभाष्यते ॥ १४ ॥

'इडावत्सरनामाऽसौ नक्षत्रद्वादशे स्थितः ।
तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः ।।

वत्सरो यः स्थितस्त्वह्नां षष्ठ्युत्तरशतत्रये ।
गुर्वावर्ते द्वादशांशे (गुर्वावर्तद्वादशांशे) यः स्थः स परिवत्सरः ।।

सौरद्वादशके मासे यः स्थः संवत्सरो हरिः ।
एवं स कालनामाऽपि कालस्थः परमेश्वरः' ।। इति ब्रह्मतर्के ।।

'सर्वदा दर्शनात्तस्यानिमिषत्वं विदुर्बुधाः ।
सततं गमनाद्वापि कालस्थस्य महात्मनः' ।। इति च ।।१३-१४।।

यः सृज्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या
पुंसोऽभ्रमाय दिवि धावति भूतभेदः ।
कालाख्यया गुणमयीं क्रतुभिर्वितन्वं-
स्तस्मै बलिं हरत वत्सरपञ्चकाय ।। १९ ।।

अभ्रमाय भूतभेदकः । क्रतुभिः स्वप्रज्ञाभिः ।

'भूतानां ज्यैष्ठ्यकानिष्ठ्यज्ञस्यै यज्ञादिवृत्तये ।
बोधयन्सृज्यशक्तिं च कालस्थो वर्तते हरिः' ।।
इति तन्त्रप्रकाशिकायाम् ।। १९ ।।

निशावसान आरब्धो लोककल्पोऽनुवर्तते ।
यावद् दिनं भगवतो मनून् भुञ्जंश्चतुर्दश ।। २३ ।।

दिनस्थो भगवान्भोक्ता ।। २३ ।।

स्वं स्वं कालं मनुर्भुङ्क्ते साधिका ह्येकसप्ततिः ।
मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः ।
भवन्ति चैते युगपत् सुरेशाश्चानु ये च तान् ।। २४ ।।

'युगैकसप्ततेरूर्ध्वं सार्धाष्टादशलक्षकम् ।
वत्सराणां मनोर्भुक्तिः सहस्रं चतुरुत्तरम् ।।

शतानां प्रलयश्चैव पञ्चोत्तरमथापि च ।
आद्येषु षट्सु प्रथमे द्विसहस्रं प्रकीर्तितम् ।
वत्सराणां मनोरन्तरेवमिन्द्रादीनां भवेत्' ।। इति महावाराहे ।।२४।।

तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः ।
कालेनानुगतः शेष आस्ते तूर्ष्णीं दिनात्यये ।। २७ ।।

'ब्रह्मणा कालनाम्ना तु सह शेते हरिर्निशि' । इति ब्राह्मे ।। २७ ।।

एवंविधैरहोरात्रैः कालगत्योपलक्षितैः ।
अपेक्षितमिवास्यापि परमायुर्वयःशतम् ।। ३२ ।।

अस्य ब्रह्मणः । ब्रह्मणो दिनमित्युक्तत्वात् ।। ३२ ।।

कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।
अव्याकृतस्यानन्तस्य ह्यनादेर्जगदात्मनः ।। ३७ ।।

'नायुर्मानं भगवतः कस्मिन्रूपेऽपि विद्यते ।
अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः' ।। इति हरिवंशेषु ।।३७।।

कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईरितः ।
नैवेष्टे स प्रभुर्भूम्न ईश्वरो धाममानिनाम् ।। ३८ ।।

'यमः कालो मानुषाणां तस्य कालः सुदर्शनः ।
तस्यापि रुद्रस्तत्कालो ब्रह्मा दुर्गाऽपि तस्य तु ।।

सा ब्रह्मप्रलये देवी वर्तते चक्ररूपिणी ।
संहरन्ती सदा लोकान्सैव ब्रह्मादिषु स्थिता ।।

तस्या नियामको विष्णुः परः कालः स उच्यते ।
कालाभिमानिनी सैव प्रभुर्न जगदीशितुः ।।
तस्याः प्रभुः स एवेशो विष्णुः सर्वेश्वरेश्वरः ।।' इति च ।। ३८ ।।

विकारैः षोडशैर्युक्तो विशेषादिभिरावृतः ।
अण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः ।। ३९ ।।

दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ।
लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः ।। ४० ।।

'दशेन्द्रियाणि च मनो भूतान्यण्डगतानि तु ।
विकारा इति विज्ञेया भूताहंमहतः परे' ।। इति च ।।

'पृथिवीं विशेष इत्याहुः शब्दादीनां बहुत्वतः ।
सा सूक्ष्मत्वाद्गुणोत्यण्डं द्विगुणा तु दशोत्तराः ।
अबादयः प्रकृत्यन्ता अष्टप्रकृतयः स्मृताः' ।। इति च ।

अन्तर्गताः शरीराणि ।

'शरीराणां बहुत्वेन अतीतानागतैस्तथा ।
अस्यैव देवकायेषु प्रतिप्रति च दर्शनात् ।
विष्णुसामर्थ्यतोऽण्डानां बहुत्वं नान्यथा भवेत् ।।' इति ब्रह्मतर्के ।

'एकमण्डं बहुत्वेन प्रत्येकं रोमकूपगम् ।
ब्रह्माऽपश्यत्तथाऽऽत्मानं हरेस्तेषु पृथक्पृथक्' ।। इति ब्रह्माण्डे ।।

'बृहदण्डमभूदेकम्' इति च भारते ।। ३९,४० ।।

**यमाहुरक्षरं ब्रह्म सर्वकारणकारणम् ।**
**विष्णोर्धाम परं साक्षात् पुरुषस्य महात्मनः ।। ४१ ।।**

**धाम** गृहम् अण्डराशयः ।। ४१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे द्वादशोऽध्यायः ।।



## त्रयोदशोऽध्यायः

**ससर्जाग्रेऽथ तामिस्रमन्धतामिस्रमादिकृत् ।**
**महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ।। २ ।।**

'तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः ।
तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते ।
मरणं त्वन्धतामिस्रमविद्या पञ्चपर्विका' ।। इति भारते ।।

'तमोऽज्ञानं विपर्यासो मोहोऽन्ये तु तदाग्रहाः' इति हरिवंशेषु ।।२।।

दृष्ट्वा पापीयसीं सृष्टिं नाऽत्मानं बह्वमन्यत ।
भगवद्ध्यानपूतेन मनसाऽन्यांस्ततोऽसृजत् ।। ३ ।।

सनकं च सनन्दं च सनातनमथाऽत्मभूः ।
सनत्कुमारं च मुनिं निष्क्रियानूर्ध्वरेतसः ।। ४ ।।

कालतो बलतश्चैव ज्ञानानन्दादिकैरपि ।
सर्वैर्गुणैर्विष्णुरेव श्रेष्ठस्तदवमा रमा ।।

अनन्तांशेन कालात्तु समा तस्याश्चतुर्मुखः ।
अवरो बहुलांशेन तत्समो वायुरुच्यते ।।

नियमाद्वायुरेवैको ब्रह्मत्वं याति नापरः ।
तस्मात्समानता मुक्तौ वायुत्वे किञ्चिदूनता ।।

दशवर्षं तु तत्पश्चाज्जननं तत्स्त्रियोरपि ।
आनन्दादिस्तद्दशांशः कालः संवत्सरात्परः ।।

यावत्पश्चाज्जनिस्तावत्पूर्वं देहक्षयो भवेत् ।
ब्रह्मवाय्वोस्तु ये देव्यौ तद्दशांशः सुखादिकः ।।

शेषस्य गरुडस्यापि कालो दिव्यसहस्रकः ।
शेषरुद्रौ ब्रह्मवायू यथा तद्वत्परस्परम् ।।

तद्देव्यस्तद्दशांशाः स्युस्ततस्त्विन्द्रादयो मताः ।
एवं मुक्तौ च पूर्वं च नान्यथा क्वचिदिष्यते ।।

अन्यथोक्तिर्यत्र च स्यात्तन्मोहार्थं भविष्यति ।
पूर्वापरविपर्यासो बहुरूपत्वहेतुतः ।।' इति विष्णुकृततत्त्वविवेके ।।

'अथात आनन्दस्य मीमांसा' । 'देवासुरेभ्यो मघवान्प्रधानः' इत्यादि च ।

'इन्द्राद्याः सनकाद्याश्च दक्षाद्या येऽपि चापरे ।
ऋषयो मनवो देवास्तद्वशा ये च केचन ॥

उमाया अवराः सर्वे गुणैः सर्वैर्न संशयः ।
तत्समो न भविष्यो वा न भूतोऽद्यतनोऽपि वा ॥

ऋते हरिं ब्रह्मवायू शेषवीन्द्रान्सभार्यकान् ।
शङ्करं चेति वेत्तव्यमन्यन्मोहार्थमुच्यते' ॥
इति विष्णुकृततत्त्वनिर्णये ॥ ३,४ ॥

स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ।
प्रजापतिपतिस्तन्वीं तत्याज व्रीडितस्तदा ।
तां दिशो जगृहुर्घोरां नीहारं यद् विदुस्तमः ॥ ३३ ॥

'यां तत्याज विभुर्ब्रह्मा मानुषी वाक् तु सा स्मृता ।
सरस्वती निजा भार्या देवीं वाचं तु तां विदुः' ॥ इति च ॥३३॥

कदाचिद् ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ॥ ३४ ॥

मैत्रेय उवाच–

ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः ।
शस्त्रमिज्यां(ज्या) स्तुतिस्तोमं प्रायश्चित्तं व्यधात् क्रमात् ॥३७॥

इतिहासपुराणं च पञ्चमं वेदमीश्वरः ।
सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥ ३९ ॥

तपः शौचं दया सत्यं धर्मस्येति पदानि च ।
आश्रमांश्च यथासंख्यमसृजत् सह वृत्तिभिः ।। ४१ ।।

'अभिमानितः शब्दतश्च ब्रह्मा वेदान्ससर्ज ह ।
यज्ञादींश्चक्लृपे वाचा तथा सर्वाभिमानिनः ।

'इतिहासपुराणे तु श्रुत्वा हरिमुखात्स्वयम् ।
भारतादीन्विना पश्चाद्धरिणाऽन्यैश्च निर्मितान्' । इति ।।३४-४१।।

सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत् तथा ।
वार्ताऽसञ्चयशालीनं शिलोञ्छ इति वै गृहे ।। ४२ ।।

'प्राजापत्यं ब्रह्मचर्यमेकभार्यर्तुगामिता' ।। इति व्यासस्मृतौ ।।

'वार्ता यायावरं ज्ञेयमेकाहित्वमसञ्चयः' ।। इति च ।। ४२ ।।

वैखानसा वालखिल्योदुम्बराः फेनपा वने ।
न्यासे कुटीचकः पूर्वं बहूदो हंसनिष्क्रियौ ।। ४३ ।।

'वैखानसा मूलभक्षाः फलभक्षा उदुम्बराः ।
वालखिल्याः सर्वभक्षाः फेनपा वत्सफेनपाः' ।। इति च ।। ४३ ।।

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ।
एवं व्याहृतयश्चासन् प्रणवेनास्पदं गताः ।। ४४ ।।

'आन्वीक्षिकी तन्त्रविद्या सा च वेदानुसारिणी ।
विष्णुप्रोक्ता शिवायुक्ता ज्ञेया वेदबहिष्कृता ।।

दण्डनीती राजधर्मस्त्रयी वेदाः प्रकीर्तिताः ।
वार्ता वाणिज्यकादिः स्यादेताभिर्यत्तु जीवनम् ।।
तदान्वीक्षिक्यादिनाम ब्रह्मणा निर्मितं पुरा' ।। इति च ।

प्रणवः पूर्ववक्त्रात् ।

'प्रणवः पूर्ववक्त्रेण भूराद्याश्च मुखत्रयात् ।
प्रदक्षिणमवर्तन्त वेदाश्चैवाश्रमास्तथा' ।। इति ब्राह्मे ।। ४४ ।।

स्पर्शास्तस्याभवन् जीवात् स्वरो देह उदाहृतः ।
ऊष्माण इन्द्रियाण्याहुरन्तस्था बलमात्मनः ।। ४६ ।।

'स्पर्शास्तस्या भवञ्जीवात्स्वरा देहात्प्रजज्ञिरे ।
ऊष्माणं इन्द्रियेभ्यश्च अन्तस्था बलतो विभोः ।।' इति च ।।

'यस्माद्यज्जायते चाङ्गात्तत्तदङ्गाभिधं भवेत्' । इति च ।। ४६ ।।

स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ।
शब्दब्रह्मात्मनस्तात व्यक्ताव्यक्तात्मनः प्रभोः ।। ४७ ।।

'शब्दब्रह्मात्मको ब्रह्मा सर्वशब्दाभिधो यतः ।
ऋते नारायणादीनि नाम्नां स विषयो यतः ।।

व्यक्तं ब्रह्माण्डमुद्दिष्टमव्यक्तं महदादि च ।
तद्व्यापकत्वाद्ब्रह्मा तु व्यक्ताव्यक्तात्मकः स्मृतः' ।। इति च ।।४७।।

ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ।
ज्ञात्वा तद् हृदये भूयश्चिन्तयामास कौरव ।। ४९ ।।

अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ।
न ह्येधन्ते प्रजा नूनं दैवमत्र विघातकम् ।। ५० ।।

एवं युक्तिमतस्तस्य दैवं चावेक्षतस्तदा ।
कस्य रूपमभूद् द्वेधा यत् कायमभिचक्षते ।। ५१ ।।

'ऋषीणां भूरिवीर्याणाम्' इति सिंहावलोकनम् ।
यत्र पश्चात्तनः श्रेष्ठस्तत्र सिंहावलोकनम्' ।। इति ब्रह्मतर्के ।।

केन व्याप्तत्वात्कायः ।। ४९-५१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे त्रयोदशोऽध्यायः ।।



## चतुर्दशोऽध्यायः

तद् विधेहि नमस्तुभ्यं कर्मस्विज्यात्मशक्तिषु ।
यत् कृत्वेह यशो विष्वगमुत्र च भवेद् गतिः ।। ८ ।।

इज्या पूजा ।

स्वदंष्ट्रयोद्धृत्य महीं विलग्नां स उत्थितः संरुरुहे रसायाः ।
तत्रापि दैत्यं गदयाऽऽपतन्तं सुनाभसन्दीपिततीव्रमन्युः ।।३३।।

जघान रुन्धानमसह्यविक्रमः सलीलयेभं मृगराडिवाम्भसि ।
तद्रक्तपङ्काङ्किततुण्डगण्डो यथा गजेन्द्रो जगतीं विभिन्दन् ।।३४।।

'ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः ।
स एव पार्षदाविष्टो द्वितीयं कर्णताडनात् ।।

पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् ।
भुवमुद्धरतैवासौ हरिणा क्रोडमूर्तिना' ।। इति ब्रह्माण्डे ।।

'व्यत्यासेनापि चोच्यन्ते अविवेकेन कुत्रचित् ।
दुष्टानां मोहनार्थाय तत्र तत्र कथाः क्वचित्' ।। इति स्कान्दे ।।

अविवेकेनेत्यस्य विविच्य नोच्यत इत्यर्थः । न तु कर्तुरविवेकः ।

'सर्वज्ञस्य कुतोऽज्ञानं व्यासस्योदारकर्मणः' इत्युक्तत्वात् ।

'दुष्टानां मोहनार्थाय' इति च ।। ८,३३,३४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे चतुर्दशोऽध्यायः ।।



## पञ्चदशोऽध्यायः

ब्रह्मादयो यत्कृतसेतुपाला
यत्कारणं विश्वमिदं च मायया ।
आज्ञाकरी तस्य पिशाचचर्या
अहो विभूम्नश्चरितं विडम्बनम् ।। २८ ।।

'पिशाचचर्यामचरद्रुद्रो विष्ण्वाज्ञयैव तु ।
गर्भिणीवधनोदार्थमहो विष्णुर्विडम्वकृत्' ।। इति वाराहे ।। २८ ।।

मैत्रेय उवाच–

श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् ।
पुत्रयोश्च वधं कृष्णाद् विदित्वाऽऽसीन्महामनाः ।। ५० ।।

'विष्णुहस्तवधाल्लोको भक्तस्यान्यस्य न क्वचित् ।
तथाप्यसुरमोहाय न विविक्तं क्वचित्क्वचित्' ।। इति स्कान्दे ।।

'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः' इति च ।

'स्वतः सद्गतियोग्यस्य पुत्रादेर्हेतुता भवेत् ।
योग्यताऽनादिभक्तिः स्यादयोग्यस्य कुतो गतिः' ।।
इति ब्रह्मतर्के ।। ५० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे पञ्चदशोऽध्यायः ।।



## षोडशोऽध्यायः

वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः ।
ये नित्यमनिमित्तेन धर्मेणाराधयन् हरिम् ।। १४ ।।

**अनिमित्तेन** विष्ण्वर्पणेन ।। १४ ।।

वैमानिकाः सललनाश्चरितानि यत्र
गायन्ति लोकशमलक्षपणानि भर्तुः ।
अन्तर्जले तु विलसन्मधुमाधवीनां
गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः ।। १७ ।।

'मुक्ताश्चैवाधिकारस्था द्वेधा वैकुण्ठलोकगाः ।
अमुक्तानां भ्रमः क्वापि न मुक्तानां कचिद्भवेत्' ।। इति भविष्यत्पुराणे ।
'कृष्णात्मनां न रज आदधुः' ।। इति च ।। १७ ।।

पारावतान्यभृतसारसचक्रवाक-
दात्यूहहंसशुकतित्तिरिबर्हिणाद्यैः ।
कोलाहले विरचिते चिरमात्रयोच्चै-
र्भृङ्गाधिपे हरिकथामनुगायमाने ।। १८ ।।

'तिरश्चीनाः स्थावराश्च सर्वे ज्ञानाद्विकुण्ठगाः ।
अमुक्ता मुक्तिमायान्ति नियमात्कर्मणः क्षये' ।। इति च ।। १८ ।।

मन्दारकुन्दकुरबोत्पलचम्पकोर्ण-
पुन्नागनागबकुलाम्बुजपारिजाताः ।
गन्धेऽर्चिते तुलसिकाभरणेन तस्या
यस्मिंस्तपः सुमनसो बहु मानयन्ति ।। १९ ।।

भक्तैरर्चिते सति भगवता तुलसिकाभरणे कृते तस्या गन्धार्थं तपो बहु मानयन्ति ।। १९ ।।

यन्न व्रजन्त्यघभिदोऽरचनानुवादाः
शृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुता हतभगैर्नृभिरात्तवीर्या-
स्तास्तान् क्षिपन्त्यशरणेषु तमःसु हन्त ।। २३ ।।

अरचनानुवादाः ।। २३ ।।

येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना
ज्ञानं च तत्त्वविषयं सहधर्म यत्र ।
नाराधनं भगवतो वितरन्त्यमुष्य
संमोहिता विततया ननु मायया ते ।। २४ ।।

ये नृगतिं ज्ञानादियोग्यां न प्रपन्नाः ते मोहाद्भगवदाराधनं न कुर्वन्ति । धर्मज्ञानवर्जिता मानुषा एव न भवन्तीत्यर्थः ।। २४ ।।

मत्तद्विरेफवनमालिकया निवीतौ
विन्यस्तयाऽसितचतुष्टयबाहुमध्ये ।
वक्त्रभ्रुवा कुटिलया स्फुटनिर्गतेन
रक्तेक्षणेन च मनाग् रभसं दधानौ ।। २८ ।।

वक्त्रस्थया भ्रुवा सह निर्गतेन ।। २८ ।।

तान् वीक्ष्य वातरशनांश्चतुरः कुमारान्
वृद्धान् दशार्धवयसो विदितात्मतत्त्वान् ।
वेत्रेण चास्खलयतामतदर्हणांस्तौ
तेजो विहस्य भगवत्प्रतिकूलशीलौ ।। ३० ।।

'जयस्य विजयस्यापि कदाचिद्ब्रह्मशापतः ।
कृष्णावतारपर्यन्तं प्रातिकूल्यं च जायते' ।। इति नारदीये ।।३०।।

को वा इहैत्य भगवत्परिचर्ययोच्चै-
स्तद्धर्मिणामपि सतां विषमस्वभावः ।

तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां
को वाऽत्मवत् कुहकयोः परिशङ्कनीयः ।। ३२ ।।

युवयोर्यथा विरुद्धस्वभावत्वं तद्वद्भगवद्विषय इह शङ्कनीयः कः ? तस्मान्निषेधो व्यर्थ इत्यर्थः ।। ३२ ।।

न ह्यन्तरं भगवतीह समस्तकुक्षा-
वात्मानमात्मनि नभो नभसीव धीराः ।
पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं
व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ।। ३३ ।।

समस्तकुक्षौ स्थिते भगवति न हि भेदः । अस्मिंल्लोके । अन्तस्थभगवद्रूपं वहिष्ठैक्येन पश्यन्ति नभो नभसीव । तत्र प्रत्युदरभेदनिमित्तं भयं युवाभ्यां व्युत्पादितं किम् सर्वान्तर्यामित्वेनाभयस्य भयमस्तीति भावः कृतः । अन्यथा किमिति निवारणम् ।

'सर्वोदरगतं ब्रह्म ये भेदेन विचक्षते ।
सर्वत्रापि भयं तेषां मृतानां तम एव च' ।। इति तत्त्वविवेके ।।३३।।

तद् वा अमुष्य परमस्य विकुण्ठभर्तुः
कर्तुं न युक्तमिति धीमहि मन्दधीभ्याम् ।
लोकानितो व्रजतमन्तरभावदृष्ट्या
पापीयसस्त्रय इमे रिपवोऽस्य यत्र ।। ३४ ।।

त्रयो रिपवो देहत्रये ।। ३४ ।।

भूयानघाद्धि भगवद्भिरकारि दण्डो
यो नौ हरेत सुरहेलनमप्यशेषम् ।
मा वोऽनुतापकलया भगवत्स्मृतिघ्नो
मोहो भवेदिह तु नौ व्रजतोरधोऽधः ।। ३६ ।।

सुरहेलनस्यापि दण्डो भवति । अत्र स्थितयोः पुनः पूर्ववन्मोहो न स्यादंशिनोः ।। ३६ ।।

तं त्वागतं प्रतिहृतौपयिकं स्वपुंभि-
स्तेऽचक्षताक्षविषयं स्वसमाधिगम्यम् ।
हंसश्रियोर्व्यजनयोः शिववायुलोल-
शुभ्रातपत्रशशिकेसरशीकराम्बुम् ।। ३८ ।।

केसरा रश्मयः ।। ३८ ।।

कृत्स्नप्रसादसुमुखं स्पृहणीयधाम
स्नेहावलोककलया हृदि संस्पृशन्तम् ।
श्यामे पृथावुरसि शोभितया श्रिया स्व-
ग्रीवामणिं सुभगयन्तमिवात्मधिष्ण्यम् ।। ३९ ।।

'कौस्तुभो ब्रह्मणो रूपं प्राणश्चूडामणिस्तथा' । इति च ।। ३९ ।।

अत्रोपसृष्टमिति चोत्स्मितमिंदिरायाः
स्वानां धिया विरचितं बहुसौष्ठवाढ्यम् ।
मह्यं भवस्य भवतां भजनीयमङ्गं
नेमुर्निरीक्ष्य नवितृप्तदृशो मुदा कैः ।। ४२ ।।

'अविद्यमानकरणं विद्यमानस्मृतिस्तथा ।
उभयं रचनं प्रोक्तं पूर्वसिद्धेषु तु स्मृतिः' ।। इति शब्दनिर्णये ।।४२।।

तस्यारविन्दनयनस्य पदारविन्द-
किञ्जल्कमिश्रतुलसीमकरन्दवायुः ।
अन्तर्गतः स्वविवरेण चकार तेषां
सङ्क्षोभमक्षरजुषामपि चित्ततन्वोः ।। ४३ ।।

**अक्षरजुषामपि** तद्रूपसेवाभ्यासिनामपि ।। ४३ ।।

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किं चान्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ।। ४८ ।।

'भक्तिज्ञानपरीपाकात्किञ्चित्पूर्वं च मुच्यते ।
दर्शनेन हरेस्तत्र नानन्दः पूर्णतां व्रजेत्' ।। इति ब्रह्मतर्के ।।

अतोऽनपेक्षाणामानन्दोद्रेको मोक्षेच्छुभ्यः । तेषां परिपाकतः पूर्वं ब्रह्मदृष्ट्या मुक्तिप्राप्तेः ।

'मुमुक्षोः केवलो भक्तो मुक्तावपि सुखी भवेत्' । इति च ।। ४८ ।।

कामं व्रजेम वृजिनैर्निरयेषु नष्टा-
श्चेतोऽलिवद् यदि नु ते पदयो रमेत ।
वाचश्च नस्तुलसिवद् यदि तेऽङ्घ्रिशोभाः
पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः ।। ४९ ।।

'यावत्परमभक्तैस्तु भुज्यते दुःखमुल्बणम् ।
तावन्मुक्तौ सुखोद्रेकस्तत्र चेद्भक्तिवर्धनम्' ।। इति च ।। ४९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे षोडशोऽध्यायः ।।



## सप्तदशोऽध्यायः

तद् वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ।
तद्ध्येवात्मकृतं मन्ये यत् स्वपुंभिरसत्कृताः ।। ४ ।।

यस्यामृतामलयशः श्रवणावगाहः
सद्यः पुनाति जगदाश्वपचं विकुण्ठः ।
सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्ति-
श्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ।। ६ ।।

यत्सेवया चरणपद्मपवित्ररेणोः
सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ।
न श्रीर्विरक्तमपि मां विजहाति यस्याः
प्रेक्षालवार्थमितरे नियमोऽर्हते मत् ।। ७ ।।

'सर्वोत्तमोऽपि भगवान्विप्रादेः पूजनाय तु ।
गुणलब्धिं ततो ब्रूते नित्यपूर्णगुणोऽपि सन् ।।

ब्रूयुश्चान्ये क्वचित्तत्तु तदुक्तेरनुसारतः ।
उपादत्ते वरांश्चापि लोकानां मोहनाय च' ।। इति कौर्मे ।।

विप्राणां चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं श्रीर्न जहातीति यत् । अतश्छिन्द्याम् ।

'अनुक्ताश्च गुणा विष्णोरुक्ता दोषा न तस्य तु ।
अज्ञानाद्दोषविज्ञानं गुणज्ञानं यथार्थतः' ।। इति पैङ्गिश्रुतिः ।।

'विप्राणां चापि भक्तानामन्येषां च जनार्दनः ।
ब्रह्मणः शङ्कराद्वापि देवताभ्यस्तथैव च ।।

आत्मनश्च श्रियश्चैव सकाशात्प्रियतामपि ।
पूज्यतामत्ययुक्तं च वदेत्क्वापि विमोहयन्' ।। इति स्कान्दे ।।४-७।।

ब्रह्मोवाच–

अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ।
आस्वाद्य मन्युदष्टानां तेषामात्माऽप्यतृप्यत ।। १३ ।।

देवीं द्योतमानाम् । ऋषिकुल्याम् ऋषिकुलस्तुतिपराम् ।। १३ ।।

ते योगमाययाऽऽरब्धपारमेष्ठ्यमहोदयम् ।
प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः कम्पितत्वचः ।। १५ ।।

'तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्' ।। इत्युक्तम् ।। १५ ।।

त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ।
धर्मस्य परमो गुह्यो निर्विकारो भवान् मतः ।। १८ ।।

धर्मस्यापि दुर्ज्ञेयः ।। १८ ।।

यं वै विभूतिरुपयात्यनुवेलमन्यै-
रर्थार्थिभिः स्वशिरसा धृतपादरेणुः ।
धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो
लोकं मधुव्रतपतेरिव कामयाना ।। २० ।।

**मधुव्रतपतेः** सारग्राहिणां पतेः । अङ्घ्रिस्थतुलसीलोकं स्थानमुरसि स्थिताऽपि स्पर्धयेव कामयाना । 'लब्ध्वाऽपि वक्षसि पदम्' । इति च ।। २० ।।

यस्तां विविक्तचरितैरनुवर्तमानां
नात्याद्रियत् परमभागवतप्रसङ्गः ।
स त्वं द्विजानुपथपुण्यरजःपुनीतिः
श्रीवत्सलक्ष्म किमगा भगभाजनत्वम् ।। २१ ।।

परमभागवतत्वेन तस्यामत्यादरः । न तु कामात् ।

'हरिभक्तिर्हरेः प्रीतिर्ज्ञानानन्दादयो गुणाः ।
अधिकारे च मुक्तौ च ब्रह्मवाय्वोश्च तत्स्त्रियोः ।।
शेषवीन्द्रहराणां च तत्स्त्रीणां वासवादिनाम् ।
यथाक्रमं तु विज्ञेया भूमौ कारणतोऽन्यथा ।।
देहस्य लक्षणं चैव भूमावप्यन्यथा भवेत् ।
ब्रह्मादिषु क्रमेणैव नित्यं स्याद्देहलक्षणम् ।।
श्रियोऽधिका गुणाः सर्वे सर्वेभ्यो नियमेन तु ।
उक्ताश्चैवाप्यनुक्ताश्च ततो विष्णोर्न संशयः' ।।

इति तत्त्वनिर्णये ।। २१ ।।

ब्रूयुश्चान्ये क्वचित्तत्तु तदुक्तेरनुसारतः ।
उपादत्ते वरांश्चापि लोकानां मोहनाय च' ।। इति कौर्मे ।।

विप्राणां चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं श्रीर्न जहातीति यत् । अतश्छिन्द्याम् ।

'अनुक्ताश्च गुणा विष्णोरुक्ता दोषा न तस्य तु ।
अज्ञानाद्दोषविज्ञानं गुणज्ञानं यथार्थतः' ।। इति पैङ्गिश्रुतिः ।।

'विप्राणां चापि भक्तानामन्येषां च जनार्दनः ।
ब्रह्मणः शङ्कराद्वापि देवताभ्यस्तथैव च ।।

आत्मनश्च श्रियश्चैव सकाशात्प्रियतामपि ।
पूज्यतामत्ययुक्तं च वदेत्क्वापि विमोहयन्' ।। इति स्कान्दे ।।४-७।।

ब्रह्मोवाच–

अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ।
आस्वाद्य मन्युदष्टानां तेषामात्माऽप्यतृप्यत ।। १३ ।।

देवीं द्योतमानाम् । ऋषिकुल्याम् ऋषिकुलस्तुतिपराम् ।। १३ ।।

ते योगमाययाऽऽरब्धपारमेष्ठ्यमहोदयम् ।
प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः कम्पितत्वचः ।। १५ ।।

'तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्' ।। इत्युक्तम् ।। १५ ।।

त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ।
धर्मस्य परमो गुह्यो निर्विकारो भवान् मतः ।। १८ ।।

धर्मस्यापि दुर्ज्ञेयः ।। १८ ।।

यं वै विभूतिरुपयात्यनुवेलमन्यै-
रर्थार्थिभिः स्वशिरसा धृतपादरेणुः ।
धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो
लोकं मधुव्रतपतेरिव कामयाना ।। २० ।।

**मधुव्रतपतेः** सारग्राहिणां पतेः । अङ्घ्रिस्थतुलसीलोकं स्थानमुरसि स्थिताऽपि स्पर्धयेव कामयाना । 'लब्ध्वाऽपि वक्षसि पदम्' । इति च ।। २० ।।

यस्तां विविक्तचरितैरनुवर्तमानां
नात्याद्रियत् परमभागवतप्रसङ्गः ।
स त्वं द्विजानुपथपुण्यरजःपुनीतिः
श्रीवत्सलक्ष्म किमगा भगभाजनत्वम् ।। २१ ।।

परमभागवतत्वेन तस्यामत्यादरः । न तु कामात् ।

'हरिभक्तिर्हरेः प्रीतिर्ज्ञानानन्दादयो गुणाः ।
अधिकारे च मुक्तौ च ब्रह्मवाय्वोश्च तत्स्त्रियोः ।।
शेषवीन्द्रहराणां च तत्स्त्रीणां वासवादिनाम् ।
यथाक्रमं तु विज्ञेया भूमौ कारणतोऽन्यथा ।।
देहस्य लक्षणं चैव भूमावप्यन्यथा भवेत् ।
ब्रह्मादिषु क्रमेणैव नित्यं स्याद्देहलक्षणम् ।।
श्रियोऽधिका गुणाः सर्वे सर्वेभ्यो नियमेन तु ।
उक्ताश्चैवाप्यनुक्ताश्च ततो विष्णोर्न संशयः' ।।
इति तत्त्वनिर्णये ।। २१ ।।

धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः
पद्भिश्चराचरमिदं द्विजदेवतार्थम् ।
नूनं भृतं तदभिघातिरजस्तमश्च
सत्त्वेन नो वरदया तनुवा निरस्य ।। २२ ।।

'धारणाद् भगवान् धर्मो यमनाद् यम उच्यते' । इति शब्दनिर्णये ।

'अनन्तासनवैकुण्ठक्षीरसागरगैस्त्रिभिः ।
रक्षां करोति भगवान्कपिलः सत्ववर्धनात् ।
असत्वोऽपि रजश्चैव तमश्चापि निरस्य तु' ।। इति मूर्तिभेदे ।।

'कपिलो वरदश्चैव विकलश्चेति कथ्यते' इति च ।

अतः सत्त्वस्य कारणत्वमात्रं कपिलो वरदा तनुः ।। २२ ।।

न त्वं द्विजोत्तमकुलं यदिहात्मगोपं
गोप्ता वृष स्वर्हणेन सुसूनृतेन ।
तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्थाः
लोकोऽग्रहीष्यदृषभस्य हि यत् प्रमाणम् ।। २३ ।।

आत्मैव गोपो गोपको यस्य तदात्मगोपम् ।। २३ ।।

तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः
क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ।
नैतावता त्र्यधिपतेर्बत विश्वभर्तु-
स्तेजःक्षतिस्त्ववनतस्य स ते विनोदः ।। २४ ।।

'असुरा अप्रियाश्चापि नित्यानन्दान्न लोकवत् ।
निषेध्यबुद्धिविषयमप्रियं हि हरेर्मतम्' ।। इति च ।

तस्मादनभीष्टमिव ।। २४ ।।

भगवानुवाच–

एतौ सुरेतरगतिं प्रतिपद्य सद्यः
संरम्भसम्भृतसमाध्यनुबद्धयोगौ ।
भूयः सकाशमुपयास्यत आशु यो वः
शापो मयैव विहितस्तदवैत विप्राः ।। २६ ।।

'अन्तर्भक्ता बहिःक्रुद्धा हिरण्याद्या हरिं प्रति ।
सर्वक्रुद्धाः शम्बराद्या अन्तः क्रोधवशास्तथा' ।। इति च ।। २६ ।।

ब्रह्मोवाच–

भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च ।
प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ।। २८ ।।

'स्वरूपश्रीस्तथा भार्या द्वेधा श्रीस्तु हरेर्मता' । इति च ।। २८ ।।

मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् ।
प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ।। ३१ ।।

'अन्तर्भक्ता बहिर्वैरा हिरण्याद्या हरेर्मताः ।
तत्र भक्त्याऽभवन्पूता द्वेष आवेशकान्गतः ।
ब्रह्मजा असुरा ये तु विष्णोः पार्षदतां गताः ।
बल्याद्याश्च हरेर्द्वेषमन्तः कृत्वा तमो गताः' ।। इति च ।।

तस्मात् संरम्भोऽल्पफलः कथ्यत एव । भक्तियोग एव ब्रह्महेलन-निस्तारकः ।। ३१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे सप्तदशोऽध्यायः ।।



## अष्टादशोऽध्यायः

ववौ वायुः सुदुस्पर्शः फट्कारारावववान् मुहुः ।
उन्मूलयन् नगपतीन् वात्यानीको रजोध्वजः ।। ५ ।।

'फट्कारश्चैव फूत्कारस्तथा किलकिलादयः ।
अनुकारशव्दा विज्ञेया ये चान्ये तादृशा मताः ।।'
इत्यभिधानम् ।। ५ ।।

अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम् ।
सृगाला अपि टङ्कारैः प्रणेदुरशिवाः शिवाः ।। ९ ।।

टङ्कारोऽप्यनुकारशब्दः ।

'नाशस्तत्र सृगालानां शिवानां चान्यथास्वरे' इत्याग्नेये ।। ९ ।।

खरोष्ट्राः कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम् ।
खात्काररभसा मत्ताः पर्यधावन् वरूथशः ।। ११ ।।

खात्कारोऽप्यनुकारशब्दः ।। ११ ।।

तं वीक्ष्य दुःसहजवं रणत्काश्चननूपुरम् ।
वैजयन्त्या स्रजा जुष्टमसंन्यस्तमहागदम् ।। २१ ।।

मनोवीर्यमदोत्सिक्तमधृष्यमकुतोभयम् ।
भीता निलिल्यिरे देवास्ताक्ष्यत्रस्ता इवाहयः ।। २२ ।।

'न देवानां प्रजापानां विजेता वरतो विना ।
बलेन विद्यया वापि न समस्तत्पतीन्विना ।
वरोऽपि तादृशो यावच्छरीरं नान्यदेहगः' ।।
इति तत्त्वनिर्णये ।। २१-२२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे अष्टादशोऽध्यायः ।।



## एकोनविंशोऽध्यायः

तयोः स्पृधोः स्निग्धगदाहताङ्गयोः
क्षतस्रवाघ्राणविवृद्धयुद्धयोः ।
विचित्रमार्गांश्चरतोर्जिगीषया
व्यभादिलायामिव शुष्मिणोर्मृधः ।। १९ ।।

दैत्यस्य यज्ञावयवस्य मायया
गृहीतवाराहतनोर्महात्मनः ।
कौरव्य मह्यां द्विषतोर्विमर्दनं
दिदृक्षुरागाद् ऋषिभिर्वृतः स्वराट् ।। २० ।।

आसन्नशौण्डीरमपेतसाध्वसं
कृतप्रतीकारमहार्यविक्रमम् ।
विलक्ष्य दैत्यं भगवान् सहस्रणी-
र्जगाद नारायणमादिसूकरम् ।। २१ ।।

अनेककल्पजननेतृत्वात् सहस्रणीः ।।

'अक्षतः क्षतवद्विष्णुरसमः समवत्तथा ।
अजितो जितवच्चैव ज्ञोऽज्ञवच्च प्रकाशयेत् ।।

सर्वरूपेष्वनन्तोऽपि ब्रह्माद्याश्चैव तन्मतेः ।
अनुसारितया ब्रूयुः कुर्युश्च स न दुःखभाक्' ।।
इति ब्रह्माण्डे ।। १९-२१ ।।

एषा घोरतमा सन्ध्या लोकशम्बट्करी प्रभो ।
उपसर्पति सर्वात्मन् सुराणां जयमावह ।। २६ ।।

'आदरं तु मुखं विद्याच्छम्बट्कारं तु भक्षणम्' । इत्यभिधानम् ।।२६।।

अधुनैवाभिजिन्नाम योगो मौहूर्तिकोऽभ्यगात् ।
शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ।। २७ ।।

'मध्याह्नस्त्वभिजित्प्रोक्त आषाढोत्तर एव च ।
श्रवणस्यापि पूर्वार्धो विषुवं चाभिजित्स्मृतम्' ।। इति च ।।२७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे एकोनविंशोऽध्यायः ।।



## विंशोऽध्यायः

गदायामपविद्धायां हाहाकारे च निर्गते ।
मानयामास तद्धर्मं सुनाभं चास्मरद् विभुः ।। ५ ।।

'धर्मः सत्य इति प्रोक्तो धर्मश्चापि हरेः प्रियः' ।। इति ब्राह्मे ।।

'यथेच्छयैव सर्वं तु मनसा देहतोऽपि वा ।
कर्तुं शक्तोऽपि शस्त्राद्या लीलैवानन्तशक्तितः' ।। इति वाराहे ।।५।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे विंशोऽध्यायः ।।



## एकविंशोऽध्यायः

मैत्रेय उवाच–

दैवेन दुर्वितर्क्येण परेणानिमिषेण च ।
जातक्षोभाद् भगवतो महानासीद् गुणत्रयात् ।। १२ ।।

रजः प्रधानान्महतस्त्रिलिङ्गो दैवचोदितात् ।
जातः ससर्ज भूतादिर्वियदादीनि पञ्च च ।। १३ ।।

'सृष्टौ लये तारतम्यं देवानां ज्ञायते स्फुटम् ।
तारतम्यपरिज्ञाने महातात्पर्यमिष्यते ।
अतस्तद्बहुशस्तू(शः सू)क्तमन्यच्चैतत्प्रकाशकम्' ।। इति वामने ।

'महतो ब्रह्मवायू च तद्भार्ये चाभिमानिनः ।
अहमः शेषवीन्द्रौ च रुद्रेन्द्रौ कामतस्त्रियः ।।
मनसस्त्वनिरुद्धश्च चन्द्रश्चान्ये यथोदितम् ।
एवं क्रमो व्यत्ययस्तु सूक्ष्मस्थूलविभेदतः ।।
सृष्टौ गुणे च ज्ञानादौ मुक्तिस्थे वाप्ययं क्रमः ।
नियमेनान्यथोक्तिस्तु मोहायासुरजन्मनाम्' ।। इति वाराहे ।।१२-१३।।

सोऽशयिष्टाधिसलिल आण्डकोशो निरात्मकः ।
साग्रं वै वर्षसाहस्रमन्ववात्सीत् तमीश्वरः ।। १५ ।।

निरात्मकः न व्यक्तस्तत्रात्मा ।। १५ ।।

सोऽनुविष्टो भगवता यः शेते सलिलाशये ।
लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ।। १७ ।।

संस्थया स्वया भगवति स्थितसामर्थ्येन ।। १७ ।।

देवस्तानाह संविग्नो मा मा जक्षत रक्षत ।
अहो मे यक्षरक्षांसि प्रजा यूयं भविष्यथ ।। २१ ।।

देवताः प्रभया या या दिव्याः प्रमुखतोऽसृजत् ।
तेऽहार्षुर्देवयन्तोऽपि विसृष्टां तां प्रभामहः ।। २२ ।।

देवोऽदेवान् जघनतः सृजति स्मातिलोलुपान् ।
त एनं लोलुपतया मैथुनायाभिपेदिरे ।। २३ ।।

ततो हसन् स भगवानसुरैर्निरपत्रपैः ।
अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत् ।। २४ ।।

'जानन्नपि समर्थोऽपि क्वचिद्ब्रह्मा हरेः प्रियम् ।
ज्ञात्वा करोति कर्माणि ह्यज्ञवच्चाप्यशक्तवत्' ।। इति च ।।२१-२४।।

सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ।
विमुञ्चात्मतनुं घोरामित्युक्तो विमुमोच ह ।। २८ ।।

'व्यसृजन्मलवद्देहं बाह्यं न तु निजं पुरा ।
ब्रह्मा तच्चाहरादित्वं प्राप देवादिदैवतम्' ।। इति कौर्मे ।। २८ ।।

ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः ।
साध्यान् गणान् पितृगणान् परोक्षेणासृजत् प्रभुः ।। ४२ ।।

'ऊर्जं सारान्नमुद्दिष्टं तद्देवपितृभक्षणम्' । इति ब्राह्मे ।। ४२ ।।

स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः ।
तदा मनून् ससर्जान्ते मनसा लोकभावनान् ।। ४९ ।।

तेभ्यः स व्यसृजद् देहं परः पुरुष आत्मनः ।
तां दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ।। ५० ।।

ये पुरा सृष्टा देवाः ।

'दृष्ट्वा तु पौरुषीं सृष्टिं देवाः सुकृतमूचिरे' । इति च ।। ४९-५० ।।

तपसा विद्यया युक्तो योगेन सुसमाधिना ।
आदावृषीन् हृषीकेशः ससर्जाभिमताः प्रजाः ।। ५२ ।।

'यत्रापि तु हरेर्नाम तदन्यत्र प्रयुज्यते ।
तदाऽऽन्तरहरेस्तत्र गृहीतिर्नान्यथा भवेत् ।।

स्वातन्त्र्यादवरत्वं च परस्यापि प्रयुज्यते ।
स्थितस्यापि यथा राज्ञः स्वानां जयपराजयौ' ।। इति पाद्मे ।।

अतो हृषीकेशो ब्रह्मान्तर्यामी ।। ५२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे एकविंशोऽध्यायः ।।



## द्वाविंशोऽध्यायः

तावत् प्रसन्नो भगवान् पुष्कराक्षः कृते युगे ।
दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद् वपुः ।। ८ ।।

शब्दविषयं ब्रह्म ।। ८ ।।

न तेऽजराक्षभ्रमिरायुरेषां
त्रयोदशारं त्रिशतं षष्टिपर्व ।
षण्णेम्यनन्तच्छिदि यत् त्रिनाभि
करालस्रोतो जगदाच्छिद्य धावत् ।। १८ ।।

अनन्तच्छिदि अनन्तावयवम् । 'तृतीयोऽतिशये' इति हि महा-
व्याकरणे । 'मथनान्मिथिलो जातः' इत्यादिवच्च ।। १८ ।।

नूनं चङ्क्रमणं देव सतां संरक्षणाय ते ।
वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालनी ।। ५० ।।

योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् ।
रूपाणि स्थान आधत्से तस्मै शुक्लात्मने नमः ।। ५१ ।।

'स्वायम्भुवो मनुश्चैव पृथुश्चैवार्जुनावपि ।
ब्रह्मशेषविपा रुद्र इन्द्र ऋष्यादयस्तथा ।
विष्णवावेशयुताः सर्वे न तु विष्णुस्वरूपकाः' ।।
इति तत्त्वनिर्णये ।। ५०,५१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे द्वाविंशोऽध्यायः ।।



## त्रयोविंशोऽध्यायः

कामः स भूयान्नरदेव तेऽस्याः
पुत्र्याः समाम्नायविधौ प्रतीतः ।
क एव ते तनयां नाद्रियेत
स्वयैव कान्त्या क्षिपतीमिव श्रियम् ।। १६ ।।

स्वया कान्त्याऽन्याः क्षिपन्ती श्रीर्यथा तद्वत् स्थिताम् ।। १६ ।।

बर्हिष्मती नाम पुरी सर्वसम्पत्समन्विता ।
न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ।। २९ ।।

कुशकाशास्त एवासंल्लसद्धरितवर्चसः ।
ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे ।। ३० ।।

'ज्ञानानन्दस्वरूपेभ्यो रोमभ्योऽस्य कुशादयः ।
विधुन्वतः प्रयागे तु वराहवपुषोऽभवन् ।
रोमाणि तानि देवस्य रूपाण्यासन्सहस्रशः' ।। इति स्कान्दे ।

त एवासन् तेभ्य एवासन् । 'सप्तसु प्रथमा' इति सूत्रात् ।। २९-३० ।।

अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ।
शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ।। ३५ ।।

'गतसारं यातयामं यामः सार इहोच्यते' इति नारदीये ।। ३५ ।।

शारीरा मानसा दिव्याः पर्यासे ये च मानुषाः ।
भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ।। ३७ ।।

पर्यासे मानुषत्वेनावस्थानेऽपि ।। ३७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे त्रयोविंशोऽध्यायः ।।



## चतुर्विंशोऽध्यायः

द्वास्सु विद्रुमदेहल्या भातं वज्रकपाटिमत् ।
शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिष्ठितम् ।। १८ ।।

देहली द्वारबन्धः ।। १८ ।।

हंसपारावतव्रातैस्तत्र तत्र निकूजितम् ।
कृत्रिमान् मन्यमानैः स्वानधिरुह्याधिरुह्य च ।। २० ।।

कृत्रिमान् शोभार्थं कृतान् ।। २० ।।

अथाऽदर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ।
विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ।। ३० ।।

आदर्शे ददर्श ।। ३० ।।

तस्मिन्नलुप्तमहिमा प्रिययाऽनुषक्तो
विद्याधरीभिरुपचीर्णवपुर्विमाने ।
बभ्राज उत्कचक उद्गुणपानवीच्य-
स्ताराभिरावृत इवोडुपतिर्नभस्स्थः ।। ३८ ।।

उद्गुणपानवीच्यः उत्तमामृतवीचीयुक्तः ।। ३८ ।।

तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता ।
न चाबुद्ध्यत तं कालं पत्याऽऽवीच्येन सङ्गता ।। ४५ ।।

'प्राप्तषोडशवर्षः सन्नावीच्य इति कथ्यते' ।। इत्यभिधानम् ।।४५।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे चतुर्विंशोऽध्यायः ।।



## पञ्चविंशोऽध्यायः

मैत्रेय उवाच–

निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ।
दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ।। १ ।।

'मालिनी शालिनी काल्याचार्या भार्येति चोच्यते' । इति च ।।१।।

तस्यां बहुतिथे काले भगवान् मधुसूदनः ।
कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ।। ६ ।।

'नावतारेष्वपि हरेर्देहः शुक्लादिसम्भवः ।
तथापि शुक्लसंस्थः सन्मातृदेहं प्रविश्य च ।।

विलाप्य शुक्लं तत्रैव केवलज्ञानरूपकः ।
उदेति भगवान्विष्णुः काले लोकं विमोहयन्' ।। इति महावाराहे ।।

अग्निरिव दारुणीति व्यक्तिस्थानमात्रत्वे दृष्टान्तः ।। ६ ।।

भगवन्तं परं ब्रह्म सत्त्वेनांशेन शत्रुहन् ।
तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ।। १० ।।

(महागुणैश्च पूर्णत्वं) 'महागुणाभिपूर्णत्वं सत्वमित्युच्यते बुधैः' ।
इति वामने ।। १० ।।

अयं सिद्धगणाधीशः साङ्ख्याचार्यैः सुसम्मतः ।
लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ।। १९ ।।

'सम्यग्ज्ञानं तु साङ्ख्यं स्यात् तदर्थो योग उच्यते' ।
इति कापिलेये ।। १९ ।।

स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ।
विविक्त उपसङ्गम्य प्रणम्य समभाषत ।। २६ ।।

'युगत्रयावतारेण त्रियुगश्चेति कथ्यते' । इति पाद्मे ।। २६ ।।

तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ।
यानि यानीह रोचन्ते स्वजनानामरूपिणः ।। ३१ ।।

यानि यानि ब्रह्मादिरूपाणि रोचन्ते स्वजनानां तान्येव ते व्यक्त्यर्थमभिरूपाणि ।

'व्यक्तो भवेद्धरिस्तत्र यत्स्थानं रुचितं सताम्' । इति कौर्मे ।। ३१ ।।

परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम् ।
आत्मानुभूत्यानुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये ।।३३।।

'वेदैर्वृतत्वाद्भगवांस्त्रिवृदित्युच्यते बुधैः' । इति च ।। ३३ ।।

श्री भगवानुवाच–

मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके ।
अथाजनि मया तुभ्यं यदवोचममृतं मुने ।। ३५ ।।

सत्यलौकिके यथार्थज्ञानविषये ।

'आभासो ज्ञानमालोको लोको भासश्च कथ्यत' । इत्यभिधानम् ।।३५।।

विश्वमेतद्धि शास्त्रेण विज्ञायात्मानमीश्वरम् ।
मुनिः शान्तमनोवाक्यस्तदा नाऽख्यात्युपप्लवः ।। ४० ।।

विश्वमेतदेतादृशं असारं यतः । अत ईश्वरं विज्ञाय । नाऽख्यात्युपप्लवः दुःखाज्ञानाद्युपद्रवो न ।। ४० ।।

निरहङ्कृतिर्निर्ममश्च निर्द्वन्द्वः समदृक् स्वदृक् ।
प्रत्यग्रः शान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ।। ४५ ।।

'अनन्याधीनशक्तित्वाद्धरिः स्व इति चोच्यते' । इति मात्स्ये ।

प्रत्यग्रः प्रत्यग्रतिः ।। ४५ ।।

आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत् सर्वभूतानि भगवत्यपि चात्मनि ।। ४६ ।।

वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।
परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ।। ४७ ।।

'भूतगर्भश्च भूतस्थः पूर्ण एवं द्विरूपवान् ।
अत आत्मेति तं प्राहुः सदैवाप्तगुणो यतः' ।। इति च ।।४६-४७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे पञ्चविंशोऽध्यायः ।।



## षड्विंशोऽध्यायः

तं त्वा गताऽहं शरणं शरण्यं
स्वभृत्यसंसारतरोः कुठारम् ।
जिज्ञासया प्रकृतेः पूरुषस्य
नमामि सद्धर्मविदां वरिष्ठम् ।। ११ ।।

'नारायणो ब्रह्मवायू वीन्द्रशेषौ हरस्तथा ।
कामः शक्रो गुरुर्दक्षो मन्वाद्या भास्करादयः ।
सर्वजीवाश्च क्रमशः पुरुषाख्याभिशब्दिताः ।।'

'एतत्पत्न्यो बन्धशक्तिः स्त्रियः सर्वास्तथा जडम् ।
क्रमात्प्रकृतिशब्दोक्तास्तज्ज्ञानाद्धिप्रमुच्यते' ।। इति दत्तात्रेययोगे ।।११।।

भगवानुवाच–

योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।
अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ।। १३ ।।

'परमात्मादिकं देहे यदध्यात्मं तदीरितम्' । इति च ।

'सुखं शरीरभोग्यं तु दुःखं सर्वं तथैव च ।
मुक्तौ विलयमायाति नित्यानन्दस्तु भुज्यते' ।। इति च ।। १३ ।।

अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ।
वीतं यदाऽऽत्मनः शुद्धमदुःखमसुखं समम् ।। १६ ।।

तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ।
निरन्तरं स्वयञ्ज्योतिरणिमानमखण्डितम् ।। १७ ।।

ज्ञानवैराग्ययुक्तेन भक्तियोगेन चात्मना ।
परिपश्यत्युदासीनां प्रकृतिं च हतौजसम् ।। १८ ।।

'बाह्ये सुखे त्वनासक्तेरसुखं दुःखवर्जनात् ।
अदुःखं हरिभक्त्यैव नित्यानन्दं यदा मनः ।
तदा तं परमात्मानं पश्यत्यात्मप्रसादतः' ।। इति कापिलेये ।

'अभेदात्स्वावतारेषु निरन्तर उदाहृतः ।
गुणदेहेन्द्रियाभेदात्केवलोऽसदृशत्वतः ।
अखण्डः पूर्णशक्तित्वादहमेकः सदा मतः' इति च ।

'बन्धशक्तिः प्रकृत्याख्या विष्णुशक्त्या वियुज्यते' । इति च ॥१६-१८॥

मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥

'यादृशी मयि भक्तिः स्यात्तादृश्यन्यत्र नैव चेत् ।
अनन्यभक्तिरुद्रेकात्सा ययैव तरेत् सृतिम्' ॥ इति च ॥ २२ ॥

मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ।
तपन्ति विविधांस्तापानैकात्म्यगतचेतसः ॥ २३ ॥

'एकः पूर्णो हरिर्नान्यस्तदन्ये तद्वशा मताः ।
इति ज्ञानं स्थिरं यत्तदैकात्म्यज्ञानमुच्यते' ॥ इति ब्रह्माण्डे ॥२३॥

मैत्रेय उवाच–

विदित्वाऽर्थं कपिलो मातुरित्थं
जातस्नेहो यत्र तन्वाऽभिजातः ।
तत्त्वाऽम्नायं यत् प्रवदन्ति साङ्ख्यं
प्रावोचद् वै भक्तिवितानयोगम् ॥ ३१ ॥

'शुक्लेन जनिरन्येषां हरेः स्वतनुवैव तु ।
नित्योदितज्ञानतनोः कुतः स्याच्छुक्लतो जनिः' ॥ इति गारुडे ॥३१॥

भगवानुवाच–

देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ।। ३२ ।।

'आनुश्रविककर्माऽसौ श्रुत्युक्तं यो न लङ्घयेत्' । इति भविष्यत्पर्वणि ।
'सदा सर्वगुणाढ्यत्वात्सत्वो विष्णुरुदीर्यते' । इति कापिलेये ।।३२।।

अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ।। ३३ ।।

'अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति ।
अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी' ।। इति च ।। ३३ ।।

नैकात्म्यतां मे स्पृहयन्ति केचिन्-
मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य
सम्भाजयन्ते मम पौरुषाणि ।। ३४ ।।

'नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि ।
ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्णते ।
तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यति' ।। इति च ।। ३४ ।।

न कर्हिचिन्मत्पराः शान्तरूपा
नङ्क्ष्यन्ति मे नोऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च
सखा गुरुः सुहृदो दैवमिष्टम् ।। ३८ ।।

आदानादिकर्तृत्वादात्मा ।। ३८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे षड्विंशोऽध्यायः ।।



## सप्तविंशोऽध्यायः

न जातो न म्रियेताऽत्मा स हि देहाद्युपाधिभिः ।
निमित्तैरात्ततद्धर्मा यथा स्वप्ने तदीक्षिता ।। ४ ।।

स परमो न जायते न म्रियत इति हि प्रसिद्धम् । देहाद्युपाधि-भिरात्तधर्मो जीवोऽपि स्वप्नवद्भ्रान्त्या जायते म्रियते च । भ्रान्तित्वाद्देहात्मत्वस्य । किमु सर्वज्ञत्वस्वतन्त्रत्वादिवैलक्षण्ययुक्त ईश्वरः ।

'परस्य जन्ममृत्याद्याः स्युः स्वतन्त्रस्य किं पुनः ।
जीवस्यापि यतो भ्रान्त्या जन्ममृत्यादिसङ्गतिः' ।।

इति महाकौर्मे ।। ४ ।।

स एव प्रकृतिं सूक्ष्मां देवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ।। ५ ।।

**उपगतां** समीपस्थाम् ।। ५ ।।

गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ।। ६ ।।

**मुमुहे** मोहयामास । 'तदेतन्मे विजानीहि' । 'कृत्वा विवाहम्' इत्यादिवत् ।

'यत्र कारयिताऽतीव स्वतन्त्रस्तत्र कर्तृता ।
प्रोच्यते तु यथा ब्रह्म त्वज्ञं संसारभागिति' ।। इति च ।

'लये वाप्यथवा सृष्टौ त्वन्तरालेऽपि न क्वचित् ।
प्रकृत्या रहितं ब्रह्म कदाचिद(वतिष्ठते)पि तिष्ठति' ।।
इति कापिलेये ।। ६ ।।

एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ।। ७ ।।

एवं पराभिध्यानेन परमात्मेच्छया । प्रकृतेः कर्तृत्वं जीव आत्मनि मन्यते ।। ७ ।।

तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ।
भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ।। ८ ।।

'विष्णोः सुराणां गुरूणां नित्या जीवस्य तन्त्रता ।
यत्तु तस्यान्यतन्त्रत्वं तज्ज्ञानाद्विनिवर्तते' ।। इति च ।

अकर्तुरीशस्य सकाशात् ।

'अक्लिष्टत्वादकर्तासावकार्यत्वादथापि वा' । इति च ।

'एष कर्ता न क्रियते कारणं च जगत्प्रभुः' । इति भारते ।। ८ ।।

कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषः प्रकृतेः परः ।। ९ ।।

'ब्रह्मादिभिः सर्गकरी श्रीर्विष्णुबलसंश्रयात् ।
सुखदुःखप्रदो विष्णुः स्वयमेव सनातनः ।।

कर्तृत्वं सुखदुःखानामन्येषां च तदाज्ञया ।
भोक्तृत्वं सुखदुःखानां करोत्येको हरिः स्वयम् ।
भोक्तृत्वमात्रहेतुत्वं जीवे नान्यत्र कुत्रचित्' ।। इति भविष्यत्पर्वणि ।।

'प्रकृतिं पुरुषं चैव विध्यनादी' इति च ।। ९ ।।

भगवानुवाच–

यत् तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ।। ११ ।।

'व्यक्ताव्यक्तात्मकं यत्तद्विद्यात्सदसदात्मकम् ।
असर्गा केवलाव्यक्ता सिसृक्षुरुभयात्मिका ।।

व्यक्तैव कार्यरूपा तु प्रकृतिस्त्रिविधा मता ।
कार्यतः सा प्रधानत्वात्प्रधानमिति कीर्त्यते ।
अविशेषा ह्यकार्यत्वात्सा च श्रीर्विष्णुसंश्रया' ।। इति हरिवंशेषु ।।

'विशेषः कार्यमुद्दिष्टं विशेषाद्दृश्यते यतः' इति पाद्मे ।। ११ ।।

मनो बुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः ।
चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ।। १५ ।।

'बुद्धिरध्यवसानाय संशयं कुरुते मनः ।
अभिमानो ह्यहङ्कारश्चित्तं स्मरणकारणम्' ।। इति स्कान्दे ।। १५ ।।

एतावानेव संख्यातो ब्रह्मणः सगुणस्य हि ।
सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ।। १६ ।।

'हरिस्तु निर्गुणं ब्रह्म श्रीर्ब्रह्म सगुणं स्मृता ।
तदङ्गजानि तत्त्वानि तमात्तद्रूपमुच्यते' ।। इति हरिवंशेषु ।।१६।।

प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ।
अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ।। १७ ।।

'पुरुषो हृदिस्थः परमः कालः सर्वगतो हरिः ।
अथवा रुद्रदेहस्थो हरिः काल इतीरितः' ।। इति ब्राह्मे ।।

पौरुषं प्रभावम् । पुरुषस्य प्रकर्षेण भावं व्याप्तं रूपम् । एके सम्यग्ज्ञानिनः । अप्राकृताः ।। १७ ।।

दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ।
आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ।। २० ।।

'प्रकृतेः क्षोभकं रूपं दैवं नारायणात्मकम् ।
प्रकृतौ महतः स्रष्टा परमः पुरुषो मतः ।।
तदेव वासुदेवाख्यं महत्तत्त्वनियामकम् ।
सङ्कर्षणाख्यस्तु हरिः सूक्ष्माहङ्कारयामकः ।।
स्थूलाहङ्कारनियमी विष्णुः प्रद्युम्ननामकः ।
अनिरुद्धो मनस्तत्त्वनियन्ता भगवान् हरिः ।।
महत्तत्त्वादिजीवास्तु ब्रह्मशेषाङ्गजास्तथा ।
सूक्ष्मस्थूलविभेदेन कामजश्चानिरुद्धकः' ।। इति कापिलेये ।। २० ।।

विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः ।
स्वतेजसाऽपिबत् तीव्रमात्मप्रस्वापनं तमः ।। २१ ।।

'अङ्के रमयते यस्मात्केशवो जगदङ्कुरः ।
महान्तं योऽसृजज्जीवमोहकं च तमोऽग्रसत्' ।। इति च ।। २१ ।।

यत् तत् सत्वगुणं स्वच्छं शान्तं भगवतः पदम् ।
यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ।। २२ ।।

यद्वासुदेवाख्यं भगवद्रूपं ततो महदात्मकं चित्तं जायते ।

'सत्वशब्देन चोच्यन्ते पूर्णानन्दादयो गुणाः' ।। इति च ।

'महत्तत्त्वगतो योऽसौ वासुदेवाभिधो हरिः ।
स चित्तजनकः प्रोक्तः प्राणिनां च पृथक्पृथक्' ।। इति च ।।२२।।

स्वच्छत्वमविकारित्वं शान्तत्त्वमिति चेतसः ।
वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ।। २३ ।।

चित्तस्य स्वच्छत्वादयः पृथग्गुणा उच्यन्ते स्वच्छत्वमित्यादि ।

'स्तिमितोदकचित्तादेरविकारोऽल्पवत्क्रिया' । इति तत्त्वविवेके ।

'वृत्तिः स्वभावो वृत्तं च स्थितिरित्यभिधीयते' । इति शब्दनिर्णये ।

''वृत्तिभिर्लक्षणं प्रोक्तम्'' इति स्वाभाविकं लक्षणमित्यर्थः ।। २३ ।।

महत्तत्त्वाद् विकुर्वाणाद् भगवद्वीर्यसम्भवात् ।
क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत ।। २४ ।।

'ज्ञानप्रधानस्तु महानहङ्कारः क्रियाधिकः ।
इतरापेक्षया सोऽपि ज्ञानाधिक इतीरितः' ।। इति च ।। २४ ।।

वैकारिकोऽधिदैवं तु बुद्धिः प्राणश्च तैजसः ।
तामसस्त्वर्थमात्रं च गुणव्यतिकरस्त्रिवृत् ।। २६ ।।

'देवताधिकृतं यत्तदधिदैवमिति स्मृतम्' । इति च ।

वैकारिकोऽधिदैवमित्यादि पञ्चम्यर्थे ।

'सप्तसु प्रथमा' तत्र स्वातन्त्र्यं यद्विवक्षितम् । इति शब्दनिर्णये ।।२६।।

सहस्रशिरसं साक्षाद् यमनन्तं प्रचक्षते ।
संकर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् ।। २७ ।।

कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ।
शान्तघोरविमूढत्वमिति वा स्यादहंकृतेः ।। २८ ।।

'मनोरूपेण कर्तृत्वं देहरूपेण कार्यता ।
इन्द्रियात्मतया चैव करणत्वमहङ्कृतेः ।।

यतो मनस्यहंभावस्तस्मात्कर्तृ मनः स्मृतम् ।
स्वभावकर्तुर्जीवस्य त्वासन्नोपाधि तद्यतः ।।

कर्मज्ञाने करणता यतः करणमिन्द्रियम् ।
कार्यं देहः समुद्दिष्ट उत्पाद्यत्वात्पुनःपुनः' ।। इति तत्त्वविवेके ।।

'शान्तरूपो देवपिता घोरः करणसृङ्गतः ।
तावज्ज्ञानस्याप्रकाशान्मूढो भूतपिता स्मृतः ।
त्रिरूपोऽयमहङ्कारः शेष इत्येव तं विदुः' ।।
इति तत्त्वनिर्णये ।। २७-२८ ।।

तैजसात् तु विकुर्वाणाद् बुद्धितत्त्वमभूत् सति ।
द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहात् ।। ३१ ।।

संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ।। ३२ ।।

द्रव्यस्फुरणे यद्विशेषज्ञानम् ।।

'सामान्यं मनसा जातं (ज्ञानं) विशेषाद्बुद्धिजं भवेत्' ।।

'अचलः संशयो बुद्धेश्चलो मानस उच्यते ।
चञ्चला तु स्मृतिर्बुद्धेश्चित्तजैव स्थिरा स्मृतिः' ।। इति च ।।

'येन यज्ज्ञायते वस्तु तत्तल्लक्षणमुच्यते । तत्स्वरूपं पृथकूचेति द्विविधं कवयो विदुः' ।। इति कापिलेये ।। ३१,३२ ।।

तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः ।
प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ।। ३३ ।।

'प्रधानवायुः सूत्रात्मा महता सह जायते ।
तैजसश्च खजः स्पर्श इत्याद्यास्तत्सुताः स्मृताः ।
तदाविष्टा अन्यजीवास्तदाधाराश्च तद्बलाः' । इति च ।। ३३ ।।

तामसाच्च विकुर्वाणाद् भगवद्वीर्यचोदितात् ।
शब्दमात्रमभूत् तस्मान्नभः श्रोत्रं तु शब्दगम् ।। ३४ ।।

अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च ।
तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ।। ३५ ।।

**अर्थाश्रयत्वम्** अर्थविषयत्वम् ।

'शब्देनैव यतो ज्ञेयो हरिर्लिङ्गं तु तस्य तत् ।
स्पर्शाद्यभावात्तन्मात्रा नभसश्चेति कीर्त्यते ।।

स्पर्शादयश्च तन्मात्रा इतरे पूर्वसंस्थितेः ।
तिष्ठन्त्येको गुणो भूते प्रत्येकं पञ्चसु स्थितः ।।

शब्दो वर्णात्मको नित्यो ध्वनिराकाशसम्भवः ।
आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते ।।
स एव व्यज्यमानस्तु भवेत्कर्णैकगोचरः' ।। इति च ।।३४,३५।।

नभसः शब्दतन्मात्रात् कालगत्या विकुर्वतः ।
स्पर्शोऽभवत् ततो वायुस्त्वक् स्पर्शस्य च सङ्ग्रहः ।। ३७ ।।

नभसः शब्दतन्मात्राच्छब्दतन्मात्रगुणात् ।

'स्पर्शादयोऽपि वाय्वादेः सूक्ष्मावस्था प्रकीर्तिता' इति च ।

'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः ।
भूतेभ्यश्चोपचीयन्ते पुनर्ब्रह्मशरीरतः' ।। इति च ।। ३७ ।।

चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ।
सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ।। ३९ ।।

'प्राप्नोति वायुः सर्वं तु स्वत एव हरेस्तथा ।
अतः प्राप्तिरिति प्राहुर्वायुं भूतपतिं प्रभुम् ।
प्रधानवायुरन्येषु नित्याविष्टो यतस्ततः ।
तद्गुणास्तेषु चोच्यन्ते नीचता नास्य तत्कृता' ।। इति ब्रह्मवैवर्ते ।

'स्वरूपमपि कर्मेति विषयत्वादुदीर्यते' इति शब्दनिर्णये ।। ३९ ।।

द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ।
तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ।। ४१ ।।

व्यक्तिसंस्थात्वं व्यक्तत्वेन स्थितिः । गुणता प्रकाशत्वम् ।

'आलोको गुण इत्येव प्रकाशश्चेति कथ्यते' । इत्यभिधानम् ।

'तेजस्त्वमथ चोग्रत्वं क्रौर्यमित्यपि चोच्यते' । इत्यभिधानम् ।।४१।।

क्लेदनं पिण्डनं तृप्तिः प्राणनाप्ययनोन्दनम् ।
तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ।। ४५ ।।

'उन्दनं विन्दुभावः स्यात्स्यन्दनं स्रवणं स्मृतम्' । इत्यभिधानम् ।

पृथिव्यग्र्यपेक्षया भूयस्त्वं देहे ।। ४५ ।।

भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ।
सर्वसत्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ।। ४८ ।।

भावनमुत्पादकत्वम् ।

'ब्रह्मस्थानं तु पृथिवी शरीरे ब्रह्मदर्शनात्' । इति कापिलेये ।

सद्विशेषणं विशेषेण व्यक्तत्वम् ।

'असदव्यक्तनाम स्याद्व्यक्तं सदिति चोच्यते' । इति ब्राह्मे ।

**सर्वसत्वगुणोद्भेदः** शरीरे हि सर्वप्राणिनां गुणा व्यज्यन्ते संसारावस्थायाम् ।

'शरीरं पार्थिवं ज्ञेयमिन्द्रियाण्यौदकानि तु ।
तैजसः कोष्ठगो वह्निश्छिद्रमाकाशसम्भवम् ।
प्राणा वायुमयाः सर्वे प्रत्येकं प्रश्नधा पुनः' ।। इति कापिलेये ।।४८।।

ततस्तेनानुविद्धेभ्यस्तत्त्वेभ्योऽण्डमचेतनम् ।
उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट् ।। ५४ ।।

'अचेतनाद्यतस्त्वण्डाद् ब्रह्मा समजनि स्फुटम् ।
अतो ब्रह्माण्डमित्याहुर्विराड् ब्रह्मा प्रकाशनात्' ।। इति च ।।५४।।

हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ।
पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ।। ६१ ।।

'यज्ञनामा तु देवोऽन्यो विज्ञेयः पाददेवता ।
तदाविष्टो हरिर्नित्यं तमाहुः पाददैवतम् ।
तस्येन्द्रियाभिमानित्वं कुतः पूर्णामलात्मनः' ।। इति च ।। ६१ ।।

अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ।
मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः ।
अहङ्कारस्ततो रुद्रश्चित्तं चैत्त्यस्ततोऽभवत् ।। ६४ ।।

'चैत्योऽपि भगवान्विष्णुरन्तर्यामी चतुर्मुखात् ।
स्वेच्छया व्यक्तिमगमत्ततोऽसौ ब्रह्मजः स्मृतः' ।। इति च ।।६४।।

विष्णुर्गत्यैव चरणौ नोदतिष्ठत् त(दा)तो विराट् ।
नाडीर्नद्यो लोहितेन नोदतिष्ठत् ततो विराट् ।। ७० ।।

'यज्ञान्तस्थः स्वयं पादौ विशन्नोत्थापयद्धरिः ।
शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञप्त्यै जनार्दनः ।
तत्स्थ उत्थापयामास ब्रह्मदेहं विशन्प्रभुः' ।। इति च ।। ७० ।।

**बुद्ध्या ब्रह्माऽपि हृदयं नोदतिष्ठत् ततो विराट् ।**
**रुद्रोऽभिमत्या हृदयं नोदतिष्ठत् ततो विराट् ।। ७२ ।।**

**ब्रह्मा** बृहस्पतिः ।

'यस्मिन्ब्रह्मा राजनि पूर्व एति' । इति श्रुतिः ।

'बृहस्पतिः पुरोधाश्च ब्रह्मा च ब्रह्मणस्पतिः' । इत्यभिधानम् ।।७२।।

**चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद् यदा ।**
**विराट् तदैव पुरुषः सलिलादुदतिष्ठत ।। ७३ ।।**

'अंशेन सुप्तो ब्रह्माऽपि अंशेन निरगात्तथा ।
स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः ।।

तमुत्थापयितुं देवास्तानृते त्रीन्महाबलान् ।
नाशक्नुवन् एकसंस्थास्ततस्ते त्वविशंस्त्रयः ।।

उदतिष्ठद्ब्रह्मदेहस्तदा तेषां प्रभावतः ।
विशेषेण हरेरेव प्रभावेन श्रियः पतेः ।।

चित्ताभिमानी ब्रह्मैव क्षेत्रज्ञस्तद्गतो हरिः ।
प्राणो वायुरिति प्रोक्तस्तयोरीशो हरिः स्वयम्' ।। इति च ।। ७३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे सप्तविंशोऽध्यायः ।।

## अष्टाविंशोऽध्यायः

प्रबुद्धय स्वप्नसुप्तिभ्यां संस्मरन्नात्मवैशसम् ।
वैतथ्यं व्यभिचारं च नासौ ध्यायेद् यतो भयम् ।। ९ ।।

'अज्ञानं सुप्तिशब्दोक्तं स्वप्नश्चैव विपर्ययः' ।। इति भारते ।। ९ ।।

निवृत्तबुद्धयवस्थानो दूरीभूतान्यदर्शनः ।
उपलभ्यात्मनात्मानं चक्षुषेवार्कमेकदृक् ।। ११ ।।

बुद्धेरवस्थानं निद्रादि ।। ११ ।।

मुक्तलिङ्गः सदाभासमसति प्रतिपद्यते ।
सतो बन्धुं समं चक्षुः सर्वानुस्यूतमद्वयम् ।। १२ ।।

**असति** प्रलये ।। १२ ।।

एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोगुणैः ।
स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् ।। १४ ।।

'शेषस्य प्रतिविम्बास्तु देवाः शेषस्तु ब्रह्मणः ।
स परब्रह्मणश्चैव ते स्वबिम्बप्रदर्शकाः ।
ततः स्वविम्बद्वारेण परमात्मप्रदर्शनम्' ।। इति ब्रह्मतर्के ।। १४ ।।

भूतसूक्ष्मेन्द्रियमनोबुद्धयादिष्विह निद्रया ।
लीनेषु सत्सु यस्तत्र विनिद्रो निरहङ्क्रियः ।। १५ ।।

**यो** विनिद्रः स सत्यदृक् ।। १५ ।।

मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा ।
नष्टेऽहङ्करणे द्रष्टा नष्टवित्त इवातुरः ।। १६ ।।

यः अनष्टो नष्टवन्नाज्ञासिषमिति मन्यमानः स आतुरो द्रष्टा जीवः ।।१६।।

एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते ।
साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ।। १७ ।।

साहङ्कारं द्रव्यं जीवः तस्यावस्थानमनुग्राहकश्च परमात्मा ।

'नित्यदृक्परमात्माऽसौ मृतवद्यो न किञ्चन ।
जानाति जीवः स ज्ञेयः परमात्मा तदाश्रयः'।। इति हरिवंशेषु ।।१७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे अष्टाविंशोऽध्यायः ।।



## एकोनत्रिंशोऽध्यायः

भगवानुवाच–

योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ।
मनो येनैव विधिना प्रपन्नं याति सत्पथम् ।। १ ।।

'सबीजो वैष्णवो योगो निर्बीजस्त्वन्यदैवतः ।
बीजं विष्णुर्हि जगतः शाखाद्याश्चान्यदेवताः' ।। इति कौर्मे ।।१।।

स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ।
वैकुण्ठलीलाभिध्यानं समाधानं तथाऽऽत्मनः ।। ६ ।।

'समाधिप्रयत्नेन मनसः संस्थितिर्भवेत्' । इति च ।। ६ ।।

तस्मिन् लब्धपदं चित्तं सर्वावयवसंस्थितम् ।
विलोक्यैकत्र संयुज्यादङ्गे भगवतो मुनिः ।। २० ।।

सर्वस्मरणाशक्तावेकाङ्गे ।

'यावन्न च्यवते मन' इत्युक्तत्वात् ।

'सर्वं स्मर्तुमशक्तः सन्नेकाङ्गं चिन्तयेद्बुधः' । इति च ।। २० ।।

कौमोदकीं भगवतो दयितां स्मरेत
दिग्धामरातिभटशोणितकर्दमेन ।
मालां मधुव्रतवरूथगिरोपघुष्टां
चैत्त्यस्य तत्त्वममलं मणिमस्य कण्ठे ।। २७ ।।

'ब्रह्मा चित्ताभिमानेन चैत्यस्तन्नियमाद्धरिः ।
स च ब्रह्मा हरेः कण्ठे कौस्तुभत्वेन भासते' ।।
इति भागवततन्त्रे ।। २७ ।।

यच्छ्रीनिकेतमलिभिः परिसेव्यमानं
भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् ।
मीनद्वयश्रियमधिक्षिपदब्जनेत्रं
ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु ।। २९ ।।

'साक्षाच्छ्रीस्तु हरे रूपमिन्दिरा तु तदाश्रयात्' ।। इति च ।। २९ ।।

ध्यानायनं रहसि तद् बहुलाधरोष्ठ-
भासाऽरुणायिततनुद्विजकुन्दपङ्क्ति ।
ध्यायेत् स्वहृत्कुहरकेऽवसितस्य विष्णो-
र्भक्त्याऽऽर्द्रयाऽर्पितमना न पृथग् दिदृक्षेत् ।। ३२ ।।

'न पृथग्दिदृक्षेत्' । तमेव दिदृक्षेदित्यर्थः ।। ३२ ।।

एवं हरौ भगवति प्रतिलब्धभावो
भक्त्या द्रवद्धृदय उत्पुलकप्रमोदः ।
औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमान-
स्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ।। ३३ ।।

चित्तबडिशवियोगो ध्यानानन्तरसमाधिः ।। ३३ ।।

मुक्ताश्रयं यर्हि निर्विषयं स्वचित्तं
निर्वाणमृच्छति मनः सहसा यथार्चिः ।
आत्मानमत्र पुरुषोऽव्यवधानमेक-
मन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ।। ३४ ।।

**मुक्ताश्रयं** विष्णुविषयम् । **स्वचित्तं** जीवचैतन्ये ततम् । **निर्वाणमृच्छति** शरीराभिमानं जहाति । स्वचिदभिमानेन ।। ३४ ।।

सोऽप्येतया चरमया मनसो निवृत्त्या
तस्मिन् महिम्न्यवसितः सुखदुःखबाह्ये ।
हेतुत्वमप्यसति कर्तरि दुःखयोर्न
स्वात्मन् विधत्त उपलब्धपरात्मकाष्ठः ।। ३५ ।।

'असत्कर्ता तु जीवः स्यात्सत्कर्ता परमेश्वरः' । इति शब्दनिर्णये ।

'दुर्दुःखमिति विज्ञेयं खं सुखं च तयोर्यतः ।
प्रदाता परमो विष्णुस्तस्माद्दुःखादनामवान्' ।। इति हरिवंशेषु ।।३५।।

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
ईक्षेतानन्यभावेन भूतेषु च तदात्मताम् ।। ४१ ।।

**अनन्यभावेन** तद्रूपाणामभेदेन । **तदात्मतां** तस्याऽदानादिकर्तृत्वं च भूतविषये ।। ४१ ।।

तस्मादिमां स्वां प्रकृतिं देवीं सदसदात्मिकाम् ।
दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ।। ४३ ।।

प्रकृतिं पराभाव्य तदुत्तमत्वेनैव सदावतिष्ठते परः ।

'सर्वभूतस्थमीशेशं जेतारं प्रकृतेरपि ।
अविशेषं सदैवैकं चिन्तयन्विप्रमुच्यते' ।। इति च ।। ४३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे एकोनत्रिंशोऽध्यायः ।।



## त्रिंशोऽध्यायः

देवहूतिरुवाच–

लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ।
स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम् ।। १ ।।

यथा साङ्ख्येषु कथितं यन्मूलं तत् प्रचक्षते ।
भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ।। २ ।।

यथा साङ्ख्येषूक्तं तथा कथितम् । यत्साङ्ख्यमूलं तल्लक्षणं प्रचक्षते ।।१,२।।

विषयानभिसन्धाय यश ऐश्वर्यमेव च ।
अर्चादावर्चयेद् यो मां पृथग्भावः स राजसः ।। ९ ।।

तद्रूपाणां पृथग्भावः ।। ९ ।।

कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद् यष्टव्यमिति वाऽपृथग्भावः स सात्त्विकः ।। १० ।।

अपृथग्भावः स सात्विकः ।। १० ।।

अर्चादावर्चयेत् तावदीश्वरं मां स्वकर्मकृत् ।
यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ।। २५ ।।

'अज्ञोऽर्चयेदेवार्चायामन्यथा दोषवान्भवेत् ।
ज्ञस्त्वर्चयन्सुगुणवानन्यथा दोषवान्न तु' ।। इति कापिलेये ।।२५।।

आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।
तस्य भिन्नदृशो मृत्युर्विधत्ते भयमुल्बणम् ।। २६ ।।

अन्तरोदरं भिन्नं ब्रह्म । आत्मस्थमन्यस्थं च ब्रह्म यो भेदेन पश्यति । 'उदरं ब्रह्म' । इति श्रुतेः ।। २६ ।।

जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ।
ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥ २८ ॥

अत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः ।
तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥

रूपभेदविदस्तत्र ततश्चोभयतोदतः ।
तेषां बहुपदः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥

ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ।
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥

अर्थज्ञात् संशयच्छेत्ता ततः श्रेयान् स्वधर्मकृत् ।
मुक्तसङ्गस्ततो भूयान् न दोग्धा धर्ममात्मनः ॥ ३२ ॥

तस्मान्मय्यर्पिताशेषक्रियार्थात्मरतिर्नरः ।
मय्यर्पितात्मनः पुंसो मयि सन्न्यस्तकर्मणः ।
न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥

प्राणभृतः चलनयुक्ताः ।

'पशुवृक्षादिभेदेन जीवा एव स्वतः स्थिताः ।
संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता ॥
तत्र स्थावरमुक्तेभ्यो वरा जङ्गममुक्तकाः ।
तेभ्यो मानुषमुक्ताश्च विप्रमुक्तास्ततोऽधिकाः ॥
तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवेदिनः ।
अर्थज्ञा ऋषयस्तेभ्योऽतो देवाः संशयच्छिदः ॥

पूर्णधर्मा ततस्त्विन्द्रो निःसङ्गो गरुडस्ततः ।
भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्ततः ।।
मुक्तौ वा संसृतौ वापि सम्यगेषु हि ते गुणाः ।।
इति कापिलेये ।। २८-३३ ।।

मनसैतानि भूतानि प्रणमेद् बहुमानयन् ।
ईश्वरो जीवकलया प्रविष्टो भगवानिति ।। ३४ ।।

जीवकलया सह भूतानि बहुमानयंस्तदालयत्वेनेश्वरं प्रणमेत् ।। ३४ ।।

भक्तियोगश्च योगश्च मया मानव्युदीरितः ।
ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ।। ३५ ।।

एकतरभावेऽन्यतरस्य नियतत्वादेकतरेणैव ।। ३५ ।।

यत् तद् भगवतो रूपं ब्रह्मणः परमात्मनः ।
परं प्रधानात् पुरुषाद् दैवं कर्मविचेष्टितम् ।। ३६ ।।

सर्वकर्माणि यस्य विचेष्टानिमित्तानि तत्कर्मविचेष्टितम् ।। ३६ ।।

रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ।
भूतानां महदादीनां यतो भिन्नदृशां भयम् ।। ३७ ।।

**भिन्नदृशां** ईश्वरापेक्षयाऽल्पदृशाम् ।

'भिन्नमल्पं विजानीयादभिन्नं पूर्णमिष्यते' । इति शब्दनिर्णये ।।३७।।

न चास्य कश्चिद् दयितो न द्वेष्यो न च बान्धवः ।
आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ।। ३९ ।।

'यथायोग्यातिरेकेण न द्वेष्यश्च प्रियो हरेः' । इति कापिलेये ।।३९।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे त्रिंशोऽध्यायः ।।



## एकत्रिंशोऽध्यायः

एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा ।
नाद्रियन्ते यथापूर्वं कीनाश इव गोजरम् ।। १३ ।।

**कीनाशः** कर्षको मतः ।। १३ ।।

वायुनोत्क्रमतोत्तारकफसंरुद्धनासिकः ।
कासश्वासकृतायासः कण्ठो घुरुघुरायते ।। १६ ।।

उत्तारमुद्गतिं विन्द्यात् ।। १६ ।।

योजनानां सहस्राणि नवतिर्नव चाध्वनः ।
त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाम् ।। २४ ।।

'त्रिभिर्मुहूर्तैर्द्वाभ्यां वा दिनैर्दशभिरेव वा ।
पक्षान्मासेन वा याति यमलोकमितो गतः' ।। इति नारदीये ।।२४।।

अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते ।
या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ।। २९ ।।

अत्रैवेत्येवशब्दः सामीप्यार्थे ।

'सामीप्ये च प्रधाने च एवशब्दोऽवधारणे' । इति शब्दनिर्णये ।

अत्राप्यस्तीत्यर्थः ।। २९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे एकत्रिंशोऽध्यायः ।।



## द्वात्रिंशोऽध्यायः

भगवानुवाच–

कलि(ल)लं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ।
दशाहेन तु कर्कन्धुः पेश्यण्डं वा ततः परम् ।। २ ।।

'नानाविधा गर्भवृद्धिः कर्मभेदाद्भविष्यति ।
अतो नानाविधं ग्रन्थे गर्भसंस्थानमुच्यते' ।। इति षाड्गुण्ये ।।२।।

नाथमानो ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः ।
स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ।। १२ ।।

'वध्रयस्त्विन्द्रियाण्याहुर्हृषीकाणीति चोच्यते' इति शब्दनिर्णये ।।१२।।

ज्ञानं यदेतददधात् कतमः स देव-
स्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ।
तं जीवकर्मपदवीमनुवर्तमाना-
स्तापत्रयोपशमनाय वयं भजेम ।। १७ ।।

कतमः सुखतमः ।। १७ ।।

पश्यत्ययं धिषणया ननु सप्तवध्रिः
शारीरभेदमशरीरवदस्य देहे ।
यद्दत्तया स तमहं पुरुषं पुराणं
पश्ये बहिर्हृदि च चैत्त्यमिव प्रतीतम् ।। २० ।।

अशरीरवत् परमात्मवत् । परमात्मन एव देहोऽपि तद्वशत्वात् ।

'तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति ।
उत्तमानामृषीणां वाऽप्यन्येषां बहुजन्मगम्' ।। इति स्कान्दे ।।२०।।

तेष्वशान्तेषु मूढेषु खण्डितात्मावसायिषु ।
सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ।। ३६ ।।

**खण्डितात्मावसायिषु** जीवमात्रज्ञानिषु ।। ३६ ।।

तत्सृष्टिसृष्टसृष्टेषु कोन्वखण्डितधीः पुमान् ।
ऋषिं नारायणमृते योषिन्मय्येह मायया ।। ३९ ।।

'मयः प्रधान उद्दिष्टो माया तद्वश उच्यते' । इति षाड्गुण्ये ।। ३९ ।।

बलं मे पश्य मायायाः
स्त्रीमय्या जयिनो दिशाम् ।
या करोति (पदाक्रान्तान्) निजायत्तान्
भ्रूविजृम्भेण केवलम् ।। ४० ।।

सङ्गं न कुर्यात् प्रमदासु जातु
योगस्य पारं परमारुरुक्षुः ।

मत्सेवया प्रतिलब्धात्मलाभो
वदन्ति यां निरयद्वारमस्य ।। ४१ ।।

योपयाति शनैर्माया योषिद् देवविनिर्मिता ।
तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ।। ४२ ।।

'सत्पुंसु च तथा स्त्रीषु न सङ्गो दोषमावहेत् ।
यथायोग्यं गुणायैव दोषकृद्दुष्टजन्तुषु' ।। इति वाराहे ।।४०-४२।।

देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ।
भुञ्जान एव कर्माणि करोत्यविरतं पुमान् ।। ४५ ।।

**जीवभूतेन** जीवकर्मभूतेन ।। ४५ ।।

यथाक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ।
तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वं योग्यताऽनयोः ।। ४८ ।।

चक्षुःसकाशाद् द्रष्टुर्द्रष्टृत्वम् अक्ष्णोर्योग्यता ।। ४८ ।।

आत्मनः केवलं ज्ञानमर्थो देहाद्यसङ्गिनः ।
सुखदुःखादयो भावा न देहस्य न चात्मनः ।। ५० ।।

केवलं ज्ञानं पुरुषार्थः । देहादिष्वसङ्गिनो जीवस्य तन्निमित्तसुखदुःखादयो न सन्ति । किमुत देहस्य अचेतनत्वात् ।। ५० ।।

।। इति श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे द्वात्रिंशोऽध्यायः ।।

*** *** ***

## त्रयस्त्रिंशोऽध्यायः

तच्छ्रद्धयाक्राऽऽन्तमतिः पितृदेवव्रतः पुमान् ।
गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ।। ३ ।।

'ईषद्भक्तो भगवति सुकर्मा स्वर्गमेष्यति ।
अभक्तो निरयं याति सुकर्माऽपि न संशयः' ।। इति वामने ।।३।।

आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ।
योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ।। ११ ।।

भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा ।
कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ।। १२ ।।

स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना ।
जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ।। १३ ।।

'अभिमानेन पूर्णज्ञानेन । सङ्गत्य लये परमेश्वरं प्रविश्य । 'यथापूर्वं प्रजायते' उच्चनीचादिभावेन जायते । 'अगुणव्यतिकरे' बहिः श्वेतद्वीपे निर्गच्छति ।

'गुणव्यतिकराभावेऽप्युच्चनीचादिपूर्ववत् ।
विष्णोश्चैव विमुक्तानां न कदाचन गच्छति' ।।
इति गारुडे ।। ११-१३ ।।

ऐश्वर्यं पारमेष्ठ्यं यत् तेऽपि धर्मविनिर्मितम् ।
निषेव्य पुनरायान्ति गुणव्यतिकरेऽसति ।। १४ ।।

गुणव्यतिकरे असति । प्रलये प्राप्ते पुनः परमेश्वरमायान्ति ।

'ब्रह्मा देवैः परिवृतः प्रलये परमेश्वरम् ।
प्रविश्य सर्गे तु पुनः श्वेतद्वीपे प्रमोदते ।।

ज्ञानधर्मफलांस्तत्र भोगान्भुक्त्वा लये पुनः ।
नारायणं समाविश्य ज्ञानव्यक्तं निजं सुखम् ।।

भुञ्जते त्वेवमेवैषां काले संसर्गनिर्गमौ ।
नित्यौ नित्यसुखं चैव सृष्टौ भोगास्तथोत्तमाः ।।

यथापूर्वं हरेः सर्वगुणैर्नीचोच्चता तथा ।
ब्रह्मणश्च तथान्येषामन्येषां च यथापदम्' ।। इति स्कान्दे ।।१४।।

ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः ।
कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ।। १६ ।।

रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः ।
पितॄन् यजन्त्यनुदिनं गृहेष्वभिरताशयाः ।। १७ ।।

त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ।
कथायां कथनीयोरुविक्रमस्य मधुद्विषः ।। १८ ।।

नूनं दैवेन विहता ये त्वच्युतकथासुधाम् ।
हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः ।। १९ ।।

दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजन्ति ते ।
प्रजायां तु प्रजायन्ते श्मशानान्तक्रियाकृतः ।। २० ।।

ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति ।
पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः ।। २१ ।।

'अत्यल्पभक्ता विष्णौ च सदा श्राद्धादिकारिणः ।
पितृलोकं समाविश्य स्वसन्ताने पुनःपुनः ।।
क्षिप्रमेव प्रजायन्ते ये तु भक्तिविवर्जिताः ।
अन्यसामान्यवेत्तारस्तदन्योत्तमवेदिनः ।।
तद्भक्तनिन्दकाश्चैव यान्त्येव निरयं ध्रुवम् ।
अपि धर्मैकनियमा नात्र कार्या विचारणा' ।। इति च ।।

'मुक्तियोग्यास्तु देवाद्या मानुषा यज्ञभागिनः ।
मनुष्यभेदाः श्राद्धादिकृतो विद्वेषिणोऽसुराः' इति च ।। १६-२१ ।।

ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् ।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणाम् ।। २८ ।।

'मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकम् ।
तन्मन्यन्ते भौतिकं तु ये गच्छन्त्यधरं तमः' ।। इति ब्राह्मे ।।२८।।

यथा महानहङ्कारस्त्रिवृत् पञ्चविधः स्वराट् ।
एकादशविधस्तस्य वपुरण्डं जगद् यतः ।। २९ ।।

'एकादशेन्द्रियात्मा च पञ्चभूतात्मकस्तथा ।
सर्वाभिमानी भगवान्स्वराडिन्द्रः पुरन्दरः ।।
इदमण्डं जगत्सर्वं शक्रदेहं विदुर्बुधाः ।
तत्पतिस्त्रिगुणो रुद्रस्तस्य ब्रह्मा ततो हरिः' ।। इति वामने ।।

यथैतान्पश्यन्ति तद्वदेव ज्ञानात्मकं मत्स्यादिरूपं (गुणमयं) पश्यन्त्यज्ञाः ।। २९ ।।

ज्ञानं योगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ।
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ।। ३२ ।।

'ज्ञानभक्ती विना नैव मुक्तिः कस्यापि विद्यते ।
तयोरेकतरेणापि विष्णुगेनोभयं विना ।।
एवमप्येतयोरेकभावेऽन्यनियतेर्ध्रुवम् ।
एकेनापि भवेन्मुक्तिस्तदर्थं त्वन्यसाधनम्' ।। इति हरिवंशेषु ।।३२।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ।।



## चतुस्त्रिंशोऽध्यायः

देवहूतिरुवाच–

अथाप्ययान्ते सलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ।
गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ।। २ ।।

भूतेन्द्रियार्थात्ममयं तेभ्यः प्रधानम् ।

'त्वं प्रधानमयो देव प्रधानादधिको यतः' ।। इति वाराहे ।। २ ।।

त्वं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये ।
यथावतारास्तव सूकरादयस्तथायमप्यात्मपथोपलब्धये ।।५।।

**देहतन्त्रः** देहप्रकाशः ।

'ततिः प्रकाशो विस्तारस्तन्त्रं चेत्यभिधीयते' ।

इति तन्त्रमालायाम् ।। ५ ।।

**ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ।**
**निवृत्तजीवोपाधित्वात् वीतक्लेशाप्तनिर्वृतिः ।। २६ ।।**

**नित्यरूढसमाधित्वात् परावृत्तगुणभ्रमा ।**
**न सस्मार तदात्मानं स्वप्नदृष्टमिवोत्थितः ।। २७ ।।**

'जीवोपाधिप्रभृतयः आमुक्तेः सर्वदेहिनाम् ।
नियमात्सन्त्यभावस्तु निष्फलत्वादुदीर्यते' ।। इति वाराहे ।। २७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये तृतीयस्कन्धे चतुस्त्रिंशोऽध्यायः ।।

## ।। तृतीयः स्कन्धः समाप्तः ।।



# चतुर्थस्कन्धः

## प्रथमोऽध्यायः

मैत्रेय उवाच–

मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे ।
आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ।। १ ।।

'पुनःपुनः कथां प्राहुरभ्यासादुत्तमं फलम् ।
विज्ञापयितुकामास्तु विद्वांसस्तत्रतत्र तु' ।। इत्याग्नेये ।। १ ।।

शरणं तं प्रपद्येऽहं य एव जगदीश्वरः ।
प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन् ।। २० ।।

तप्यमानं त्रिभुवनं प्राणायामैधिताग्निना ।
निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः ।। २१ ।।

अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः ।
वितायमानयशसो मुदाऽऽश्रमपदं ययुः ।। २२ ।।

'ब्रह्मस्थश्चैव रुद्रस्थः स्वयं चापि हरिः प्रभुः ।
प्रजां त्रिपुरुषसमां यच्छत्वित्यत्रिरैच्छत ।।
तस्मात्स ब्रह्मरुद्राभ्यां सह विष्णुर्जगत्पतिः ।
आगत्य तु त्रिमूर्त्यंशान् पुत्रान्प्रादाज्जनार्दनः ।
भावित्वाच्चैव कार्यस्य लोकानां मोहनाय च' ।।

इति ब्रह्मवैवर्ते ।। २०-२२ ।।

देवा ऊचुः-

यथा कृतस्ते संकल्पो भाव्यं तेनैव नान्यथा ।
तत्संकल्पस्य ते ब्रह्मन् यद् वै ध्यायसि ते वयम् ।। ३० ।।

तत्स्थविष्ण्वपेक्षया ते वयमिति ।। ३० ।।

सोमोऽभूद् ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् ।
दुर्वासाः शङ्करस्यांशो निबोधाङ्गिरसः प्रजाः ।। ३३ ।।

'ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलम् ।
ऋते विष्णोरात्मनश्च तदंशोक्तिः प्रवेशतः' ।। इति च ।

'सृष्टिभेदाद्विरूपं तु कथा पश्चोत्तरं शतम् ।
वैरूप्यमन्यद्विज्ञेयं तात्पर्यान्मोहनाय च' ।। इति स्कान्दे ।

'ऋते तु पाण्डवकथां कार्ष्णं रामायणं तथा ।
विष्णोर्ब्रह्मादिनां चैव क्रमादुव्यत्यस्तशक्तिताम् ।
एतदापादकं चान्यदृते कल्पादिभेदतः ।
कथाभेदस्तु विज्ञेयो मोहायैतेषु भिन्नता' ।। इति वाराहे ।। ३३ ।।

मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम् ।
मूर्तिः सर्वगुणोत्पत्ती नरनारायणावृषी ।। ५२ ।।

नृत्यन्ति स्म स्त्रियो देव्य आसीत् परममङ्गलम् ।
देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः ।। ५५ ।।

देवा ऊचुः–

यो मायया विरचितं निजयात्मनीदं
खे रूपभेदमिव तत्प्रतिचक्षणाय ।
एतेन धर्मसदने ऋषिमूर्तिनाऽद्य
प्रादुश्चकार पुरुषाय नमः परस्मै ।। ५६ ।।

ताविमौ वै भगवतो हरेरंशाविहाऽगतौ ।
भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ।। ५९ ।।

'नरे विष्णुः समाविष्टः स्वयं नारायणो हरिः ।
अर्जुने च नरावेशः कृष्णो नारायणः स्वयम्' ।। इति तत्त्वविवेके ।।

खे रूपभेदो (वाय्वादिकः)ऽभ्रादिः ।

'यथाकाशस्थितो नित्यम्' इत्यादि च ।

'यथाकाशे विमानादिरूपभेदः प्रतीयते ।
तथा हरौ जगदिदं तत्सामर्थ्यात्प्रतीयते' ।। इति ब्राह्मे ।। ५२-५९ ।।

पितर्यप्रतिरूपे स्वे भवायानागसे रुषा ।
अप्रौढेवात्मनात्मानमजहाद् योगसंयुता ।। ६६ ।।

**अप्रौढेव** अस्वीकृतेव ।। ६६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे प्रथमोऽध्यायः ।।

***

## द्वितीयोध्यायः

नन्दिरुवाच–

य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि ।
द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ।। २२ ।।

गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया ।
कर्मतन्त्रं वितनुताद् वेदवादविपन्नधीः ।। २३ ।।

बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः ।
स्त्रीकामः सोऽस्तु नितरां दक्षो बस्तमुखोऽचिरात् ।। २४ ।।

विद्याबुद्धिरविद्यायां कर्ममय्यामसावजः ।
संसरन्त्विह ये चामुमनुशर्वावमानिनम् ।। २५ ।।

'ये ज्ञानविषयाः शापा मुक्तिगाश्चाधिकारिणाम् ।
कादाचित्कास्ते भवन्ति नैव ते सार्वकालिकाः ।।

तेषां ज्ञानस्य मुक्तेश्च तारतम्यस्य चैव हि ।
भगवन्नियतत्वात्तु शापादिर्नात्र कारणम्' ।। इति वाराहे ।।२२-२५।।

गिरेः सुतायाः पुष्पिण्या मधुगन्धेन भूरिणा ।
मथ्ना चोन्मथितात्मानः संमुह्यन्तु हरद्विषः ।। २६ ।।

'गिरिः प्राणः समुद्दिष्टस्तत्सुता वेदवाक्स्मृता ।
पुष्पं स्वर्गादयः प्रोक्ताः फलं मोक्ष उदाहृतम्' ।। इति वामने ।।

'अनङ्गो मन्मथो मन्था कामोऽङ्गज उदाहृतः' । इति शब्दनिर्णये ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे द्वितीयोऽध्यायः ।।



## तृतीयोऽध्यायः

सत्त्वं विशुद्धं वसुदेवशब्दितं
यदीयते तत्र पुमानपावृतः ।
सत्त्वं च यस्मिन् भगवान् वासुदेवो
ह्यधोक्षजो मे मनसा विधीयते ।। २३ ।।

विशेषेण धीयते चिन्त्यते ।

'रुद्रेण धीयते विष्णुर्विष्णोर्ध्येयो न कश्चन' । इति ब्रह्मवैवर्ते ।।२३।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे तृतीयोऽध्यायः ।।



## चतुर्थोऽध्यायः

यत्पादपद्मं महतां मनोऽलिभि-
र्निषेवितं ब्रह्मरसासवार्थिभिः ।
लोकस्य यद् वर्षति चाशिषोऽर्थिनः
तस्मै भवान् द्रुह्यति विश्वबन्धवे ।। १५ ।।

**ब्रह्मरसासवार्थिभिः** शिष्याणां मनोऽलिभिः ।

'सनकादयो रुद्रशिष्यास्तेषामन्ये तु योगिनः ।
ब्रह्मशिष्यस्तथा रुद्रो ब्रह्मा नारायणस्य च' ।। इति ब्राह्मे ।।१८।।

किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये
ब्रह्मादयस्तमवकीर्य जटाः श्मशाने ।
तन्माल्यभस्मनृकपाल्यवसत्पिशाचै-
र्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ।। १६ ।।

**ब्रह्मादयो** ब्रह्मपुत्राः ।

'सुपर्णशेषप्राणेशब्रह्मविष्णून् गिरं श्रियम् ।
ऋते नमति नो रुद्रं क एव पुरुषार्थभाक्' ।। इति गारुडे ।। १६ ।।

कर्म प्रवृत्तं च निवृत्तमप्युत
वेदे विविच्योभयलिङ्गमाश्रितम् ।
विरोधि तद् यौगपदेककर्तरि
द्वयं यथाऽऽब्रह्मणि कर्म नर्च्छति ।। २० ।।

**आब्रह्मणि** ब्रह्मज्ञानिनि ।

'आब्रह्मा स्थितधीर्जीवन्मुक्तश्चेत्यभिधीयते ।
यस्तस्य न निवृत्तं च प्रवृत्तं कर्म चेष्यते ।।
यत्तु देवाः प्रकुर्वन्ति स महानियमः स्मृतः ।
स्वर्गाद्यर्थं प्रवृत्तं स्यान्निवृत्तं मुक्तये तु यत् ।।
स महानियमो नाम कर्म यत्त्वाधिकारिकम् ।

महतो नियमाद्विष्णोः प्रीत्या मुक्तौ सुखोन्नतिः ।
केचिन्निवृत्तमित्याहुर्महानियममप्युत' ।। इति भविष्यत्पुराणे ।।

'यदि देवाश्च ऋष्याद्या निन्द्यन्ते यत्र कुत्रचित् ।
न तावता गुणैर्हीनाः स्थितप्रज्ञा हि ते मताः ।
यथायोग्यं तु तात्पर्यं निन्दाया अन्यदेव तु' ।। इति गारुडे ।।२०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे चतुर्थोऽध्यायः ।।



## पञ्चमोऽध्यायः

ततः स्वभर्तुश्चरणाम्बुजासवं
जगद्गुरोश्चिन्तयती न चापरम् ।
ददर्श देहे हतकल्मषा सती
सद्यः प्रजज्वाल समाधिजाग्निना ।। ४ ।।

न चापरं तस्मादवरं न चिन्तयती । परन्तु विष्ण्वादिकं चिन्तयती चशब्दात् ।

'रुद्रं च ब्रह्मवायू च विष्णुं चैव श्रियं गिरम् ।
उमा चिन्तयती देहं तत्याजान्यं न चास्मरत्' ।।
इति तत्त्वनिर्णये ।। ४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे पञ्चमोऽध्यायः ।।



## षष्ठोऽध्यायः

आक्रम्योरसि दक्षस्य शितधारेण हेतिना ।
छिन्दन्नपि तदुद्धर्तुं नाशक्नोत् त्र्यम्बकस्तदा ।। २२ ।।

शस्त्रैरस्त्रान्वितैरेनमनिर्भिण्णत्वचं हरः ।
विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ।। २३ ।।

दृष्ट्वा सञ्ज्ञपने योगं पशूनां स पतिर्मखे ।
यजमानपशोः क(त)स्य कायात् तेनाहरच्छिरः ।। २४ ।।

जुहावैतच्छिरस्तस्मिन् दक्षिणाग्नावमर्षितः ।
तद् देवयजनं दग्ध्वा प्रातिष्ठद् गुह्यकालयम् ।। २६ ।।

'वीरभद्राख्यरूपेण स्वेन पूर्वं ययौ हरः ।
मूलरूपेण पश्चात्तु गत्वा दक्षमथावधीत् ।।
तत्रोपेन्द्रेण हरिणा जितो धर्मात्मजेन च ।
अन्यान् जिगाय प्रययौ कैलासं स्वं निकेतनम्' ।। इति ब्राह्मे ।।२६।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे षष्ठोऽध्यायः ।।



## सप्तमोऽध्यायः

उपलभ्य पुरैवैतद् भगवानब्जसम्भवः ।
नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः ।। ३ ।।

त्रिमूर्तिगेन रूपेण नारायणो नाययौ ॥

नाहं न यज्ञो न च यूयमन्ये
ये देहभाजो मुनयश्च तत्त्वम् ।
विदुः प्रमाणं बलवीर्ययोर्वा
तस्यात्मतन्त्रस्य क उद्विधित्सेत् ॥ ७ ॥

**यज्ञ** इन्द्रः ।

'यज्ञो यज्ञपतिस्त्विन्द्रः पुरुहूतः पुरुष्टुतः' । इत्यभिधानम् ।

तस्यात्मतन्त्रस्य । तस्य विष्णोर्मनोवशस्य ।

'नाहं नेन्द्रो न चैवान्ये यत्तत्त्वं न विदुः परम् ।
तस्य विष्णोर्वशे रुद्रो मम वायोरथापि वा ।
नान्यस्य कस्यचित्पुंसस्तस्येत्थं वः कुतः कृतम्' ॥ इति ब्रह्मवैवर्ते

तस्मिन् महायोगमये मुमुक्षुशरणे सुराः ।
ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम् ॥ ३३ ॥

'मुमुक्षवो ब्रह्मणश्च शिवादिन्द्रादिभिस्तथा ।
श्रुत्वा ज्ञानं परं गुह्यं मुच्यन्ते ब्रह्मणा सह' ॥ इति कौर्मे ॥३३

स तूपलभ्यागतमात्मयोनिं
सुरासुरेशैरभिवन्दिताङ्घ्रिम् ।
उत्थाय चक्रे शिरसाऽभिवन्दनं
महत्तमोऽर्कस्य यथैव विष्णोः ॥ ४० ॥

**महत्तमः** तेजस्वितमः अर्कस्य सकाशादपि ।

'तेजोऽर्थ उत्तमार्थे च पूज्यार्थे च प्रयुज्यते ।
महच्छब्दो महःशब्दो मान्यशब्दस्तथैव च' ।। इति शब्दनिर्णये ।।४०।।

ब्रह्मोवाच–

जाने त्वामीश विश्वस्य जगतो योनिबीजयोः ।
शक्तेः शिवस्य च परं यत् तद् ब्रह्म निरन्तरम् ।। ४२ ।।

अन्तर्याम्यपेक्षया शक्तेः शिवस्य च परमिति ।

'क्रियन्ते स्तुतयोऽन्यत्र तदन्तर्याम्यपेक्षया ।
न जीवेषु गुणाः पूर्णा यथायोग्या हि तद्गताः' ।। इति ब्राह्मे ।।४२।।

त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः ।
विश्वं सृजसि पास्यत्सि क्रीडयोर्णपदो यथा ।। ४३ ।।

'तद्वशत्वात्स्वरूपं तु विष्णोः सर्वमुदीर्यते ।
स्वरूपं स च सर्वत्र बिम्बत्वादेव तूच्यते ।।

साक्षात्स्वरूपं मत्स्याद्या विष्णोर्नान्यत्कथश्चन ।
तस्मादन्यगता दोषा न तस्मिन् पुरुषोत्तमे' ।।
इति तत्त्वनिर्णये ।। ४३ ।।

त्वमेव धर्मार्थदुघाऽभिपत्तये
दक्षेण सूत्रेण विसर्जिताध्वरः ।
त्वयैव लोकेऽवसिताश्च सेतवो
यान् ब्राह्मणाः श्रद्धधते धृतव्रताः ।। ४४ ।।

**अभिपत्तये** प्रतीकाराय । **सूत्रेण** दोषसूचकेन ।। ४४ ।।

न वै सतां त्वच्चरणार्पितात्मनां
भूतेषु सर्वेष्वभिपश्यतां तव ।
भूतानि चात्मन्यपृथग् दिदृक्षतां
प्रायेण रोषोऽभिभवेद् यथा पशोः ।। ४६ ।।

**तव** त्वाम् । 'चतुर्षु षष्ठी' इति सूत्रात् ।।

'विष्णवधीना जगत्सत्ता प्रतीतिश्चेष्टितं गतिः ।
इति यन्नियतं ज्ञानमपृथग्दर्शनं स्मृतम् ।।

मिथ्याज्ञानं पृथग्ज्ञानमिति वेदविदो विदुः ।
यथैवार्थस्तथाज्ञानमपृथग्दृष्टिरुच्यते' ।। इति गारुडे ।। ४६ ।।

येऽस्मिन् यदा पुष्करनाभमायया
दुर्लङ्घ्यया स्पृष्टधियः पृथग्दृशः ।
कुर्वन्ति तत्र ह्यनुकम्पया कृपां
न साधवो दैवबलात्कृताः कथम् ।। ४८ ।।

**यदा** यस्मात् ।

'हृदयस्य द्रवीभावस्त्वनुकम्पेति कथ्यते ।
उपकारं कर्तुमिच्छा कृपेत्याहुर्मनीषिणः' ।। इति शब्दनिर्णये ।।४८।।

भवान् हि पुंसः परमस्य मायया
दुरन्तयाऽस्पृष्टमतिः समस्तदृक् ।

तया हतात्मस्वनुकर्मचेत-
स्स्वनुग्रहं कर्तुमिहार्हति प्रभो ।। ४९ ।।

**मायया** विष्ण्वधीनया बन्धकशक्त्या ।

'विष्णुमाया हरेरिच्छा बन्धशक्तिश्च तद्वशा ।
सर्वत्रगा हरेरिच्छा बन्धशक्तिर्विवर्जिता' ।। इति शब्दनिर्णये ।।४९।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे सप्तमोऽध्यायः ।।



## अष्टमोऽध्यायः

अप्यर्वाग्वृत्तयो यस्य महित्वे स्वभुवादयः ।
यथामति गृणन्ति स्म कृतानुग्रहविग्रहम् ।। २४ ।।

'उत्पत्तिर्हरिरूपाणां व्यक्तिरेव न संशयः ।
उत्पत्तिरेव जीवानां देहोत्पत्तिरितीर्यते' । इति तत्त्वनिर्णये ।।२४।।

दक्ष उवाच–

शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं
चिन्मात्रमेकमभयं प्रतिषिध्य मायाम् ।
तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्या-
मास्ते भवानपरिशुद्धमिवामनन्ति ।। २६ ।।

'जडमाया न तस्यास्ति शरीरत्वेन कुत्रचित् ।
सृष्ट्वा तया शरीराणि तत्स्थितेः पुरुषः स्मृतः ।
मायायामशरीरायामपि विष्णुः स्वयं स्थितः ।।

तस्मात्प्राकृत इत्येव जीववत्तं वदन्ति हि ।
अस्पृष्टत्वेऽपि तद्धर्मैस्तद्गत्वादेव कारणात्' ।।
इति तत्त्वविवेके ।। २६ ।।

ऋत्विज ऊचुः–

तत्त्वं न ते वयमनञ्जन रुद्रशापात्
कर्मण्यवग्रहधियो भगवन् विदामः ।
धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं
ज्ञातं यदर्थमधिदैवमदस्त्वमास्थाः ।। २७ ।।

अधिदैवं उत्तमदैवम् । यद्यज्ञभागार्थं यज्ञभुग्देवताशरीरे आस्थाः ।

'भुङ्क्ते यज्ञभुजो देवानाविश्य पुरुषोत्तमः' । इति च ।। २७ ।।

रुद्र उवाच–

तव वरद वराङ्घ्रावाशिषा चानभिध्ये
ह्यपि मुनिभिरसक्तैरादरेणार्हणीये ।
यदि रचितधियं मां विद्धि लोकापविद्धं
जगति न गणयेयं त्वत्परानुग्रहेण ।। २९ ।।

आशिषोऽपि तत एव भवन्तीत्यतश्चशब्दः ।। २९ ।।

नैतत् स्वरूपं भवतोऽसौ पदार्थ-
भेदग्रहः पुरुषो यावदीक्षेत् ।
ज्ञानस्य चार्थस्य गुणस्य चाश्रया-
न्मायामयाद् व्यतिरिक्तो यतस्त्वम् ।। ३१ ।।

'अव्यक्तादिपदार्थानां विशेषज्ञानिनाऽपि तु ।
न देहो वैष्णवो ज्ञेय आनन्दः प्राकृतो न हि' ।। इति तन्त्रसारे ।

**पदार्थभेदग्रहः** पदार्थविशेषज्ञः ।

'भेदोऽन्तरं विशेषश्च सूक्ष्मेक्षा चाभिधीयते' इति तत्त्वनिर्णये ।।३१।।

ऋषय ऊचुः –
अनन्वितं ते भगवन् विचेष्टितं
यदात्मना चरसि हि कर्म नाज्यसे ।
विभूतयो यत उपसेदुरीश्वरा-
न्न मन्यते स्वयमनुवर्तिनीं भवान् ।। ३४ ।।

ईश्वरान् ।। ३४ ।।

लोकपाला ऊचुः–
दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वं
प्रत्यग्दृष्ट्या दृश्यते येन विश्वम् ।
माया ह्येषा भवदीया हि भूमन्
यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः ।। ३७ ।।

**माया ह्येषा भवदीया** भगवत्सामर्थ्यमेव ।

'भगवन्महिमैवासौ यद्दृश्यो भगवान् स्वयम्' । इति च ।। ३७ ।।

योगेश्वरा ऊचुः–

प्रेयान्न तेऽन्योऽस्त्यमृतप्रिय प्रभो
विश्वात्मनीक्षेन्न पृथग् य आत्मनः ।
अथापि भृत्येश तयोपधावता-
मनन्यवृत्त्याऽनुगृहाण वत्सल ।। ३८ ।।

**न** पृथग् य **आत्मनः** । अन्यथा यो न पश्यति ।

'पृथग्ज्ञानं तदित्याहुर्यत्किञ्चिद्वीक्ष्यतेऽन्यथा ।
ज्ञानज्ञेयाविरोधेन त्वपृथग्वस्तुनो दृशिः ।।

केचिद्भेदं विनिन्दन्ति ह्यासुरज्ञानवृत्तयः ।
निराकुर्वन्त्यथो मन्दा भेदस्य परमार्थताम् ।।

ये तु तत्त्वविदो मुख्या भेदं ब्रह्मान्यवस्तुनोः ।
परमार्थमिति ज्ञात्वा नित्यं विष्णुमुपासते' ।। इति गारुडे ।

हे भृत्येश । **तयाऽनन्यवृत्त्या** उपधावतामस्माकमनुग्रहोऽस्त्येव । तथापि पुनरनुगृहाण ।

'यथार्थज्ञानिनो नान्यः प्रियो विष्णोस्तु कश्चन ।
तथाप्यधिकसन्तुष्ट्यै प्रसीदेत्यर्थनं पुनः' ।। इति च ।। ३८ ।।

जगदुद्भवस्थितिलयेषु लीलया
प्रविभज्यमानगुणयाऽऽत्ममायया ।

रचितात्मभेदमतये स्वसंस्थया
ह्यतिवर्तितभ्रमगुणात्मने नमः ।। ३९ ।।

'प्रकृत्या जडया मिथ्याज्ञानं जनयतीश्वरः ।
तस्य भ्रमश्च सत्वाद्या न सन्ति परमेशितुः' ।। इति च ।। ३९ ।।

अग्निरुवाच–

यत्तेजसाऽहं सुसमिद्धतेजा
हव्यं वहाम्यध्वर आज्यसिक्तम् ।
तं यज्ञियं पञ्चविधं च पञ्चभिः
स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ।। ४१ ।।

'यज्ञो यज्ञपुमांश्चैव यज्ञेशो यज्ञभावनः ।
यज्ञभुक्चेति पञ्चात्मा यज्ञेष्विज्यो हरिः स्वयम् ।।

ओ श्रावयास्तु श्रौषड्यजाथो येयजामहे ।
वषट्कारान्तकैर्नित्यं यजुर्भिः पञ्चभिर्विभुः' ।। इति तन्त्रसारे ।।४१।।

ब्राह्मणा ऊचुः–

त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं
त्वं हि मन्त्राः समिद् दर्भपात्राणि च ।
त्वं सदस्यर्त्विजो दम्पती देवता
अग्निहोत्रं स्वधा सोम आज्यं पशुः ।। ४५ ।।

'सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः ।
न तु सर्वस्वरूपत्वात्सर्वभिन्नो यतो हरिः' ।। इति मात्स्ये ।।४५।।

श्रीभगवानुवाच–

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ।
आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः ।। ५० ।।

'अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता ।
न तु जीवस्वरूपेण जीवा भिन्ना यतो हरेः ।।

विशेषाभेदवचनं सन्निधानविशेषतः ।
सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेः' ।। इति भविष्यत्पर्वणि ।।

तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि ।
देहात्मबुद्धिर्भूतानि भेदेनाज्ञोऽनुपश्यति ।। ५२ ।।

'हरेर्वशत्वदृष्टिस्तु भूतानामपृथग्दृशिः ।
प्रियत्वदृष्टिरथवा ब्रह्मादीनां विशेषतः' ।। इति गारुडे ।। ५२ ।।

त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ।
सर्वभूतात्मना ब्रह्मन् स शान्तिमधिगच्छति ।। ५४ ।।

**सर्वभूतात्मना** सर्वभूतान्तर्यामित्वेन ।। ५४ ।।

मैत्रेय उवाच–

एवं भगवताऽऽदिष्टः प्रजापतिपतिर्हरिम् ।
अर्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत् ।। ५५ ।।

**उभयतः** सोमतो हविषश्च ।। ५५ ।।

अनन्यभावैकगतिः शक्तिः सुप्तेव पूरुषम्
एतद् भगवतः शम्भोः कर्म दक्षाध्वरद्रुहः ।
श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ।। ५९ ।।

'शक्तित्वाद्विष्णुशक्तिस्तु शक्तिशब्देन चोच्यते ।
शक्यत्वात्प्रकृतिश्चापि स्वापः सृष्टिं विना हरौ ।
रतिस्तस्यास्तु कथितो नह्यन्यः स्वाप उच्यते' ।। इति तन्त्रसारे ।।

पीत्वाऽन्तरजरं वह्निश्चच्छर्द शरकानने ।
कुमारोऽभूत् ततस्तस्मै स्तनं षट् कृत्तिका ददुः ।। ६३ ।।

षड्भिर्मुखैः स्तनं पीत्वा स बालः षण्मुखोऽभवत् ।
ततश्चक्रुः सैन्यपालं सर्वासुरभयंकरम् ।। ६४ ।।

'स्वाहाद्वारेण नदीतीरे शरकानने चच्छर्द' । इति भारतोक्तेः ।।६४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे अष्टमोऽध्यायः ।।



## नवमोऽध्यायः

अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह ।
स्वायंभुवस्यापि मनोर्हरेरंशांशजन्मनः ।। ७ ।।

'आविष्टा हरिणा जीवा ब्रह्मा दक्षो मनुः पृथुः ।
शक्राद्या ऋषयश्चैव मत्स्यव्यासादयो हरिः ।।' इति ब्रह्मवैवर्ते ।।७।।

श्रीभगवानुवाच–

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ।
आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः ।। ५० ।।

'अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता ।
न तु जीवस्वरूपेण जीवा भिन्ना यतो हरेः ।।

विशेषाभेदवचनं सन्निधानविशेषतः ।
सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेः' ।। इति भविष्यत्पर्वणि ।।

तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि ।
देहात्मबुद्धिर्भूतानि भेदेनाज्ञोऽनुपश्यति ।। ५२ ।।

'हरेर्वशत्वदृष्टिस्तु भूतानामपृथग्दृशिः ।
प्रियत्वदृष्टिरथवा ब्रह्मादीनां विशेषतः' ।। इति गारुडे ।। ५२ ।।

त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ।
सर्वभूतात्मना ब्रह्मन् स शान्तिमधिगच्छति ।। ५४ ।।

**सर्वभूतात्मना** सर्वभूतान्तर्यामित्वेन ।। ५४ ।।

मैत्रेय उवाच–

एवं भगवताऽऽदिष्टः प्रजापतिपतिर्हरिम् ।
अर्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत् ।। ५५ ।।

**उभयतः** सोमतो हविषश्च ।। ५५ ।।

अनन्यभावैकगतिः शक्तिः सुप्तेव पूरुषम्
एतद् भगवतः शम्भोः कर्म दक्षाध्वरद्रुहः ।
श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ।। ५९ ।।

'शक्तित्वाद्विष्णुशक्तिस्तु शक्तिशब्देन चोच्यते ।
शक्यत्वात्प्रकृतिश्चापि स्वापः सृष्टिं विना हरौ ।
रतिस्तस्यास्तु कथितो नह्यन्यः स्वाप उच्यते' ।। इति तन्त्रसारे ।।

पीत्वाऽन्तरजरं वह्निश्चच्छर्द शरकानने ।
कुमारोऽभूत् ततस्तस्मै स्तनं षट् कृत्तिका ददुः ।। ६३ ।।

षड्भिर्मुखैः स्तनं पीत्वा स बालः षण्मुखोऽभवत् ।
ततश्चक्रुः सैन्यपालं सर्वासुरभयंकरम् ।। ६४ ।।

'स्वाहाद्वारेण नदीतीरे शरकानने चच्छर्द' । इति भारतोक्तेः ।।६४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे अष्टमोऽध्यायः ।।



## नवमोऽध्यायः

अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह ।
स्वायंभुवस्यापि मनोर्हरेरंशांशजन्मनः ।। ७ ।।

'आविष्टा हरिणा जीवा ब्रह्मा दक्षो मनुः पृथुः ।
शक्राद्या ऋषयश्चैव मत्स्यव्यासादयो हरिः ।।' इति ब्रह्मवैवर्ते ।।७।।

प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ ।
वासुदेवस्य कलया रक्षायां जगतः स्थितौ ।। ८ ।।

'प्रियव्रतोत्तानपादप्रमुखेषु हरिः स्वयम् ।
आविष्टः सर्वभूतेषु ऋषभाद्याः स्वयं हरिः' ।। इति हरिवंशेषु ।।८।।

विकल्पे विद्यमानेऽपि न ह्यसंतोषहेतवः ।
पुंसो मोहमृते भिन्ना यल्लोका निजकर्मभिः ।। ३१ ।।

विविधकल्पने विद्यमानेऽपि परिणततया ।। ३१ ।।

स्मयमानमभिध्यायेत् सानुरागावलोकनम् ।
नियमेनैकभूतेन मनसा वरदर्षभम् ।। ५४ ।।

परिणततया एकस्मिन्नेव भूतेन ।। ५४ ।।

परिचर्या भगवतो यावतीः पूर्वसेविताः ।
ता मन्त्रहृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्तये ।। ६१ ।।

मन्त्रहृदयेन मन्त्रेण च नमः शब्देन च ।। ६१ ।।

सुदुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः ।
एष्यत्यचिरतो राजन् यशो विपुलयंस्तव ।। ७२ ।।

तस्यैव योग्यत्वाल्लोकपालानां दुष्करम् ।

'नाशक्यं देवतानां तु यदन्यैः शकितं कचित् ।
शक्ता अपि न कुर्वन्ति यदन्यविहितं बुधाः' ।। इति ब्राह्मे ।।७२।।

तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम् ।
समाहितः पर्यचरद् दृष्ट्याऽऽदेशेन पूरुषम् ।। ७४ ।।

**दृष्ट्या** निरूपणया । **आदेशेन** उपदेशेन ।। ७४ ।।

देवाश्चक्रुस्तपोविघ्नं त्रासयन्तः स्वमायया ।
सर्पेभसिंहकूष्माण्डैस्तान् नापश्यत् परं गतः ।। ८० ।।

'यत्र देवैः कृते विघ्ने खण्डितो न पुमान्भवेत् ।
तत्र तद्यशसे विघ्नं कुर्युर्न तु विघातने ।।

यत्र खण्डितता तत्र खण्डनायैव केवलम् ।
सत्यकामा यतो देवास्ते चित्ताद्यभिमानिनः ।।

अतो विमोहनायैव प्राप्नुयुस्ते पराजयम् ।
तेषामशक्तितोक्तिश्च विमोहाय सुरद्विषाम्' ।। इति ब्रह्माण्डे ।।८०।।

सर्वतो मन आकृष्य हृदि भूतेन्द्रियाश्रयम् ।
ध्यायन् भगवतो रूपं नाद्राक्षीत् किञ्चनापरम् ।। ८१ ।।

**भूतेन्द्रियाश्रयं** भगवद्रूपम् ।। ८१ ।।

तस्मिन्नभिध्यायति विश्वमात्मनो
द्वारं निरुध्यासुमनन्यया धिया ।
लोका निरुच्छ्वासनिपीडिता भृशं
सलोकपालाः शरणं ययुर्हरिम् ।। ८४ ।।

**विश्वं** भगवन्तम् । **आत्मनो द्वारं** सर्वजीवोत्पत्त्यादिद्वारम् । लोकानामेव निरुच्छ्वासः लोकपालास्तदर्थमेव शरणं ययुः ।

'ध्यातुर्ध्रुवस्य कीर्त्यर्थं हरिणा सह देवताः ।
लोकोच्छ्वासं निरुध्याथ श्वासार्थं च हरिं ययुः ।।

अन्यप्रवृत्तयस्तेभ्यो न तेषामन्यतः क्वचित् ।
स्वोत्तमेभ्यस्तु देवेभ्यस्तेषां स्युः स्वप्रवृत्तयः' ।। इति तत्त्वनिर्णये ।।

देवा ऊचुः–

नैवं विदामो भगवन् प्राणरोधं
चराचरस्याखिलसत्वधाम्नः ।
विधेहि तन्नो वृजिनाद् विमोक्षं
प्राप्ता वयं त्वां शरणं शरण्यम् ।। ८५ ।।

**अखिलसत्वसमूहस्य ।**

'तेजः शक्तिः समूहश्च गृहं धामेति कथ्यते' ।
इति तत्त्वनिर्णये ।। ८५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे नवमोऽध्यायः ।।



## दशमोऽध्यायः

या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद् भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किम्वन्तकासिलुलितात् पततां विमानात् ।। १० ।।

परब्रह्मणि स्थितस्य ध्यानादिकं विना न भवति । सुप्तौ दृष्टत्वात् ।।१०।।

ते न स्मरन्त्यतितरां प्रियमीशमाद्यं
स्वान् संपदः सुतसुहृद्गृहवित्तदारान् ।
ये त्वब्जनाभभवदीयपदारविन्द-
सौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ।। १२ ।।

ये स्वाः (स्वान्) सम्पदः स्मरन्ति ते त्वां न स्मरन्ति ।
ये भगवद्भक्तसङ्गाः ते स्वाः (स्वान्) सम्पदो न स्मरन्ति ।।१२।।

तिर्यङ्नगद्विजसरीसृपदेवदैत्य-
मर्त्यादिभिर्विरचितं सदसद्विशेषम् ।
रूपं स्थविष्ठमज ते महदाद्यशेषं
नातः परं परम वेद्मि न यत्र वाचः ।। १३ ।।

'पश्यमानोऽपि तु हरिं न तु वेत्ति कथञ्चन ।
वेत्ति किञ्चित्प्रसादेन हरेरथ गुरोस्तथा' ।। इति ब्रह्मतर्के ।। १३ ।।

त्वं नित्यमुक्तपरिशुद्धविशुद्ध आत्मा
कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।
(ये) यद्बुध्यवस्थितमखण्डितया स्वबुद्ध्या
दृष्ट्वाऽऽस्थिता वधिमतो व्यतिरिक्त आस्से ।। १५ ।।

वधिं अवधिम् । अल्लोपेन । संसारस्यावधिभूतं त्वामास्थिताः ।। तैः सहैवास्ते ।। १५ ।।

यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति
विद्यादयो विविधशक्तय आनुपूर्व्या ।
तद् ब्रह्म विश्वभवमेकमविश्वमाद्य-
मानन्दमात्रमविकारमहं प्रपद्ये ॥ १६ ॥

'आनुपूर्वी श्रुतिश्चैव त्रयी चाम्नाय उच्यते' । इत्यभिधानम् ॥ १६ ॥

सत्याशिषो हि भगवंस्तव पादमूल-
माशिष्टयोऽनुभजतः पुरुषार्थमूर्तेः ।
अप्येवमार्य भगवान् परिपाति दीनान्
वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १७ ॥

तव पादमूलं भजत आचार्यस्याशिष्टयः शिक्षाः सत्याशीःप्रदा एव । तथापि अस्मान् शिष्यान् विशिष्टफलप्राप्तये पुनः परिपाति भवान् ॥ १७ ॥

अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत ।
भवच्छिदः पादमूलं गत्वा याचे तदन्तवत् ॥ ३१ ॥

'आधिपत्यमनित्यं तु ध्रुवलोकस्य यद्ध्रुवे ।
न तु तत्स्थानगन्तॄणां यतीनां गतिरुत्तमा ॥
तस्यापि मुक्तिर्नियता नियतं चापि तत्पदम् ।
तथापि कामनानिन्दा ध्रुवेण सुकृता बत' ॥

इति भविष्यत्पर्वणि ॥ ३१ ॥

दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् ।
तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥ ३३ ॥

'द्वितीयस्य स्वतन्त्रस्य त्वभावाद्व्यवर्जितः ।
ईश्वरश्चेशितव्यस्य भावात्स परमेश्वरः' ।। इति हरिवंशेषु ।। ३३ ।।

भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ।
तादात्म्यं यच्छतो मौढ्यान्मानो मे भिक्षितं बत
ईश्वरात् क्षीणपुण्येन पुलकानिव चाधनः ।। ३५ ।।

'हरौ नियतचित्तत्वाद्गृहवत्तत्प्रवेशनात् ।
मोक्षं तादात्म्यमित्याहुर्न तद्रूपत्वतः क्वचित्' ।। इति भविष्यत्पर्वणि ।

तच्चित्ततैव तादात्म्यम् ।

'नैकात्मतां मे स्पृहयन्ति' इत्युक्तत्वात् ।
'हरीच्छितेच्छुतैकात्म्यं न तेनैकस्वरूपता' इति च ।
'कामेन मे काम आगात्' इति च श्रुतिः ।। ३५ ।।

लाल्यमानं जनैरेवं ध्रुवं सभ्रातरं नृपः ।
आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत् पुरम् ।। ५३ ।।

'कलभश्चैव कन्यानां करिणी बालमङ्गले' । इति राजनीतौ ।। ५३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे दशमोऽध्यायः ।।



## एकादशोऽध्यायः

निमित्तमात्रं तत्रात्मा निर्गुणः पुरुषर्षभः ।
व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत् ।। ४७ ।।

केचित् कर्म वदन्त्येनं स्वभावमपरे नृप ।
एके कालं परे दैवं पुंसः काममुतापरे ।। ५२ ।।

'हरिरक्लिष्टकारित्वादयस्कान्तवदुच्यते ।
कामकर्मस्वभावेषु काले चावस्थितो हरिः ।
सर्वकारणभूतः संस्तत्तन्नाम्नाऽभिधीयते' ।।
इति सत्यसंहितायाम् ।। ४७,५२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे एकादशोऽध्यायः ।।



## द्वादशोऽध्यायः

अहं त्वमित्यपार्था धीरज्ञानात् पुरुषस्य हि ।
स्वाप्नीव भात्यनुध्यानाद् यया बन्धविपर्ययः ।। ४ ।।

परमेश्वरं विनाऽहं त्वं कर्तेति भ्रान्तिः ।

'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' । इति मोक्षधर्मे ।

विपर्ययो दुःखादिः सुखादिरूपस्य ।। ४ ।।

भजस्व भजनीयाङ्घ्रिमभवाय भवच्छिदम् ।
युक्तं विरहितं शक्त्या गुणमय्याऽऽत्ममायया ।। ६ ।।

आत्मसामर्थ्याख्यया शक्त्या युक्तम् । गुणमय्या विरहितम् ।। ६ ।।

वृणीहि कामं नृप यन्मनोगतं
मत्तस्त्वमौत्तानपदेऽविशङ्कितः ।
वरार्हणोऽस्यम्बुजनाभपादयो-
र्निरन्तरं त्वां वयमङ्ग शुश्रुम ।। ७ ।।

**निरन्तरं** भगवत्पादमानसम् ।। ७ ।।

अथायजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः ।
द्रव्यक्रियादेवतानां कर्माकर्मफलप्रदम् ।। १० ।।

द्रव्यक्रियादेवतानां विषयम् । **अकर्मफलप्रदं** मोक्षफलप्रदम् ।। १० ।।

सर्वात्मन्यच्युते सर्वे तीव्रौघां भक्तिमुद्वहन् ।
ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम् ।। ११ ।।

'विश्वः पूर्णस्तथा सर्वः समस्तश्चाभिधीयते' । इत्यभिधानम् ।।११।।

मन्यमान इदं विश्वं मायारचितमात्मनि ।
अविद्यारचितस्वप्नगन्धर्वनगरोपमम् ।। १५ ।।

'अन्यथात्वात्क्षिप्रनाशाज्जगत्स्वप्नादिवत्स्मृतम् ।
वर्तमानं नियत्यैव सदैव परमात्मनि' ।। इति वाराहे ।।

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते' ।। इति स्कान्दे ।। १५ ।।

तस्या विशुद्धकरणः शिववार्विगाह्य
बद्धासनो जितमरुन्मनसाऽऽहृताक्षः ।
स्थूले दधार भगवत्प्रतिरूप एतद्
ध्यायंस्तदव्यवहितो व्यसृजन् समाधौ ।। १७ ।।

स्थूले पातालादिके । शिलावत्प्रतिमारूपे ।

'शिलावत्प्रतिमैषा हि विष्णोर्लोकचतुर्दशि' । इति च ।। १७ ।।

सुदुर्जयं विष्णुपदं जितं त्वया
यत् सूरयोऽप्राप्य विचक्षते परम् ।
आतिष्ठ तच्चन्द्रदिवाकरादयो
ग्रहर्क्षताराः परियन्ति दक्षिणम् ।। २५ ।।

अनास्थितं ते पितृभिरन्यैरप्यङ्ग कर्हिचित् ।
आतिष्ठ जगतां वन्द्यं तद् विष्णोः परमं पदम् ।। २६ ।।

'शिंशुमारो ध्रुवश्चैव संस्थितौ यत्पुरे सदा ।
तत्पश्यन्ति न यान्त्यन्ये लोकं यान्ति सुरान् विना' ।।
इति च ।। २५,२६ ।।

श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः ।
नेच्छंस्तत्राऽत्मनाऽऽत्मानं संतुष्ट इति सिध्यति ।। ४९ ।।

मनसा परमात्मानं प्रति सन्तुष्टः ।। ४९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे द्वादशोऽध्यायः ।।



## त्रयोदशोऽध्यायः

अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ।
स्वरूपमवरुन्धानो नान्यदस्मात् तदैक्षत ।। ९ ।।

स्वरूपं जीवस्य विम्बरूपं परमात्मानम् ।

'भिन्नस्वरूपमभिदं स्वरूपं तु द्विधा हरेः ।
भिन्नस्वरूपं ब्रह्माद्या मत्स्याद्यभिदमुच्यते' ।। इति गारुडे ।। ९ ।।

मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः ।
वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ।। ११ ।।

'कल्पः कल्पाभिमानी सन् शिंशुमारानुगः स्थितः ।
वत्सरो राज्यमकरोत्पित्रा दत्तं महाबलः' ।। इति ब्राह्मे ।

'चक्रे नारायणः साक्षात्किंस्तुघ्नः कल्पमात्मजम्' । इति पाद्मे ।।११।।

सदस्या ऊचुः–

नरदेवेह भवतो नावद्यं हि मनाक् स्थितम् ।
अस्त्येकं प्राक्तनमघं यदि हेदृक् त्वमप्रजः ।। ३१ ।।

तथा साधय भद्रं ते आत्मानं सप्रजं नृप ।
इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ।। ३२ ।।

यथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः ।
यद् यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ।। ३३ ।।

'अनपत्योऽपि सद्धर्मा लोकजिन्नात्र संशयः ।
देवैस्तु पृथुजन्मार्थे हविरङ्गस्य नो हृतम् ।।
अनपत्यत्वकर्माऽसौ बालहत्या कृता पुरा ।
अतो दुष्टोऽभवत्पुत्र इष्टो विष्णुरतः पृथुः' ।। इति वामने ।।३१-३३।।

स बाल एव पुरुषो मातामहमनुव्रतः ।
अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः ।। ३९ ।।

स शरासनमुद्यम्य मृगयुर्वनगोचरः ।
हन्त्यसाधुर्मृगान् दीनान् वेनोऽसावित्यरौज्जनः ।। ४० ।।

'मृत्युर्देवो यमभ्राता वेनमातामहोऽसुरः ।
पीडां वेनेति च प्राहुर्वेनोऽसौ पीडनादभूत्' ।। इति च ।।३९,४०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे त्रयोदशोऽध्यायः ।।



## चतुर्दशोऽध्यायः

तं सर्वलोकामरयज्ञसंग्रहं
त्रयीमयं द्रव्यमयं तपोमयम् ।
यज्ञैर्विचित्रैर्यजतो भवाय ते
राजन् स्वदेशाननुरोद्धुमर्हसि ।। २२ ।।

सर्वलोकादीन् सङ्गृह्णातीति तत्सङ्ग्रहः ।

'सर्वस्य ग्रहणाद्विष्णुः सर्वसङ्ग्रह उच्यते ।
वेदस्य तद्वक्तृकत्वात्प्राधान्यं तु त्रयीमयः ।
सर्वं तद्विषयत्वेन मुख्यं सर्वमयस्ततः' इति स्कान्दे ।। २२ ।।

यज्ञेन युष्मद्विषये द्विजातिभि-
र्वितायमानेन सुराः कला हरेः ।
स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं
तद्धेलनं नार्हसि वीर चेष्टितुम् ।। २३ ।।

'विष्णोः सन्निहितत्वात्तु सर्वे देवा हरेः कलाः' । इति च ।। २३ ।।

वेन उवाच–

अवजानन्ति ये मूढा नृपरूपिणमीश्वरम् ।
नानुविन्दन्ति ते भद्रमिह लोके परत्र च ।। २४ ।।

तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ।
बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ।। २९ ।।

'अहं ब्रह्मेति वेनस्तु ध्यायन्नापाधरं तमः ।
तद्भ्राद्धान्तो मही व्याप्तो भेर्या ख्यापयतोऽनिशम् ।।
आसुरा राक्षसाश्चैव पिशाचास्तत्पथि स्थिताः ।
भूमौ तत्पृथुना सर्वं निरस्तं महितात्मना ।।
पुनः कलियुगे प्राप्ते अष्टाविंशतिमे मनोः ।
वैवस्वतस्य समये जाताः क्रोधवशा भुवि ।
ख्यापयन्ति दुरात्मानो मणिमांस्तत्पुरःसरः' ।।
इति भविष्यत्पुराणे ।। २४,२९ ।।

विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः ।
ममन्थुरूरुं तरसा तत्रासीद् बाहुको नरः ।। ४४ ।।

तं तु तेऽवनतं (दीनं) दृष्ट्वा किं करोमीति वादिनम् ।
निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ।। ४६ ।।

तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः ।
योऽपाहरज्जायमानो वेनकल्मषमुल्बणम् ।। ४७ ।।

'त्र्यंशो वेनः समुद्दिष्टः सत्वांशः पृथुतामगात् ।
रजोंऽशश्च दिवं यातो निषादस्तामसोऽभवत् ।
स्वयं वेनश्चतुर्थस्तु महातमसि पातितः' ।। इति कौर्मे ।

'पापरूपी पृथग्जातो निषादो वेनदेहतः ।
यस्मात्तस्मात्पृथोः पुत्राद्रजो वेनो दिवं ययौ' ।।
इति गारुडे ।। ४४-४७ ।।

ऋषय ऊचुः –

एष विष्णोर्भगवतः कला भुवनपावनी ।
इयं च लक्ष्मीः सम्भूतिः पुरुषस्यानपायिनी ।। ५० ।।

'पृथुहैहयादयो जीवास्तेष्वाविष्टो हरिः स्वयम् ।
विशेषावेशतस्तेषु साक्षाद्धर्यंशतावचः ।।

किंस्तुघ्नव्यासऋषभकपिला मत्स्यपूर्वकाः ।
आकूतिजैतरेयौ च धर्मजत्रयमेव च ।।

धन्वन्तरिर्हयग्रीवो दत्तात्रेयश्च तापसः ।
स्वयं नारायणस्त्वेते नाणुमात्रविभेदिनः ।
बलतः स्वरूपतश्चैव गुणैरपि कथञ्चन' ।। इति तत्त्वनिर्णये ।

'तत्र सन्निहिता श्रीश्च यत्र सन्निहितो हरिः ।
नास्य सन्निधिमात्रेण रमा पत्नीत्वमाव्रजेत् ।।

साक्षादेव तु साक्षाच्च हरेः सन्निधितः क्वचित् ।
गोप्यादिरूपा भवति विपरीतं न तु क्वचित्' ।। इति च ।। ५० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे चतुर्दशोऽध्यायः ।।



## पञ्चदशोऽध्यायः

एष साक्षाद्धरेरंशो जातो लोकरिरक्षया ।
इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ।। ३ ।।

तत्र सन्निहितः साक्षाद् भगवान् ।

'ब्रह्मण्यनन्ते गरुडे रुद्रे कामे शचीपतौ ।
अनिरुद्धे मनौ चैव पृथौ च कृतवीर्यजे ।।

नारदे चैवमाद्येषु विशेषात्सन्निधिर्हरेः ।
सुदर्शनादिष्वस्त्रेषु तथा सन्निहितो हरिः ।।

नरलक्ष्मणौ बलश्चैव शेषस्यांशाः प्रकीर्तिताः ।
तथा भरतशत्रुघ्नौ चक्रशङ्खावुदाहृतौ ।
प्रद्युम्नश्च कुमारश्च स्कन्दः कामांशजाः स्मृताः ।।' इति स्कान्दे ।

'वैन्ये पृथौ सन्निहितो राजरूपी जनार्दनः' । इति ब्राह्मे ।। ३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे पञ्चदशोऽध्यायः ।।



## षोडशोऽध्यायः

अयं तु साक्षाद्भगवांस्त्र्यधीशः
कूटस्थ आत्मा कलयाऽवतीर्णः ।
यस्मिन्नविद्यारचितं निरर्थकं
पश्यन्ति नानात्वमिव प्रतीतम् ।। २० ।।

यल्लोके निरर्थकं तद्भगवद्रूपेषु प्रतीतनानात्वदृष्टान्तेन पश्यन्ति सन्तः ।

'मत्स्यरूपादिनानात्वदृष्टिवद्यन्निरर्थकम्' । इति पाद्मे ।

'एवं धर्मान्पृथक् पश्यन्' इति च ।। २० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे षोडशोऽध्यायः ।।



## सप्तदशोऽध्यायः

ब्राह्मणप्रमुखान् वर्णान् भृत्यामात्यपुरोधसः ।
पौरान् जानपदान् श्रेणीः प्रकृतीः समपूजयत् ।। २ ।।

'राज्ञा समानवयसः श्रेणयस्त्वङ्गरक्षकाः' । इत्यभिधानम् ।। २ ।।

यच्चान्यदपि कृष्णस्य ब्रह्मन् भगवतः प्रभोः ।
श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ।। ६ ।।

पूर्वतनानां कथासम्बन्धेन हरेर्यशः ।। ६ ।।

धरण्युवाच –

नमः परस्मै पुरुषाय मायया
विन्यस्तनानातनवे गुणात्मने ।
नमः स्वरूपानुभवेन निर्धुत-
द्रव्यक्रियाकारकविभ्रमोर्मये ।। ३० ।।

'ब्रह्मादिजीवदेहास्तु मायादेहाः प्रकीर्तिताः' । इति वाराहे ।।३०।।

नूनं तवेशस्य समीहितं जनैः
स्वमायया दुर्जययाऽकृतात्मभिः ।
न लक्ष्यते यस्त्वकरोदकारयद्
योऽनेक एकः परतः स ईश्वरः ।। ३३ ।।

स परतः ईश्वर, इत्याक्षेपः ।। ३३ ।।

सर्गादि योऽस्यानुरुणद्धि शक्तिभि-
र्द्रव्यक्रियाकारकचेतनात्मभिः ।
तस्मै समुन्नद्धविरुद्धशक्तये
नमः परस्मै पुरुषाय वेधसे ।। ३४ ।।

'विरुद्धशक्तयो यस्य नित्या युगपदेव च ।
तस्मै नमो भगवते विष्णवे सर्वजिष्णवे' इति च ।। ३४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे सप्तदशोऽध्यायः ।।



## अष्टादशोऽध्यायः

कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ।
हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ।। १५ ।।

'गुणाः स्वरूपभूताश्च बाह्याश्चेति द्विधा मताः ।
स्वरूपभूता व्यज्यन्ते हरेर्बाह्यान् दुहुः पयः' । इति ब्राह्मे ।।१५।।

दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् ।
विधाय दुदुहुः क्षीरमयःपात्रे सुरासवम् ।। १६ ।।

'प्रतिमन्वन्तरं प्रायः प्रह्लादाद्या बभूविरे' । इति च ।। १६ ।।

ग्रामान् पुरः पत्तनानि दुर्गाणि विविधानि च ।
घोषान् व्रजांश्च शिबिरान् नगरान् खेटखर्वटान् ।। ३१ ।।

'गोष्ठं घोष इति प्रोक्तो व्रजस्तत्पालसंस्थितिः' । इत्यभिधानम् ।।३१।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे अष्टादशोऽध्यायः ।।



## एकोनविंशोऽध्यायः

एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा ।
अन्वधावदतिक्रुद्धो रावणं गृध्रराडिव ।। १६ ।।

सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट् ।
धीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान् ।। १७ ।।

'देवाः शक्तास्तु मोहाय दर्शयेयुरशक्तवत् ।
ऋषीणां चैव राज्ञां च नहि ते देवतासमाः ।
आज्ञया वा हरेः क्वापि कार्यतो वा क्वचित्क्वचित्' ।। इति गारुडे ।।

'प्रणिपातादिकं देवैर्ऋष्यादिषु जनार्दने ।
क्रियतेऽतो न तेषां हि तेजोभङ्गः कथञ्चन ।

अत्युत्तमानामवरे तेजोभङ्गो न विद्यते ।
यथा नराणां तिर्यक्षु प्रायः साम्ये हि स स्मृतः' ॥
इति स्कान्दे ॥ १५-१६ ॥

धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु ।
प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ २५ ॥

'धर्मोपमस्त्वधर्मो य उपधर्मः स उच्यते' । इति हरिवंशेषु ॥२५॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे एकोनविंशोऽध्यायः ॥



## विंशोऽध्यायः

एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः ।
सर्वगोऽनावृतः साक्षी निरात्माऽनात्मनः परः ॥ ७ ॥

देहाद्यपार्थास्तद्धर्मा न स्युस्तद्द्रष्टुरात्मनः ।
कैवल्यं तस्य वै धर्मः सुषुप्तं तन्निदर्शनम् ॥ ८ ॥

'अन्येषामावृतो विष्णुः स्वस्यानावृत एव च ।
आत्मा सर्वस्य जगतस्तस्यात्माऽन्यो न विद्यते ॥
सुषुप्तवच्च निर्दुःखो जाग्रद्वच्च प्रवृत्तिमान् ।
अनन्यसदृशत्वाच्च केवलोऽसौ हरिः स्मृतः' ॥ इति तन्त्रसारे ।

'आत्मनैवावगम्यत्वाद्धरिरेष सुषुप्तवत् ।
केवलत्वेन विज्ञेयो मुक्तिस्तद्वददुःखता' ।। इत्यध्यात्मे ।। ७,८ ।।

उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् ।
कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ।। १२ ।।

'हरिरक्लिष्टकारित्वादुदासीन इतीर्यते' ।। इति च ।। १२ ।।

भिन्नस्य लिङ्गस्य गुणप्रवाहं
द्रव्यक्रियाकारकचेतनात्मनः ।
दृष्ट्वा सुसंपत्सु विपत्सु सूरयो
न विक्रियन्ते मयि बद्धसौहृदाः ।। १३ ।।

'जीवाद्भिन्नस्य मनसो गुणाः सत्वादयो मताः ।
तज्ज्ञात्वा न विकुर्वीत स्वस्वरूपं मनस्तथा' । इति षाड्गुण्ये ।।१३।।

स्पृशन्तं पादयोः शीर्ष्णा व्रीडन्तं स्वेन कर्मणा ।
शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ।। १९ ।।

'आयासदुःखव्रीडादीन्प्रायशः सुखिनोऽपि तु ।
नियमादृषिभूतेषु मोहायादर्शयन्सुराः' ।। इति ब्रह्मतर्के ।

'अपक्वभक्तियुक्ता ये न तेषां विष्णुदर्शनम् ।
प्रायो भवति दुःखस्य त्वभावः प्रायशो भवेत्' ।।
इति प्रकाशसंहितायाम् ।।

भगवानपि विश्वात्मा पृथुनोपहूतार्हणः ।
समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ।। २० ।।

'जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यते' । इत्यभिधानम् ।।२०।।

जन्तोर्जगत्यां जगदीश वैशसं
स्यादेव यत् कर्मणि नः समीहितम् ।
करोषि फल्वप्युरु दीनवत्सल
स्व एव धिष्ण्येऽभिरतस्य किं तया ।। २९ ।।

'धिष्ण्यं तेजश्च सामर्थ्यं महिमा धाम चोच्यते' । इत्यभिधानम् ।।

अल्पपुण्यत्वान्न मद्भक्तियोग्य इति न मन्तव्यम् । यतः फल्वप्युरु करोषि वात्सल्यात् । विना वात्सल्यं श्रियाऽपि किं तव? ।। २९ ।।

भजन्त्यथ त्वामत एव साधवो
व्युदस्तमायागुणविभ्रमोदयम् ।
भवत्पदानुस्मरणादृते सतां
निमित्तमन्यद् भगवन् न विद्महे ।। ३० ।।

**अथ** अन्यच्च । **अतः** वात्सल्यादेव ।। ३० ।।

यज्ञेश्वरधिया राज्ञा वाग्वित्ताञ्जलिभक्तितः ।
सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ।। ३७ ।।

'भूतेषु हरिरित्येव हर्यर्पणधिया तथा ।
सर्वभूतेषु च हरेः पूजा कार्याऽऽत्मवेदिभिः' ।। इति पाद्मे ।।३७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे विंशोऽध्यायः ।।

## एकविंशोऽध्यायः

को न्वस्य कीर्तिं नशृणोत्यभिज्ञो
यद्विक्रमोच्छिष्टमशेषभूपाः ।
लोकाः सपाला उपजीवन्ति काम-
मद्यापि तन्मे वद कर्म शुद्धम् ।। १० ।।

'देवेभ्य ऋषयो भूपाश्चोच्यन्ते शक्तिमत्तया ।
कचित्कचिन्मोहनार्थं कादाचित्काच्च हेतुतः' इति नारदीये ।।१०।।

अस्ति यज्ञपतिर्नाम केषांचिदिह सत्तमाः ।
इहामुत्र च लक्ष्यन्ते ज्योत्स्नावत्यः कचिद् भुवः ।।२६।।

'प्रकाशवद्भुवो देवा मानुषाश्चापि केचन' ।। इति वाराहे ।। २६ ।।

राज्यस्वर्गापवर्गाणां प्रायेणैकात्महेतुता ।
दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमोहितान् ।। २९ ।।

'एकात्मा हरिरुद्दिष्टः प्रधानत्वात्समस्तत' इति च ।।

**प्राय** इत्यवधारणाक्षेपः ।

'प्रायःपदं स्यात्प्राचुर्ये चाक्षेपात्मावधारणे ।
अर्थतोऽवधृतिः क्षेपो मुखाक्षेपोऽवधारणम्' ।। इति च ।। २९ ।।

असाविहानेकगुणाध्वरैः सता पृथग्विधैर्द्रव्यगुणक्रियोक्तिभिः ।
सम्पद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनस्वरूपतः ।।३३।।

**सम्पद्यते** प्राप्यते ।। ३३ ।।

**प्रधानकालाशयकर्मसङ्ग्रहः**
**शरीरशेषं प्रतिपद्य चेतनः ।**
**क्रियाफलत्वेन विभुर्विभाव्यते**
**यथाऽनलो दारुषु तद्गुणात्मकः ।। ३४ ।।**

प्रधानादीन् गृहीत्वा जीवं प्राप्य पुण्यकर्मभिर्ज्ञायते ।

यथा गुणवदिन्धनेऽग्निर्मथनादिना ।। ३४ ।।

**ब्रह्मण्यदेवः पुरुषः पुरातनो**
**नित्यं हरिर्यच्चरणाभिवन्दनात् ।**
**अवाप लक्ष्मीमनपायिनीं यशो**
**जगत्पवित्रं च महत्तमाग्रणीः ।। ३७ ।।**

हरिरिन्द्रो यच्चरणाभिवन्दनादनपायिनीं लक्ष्मीमवाप । सोऽपि विष्णुर्ब्राह्मणप्रियः ।

'यत्प्रसादेन देवेन्द्रो वेदोदितयशा अभूत् ।
सोऽपि विष्णुरमेयात्मा सदा ब्राह्मणवत्सलः' ।।

इति हरिवंशेषु ।। ३७ ।।

**पुमाल्लभेताप्यतिवेलमात्मनः**
**प्रसादतोऽत्यन्तशमं स्वतः स्वयम् ।**
**यन्नित्यसम्बन्धनिषेवया ततः**
**परं किमत्रास्ति सुखं हविर्भुजाम् ।। ३९ ।।**

तस्मान्मोक्षसुखात्परं हविर्भुजां देवानामप्यत्र संसारेऽस्ति किम् ? ।।३९।।

अश्नात्यनन्तः खलु तत्त्वकोविदैः
श्रद्धाहुतं यन्मुख इज्यनामभिः ।
न वै तथा चेतनया बहिष्कृते
हुताशने पारमहंस्यवर्यगुः ।। ४० ।।

**पारमहंस्यवर्या** गावो यस्य ।। ४० ।।

पुत्रेण जयते लोक इति सत्यवती श्रुतिः ।
ब्रह्मदण्डहतः पापो यद् वेनोऽत्यतरत् तमः ।। ४५ ।।

'वेनस्थो राजसो जीवः पृथुना स्वर्गतिं गतः ।
स्वयं तु तम एवाप सात्विकः पृथुतामगात्' ।। इति ब्रह्माण्डे ।।४५।।

अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुन्दनाथाः ।
यदुत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनंक्षि ।।४८।।

अहो वयमित्यादि तत्स्थपरमेश्वरापेक्षया ।
'यो ब्रह्मक्षत्रमाविश्य' इति वचनात् ।। ४८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे एकविंशोऽध्यायः ।।



## द्वाविंशोऽध्यायः

नैव लक्षयते लोको लोकान् पर्यटतोऽपि यान् ।
यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः ।। ९ ।।

'सर्वज्ञाश्च विरिञ्चाद्या न जानीयुर्हरिं परम् ।
हेतवो जगतोऽप्यस्य यथाऽसौ वेद केशवः' ।। इति तन्त्रसारे ।।९।।

व्यक्तं ह्यात्मवतामात्मा भगवानात्मभावनः ।
स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ।। १६ ।।

'हरेस्तु प्रतिमा प्राज्ञास्तत्रस्थः केशवः स्वयम् ।
ददाति ज्ञानमीशेशः परमात्मा स्वयं विभुः' ।। इति च ।। १६ ।।

अस्त्येव राजन् भवतो मधुद्विषः
पादारविन्देऽस्य गुणानुवादिनि ।
रतिः सदा या विधुनोति नैष्ठिकी
कामं कषायं मलमन्तरात्मनः ।। २० ।।

कषणेन गच्छतीति कषायः पापं, तदुभयमेव मलम् ।। २० ।।

शास्त्रेष्वियानेव सुनिश्चितो नृणां
क्षेमस्य सम्यग्विमृशेषु हेतुः ।
असङ्ग आत्मव्यतिरिक्तवस्तुनि
दृढा रतिर्ब्रह्मणि निर्गुणे च या ।। २१ ।।

हरेर्मुहुस्तत्परकर्णपूरया
गुणाभिधानेन विजृम्भमाणया ।
भक्त्या ह्यसङ्गः सदसत्परात्मनि
स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ।। २५ ।।

'रतिः परात्मनि हरावन्यत्रारतिरेव च ।
पुमर्थसाधनं ज्ञेयं नातोऽन्यन्मुख्यमिष्यते' ।। इति ।। २१,२५ ।।

यदा रतिर्ब्रह्मणि नैष्ठिकी पुमा-
नाचार्यवान् ज्ञानविरागरंहसा ।
दहत्यबीजं हृदयं जीवकोशं
पञ्चात्मकं योनिमिवोत्थितोऽग्निः ।। २६ ।।

अबीजं हृदयं बीजहृदयं विना ।

'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ।।

सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् ।
कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् ।।

अपुमर्थता च मुक्तेः स्यादभावात्पुंस एव तु ।
ज्ञानज्ञेयाद्यभावाच्च सर्वथा नोपपद्यते ।
तस्मादेतन्मतं येषां तमोनिष्ठा हि ते मताः ।।' इति स्कान्दे ।।२६।।

दग्धाशयो मुक्तसमस्ततद्गुणो
नैवात्मनो बहिरन्तर्विचष्टे ।

परात्मनोर्यद् व्यवधानं पुरस्तात्
स्वप्ने यथाऽपुरुषस्तद्विनाशे ।। २७ ।।

**दग्धाशयः** बीजाशयनाशे तद्गुणानां ज्ञानादीनामभावान्न किञ्चिद्विचक्षीत । परात्मनोर्यदा व्यवधानं संसारावस्थायां तदा स्वप्न इवेत्येतावद्बीजहृदयनाशे त्वपुरुष एव । आत्मनाश एवेत्यर्थः । अतः संसारावस्थैवोत्तमा स्यात् ।

'भिदा यदि न दृश्येत जीवात्मपरमात्मनोः ।
मुक्तौ तदा विमोक्षाय को यत्नं कर्तुमर्हति' ।। इति ब्रह्माण्डे ।।

'मग्नस्य हि परेऽज्ञाने किं न दुःखकरं भवेत् ।
प्रवृत्तिधर्ममेवाहं मन्ये भरतसत्तम' ।। इति मोक्षधर्मेषु ।। २७ ।।

इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतो मनः ।
चेतनां हरते बुद्धेः स्तुम्बस्तोयमिव ह्रदात् ।। ३० ।।

एवंविधाज्ञानकारणमाह । इन्द्रियैर्विषयाकृष्टैरित्यादि ।

'बहुस्मरणशक्तिस्तु चेतनेत्युच्यते बुधैः' ।। इति शब्दनिर्णये ।। ३० ।।

भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये ।
तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः ।। ३१ ।।

नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः ।
यद्यस्त्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ।। ३२ ।।

अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् ।
स्रंशितो ज्ञानविज्ञानाद् येनाविशति मुग्धताम् ।। ३३ ।।

न कुर्यात् कर्हिचित् सङ्गं तमस्तीव्रं तितीर्षुणा ।
धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम् ।। ३४ ।।

'स्वपक्षपातस्त्वभ्यासाद्भोगार्थं व्यापृतस्य तु ।
भवेत्ततोऽनेकशास्त्रयथार्थस्मरणेशिता ।।

नश्यत्यतः स्मृतेर्नाशाद्भगवत्पक्षपातिता ।
विनश्येत्तेन चैवास्य भवेज्ज्ञानविपर्ययः ।।

न च ज्ञानविपर्यासादन्यन्नाशकरं क्वचित् ।
सर्वस्यैतस्य मूलं हि दुष्टसंसर्ग एव तु ।।

दुष्टसङ्गो विरक्तस्याप्यन्यथाज्ञानकारणम् ।
दुष्टसङ्गाद्धि विष्णोश्च स्वात्मत्वं मन्यते बुधः ।
अभावं स्वात्मनोऽन्यस्य मुक्तिं चापि निरात्मताम्' ।।
इत्यादि स्कान्दे ।। ३१-३४ ।।

मनोमात्रमिदं विश्वं यथा स्वप्ने मनः क्रिया ।
क्रिया च वासनामात्रं साऽनीहायां प्रलीयते ।। ३७ ।।

आत्मा त्वनीहया साक्षात् स्वयंज्योतिः प्रसिद्ध्यति ।
एवं व्युदस्यात्ममायां भिदामुपरमेन्मुनिः ।। ३८ ।।

'मनोमात्रं हरेर्यस्मान्मनसा मीयते जगत् ।
व्याप्ते मनसि विष्णोश्च स्थितत्वाद्वासनामयम् ।।

वस आच्छादनेत्यस्माद्धातोर्वा वासनामयम् ।
अतो विष्णोरनीहायां लीयते सकलं जगत् ।।

अनीहावस्थ एवासौ मुमुक्षुभिरवाप्यते ।
एवं विद्वान्बन्धशक्तिं व्युदस्य हरिमाप्नुते ।।

प्रकृतिर्भिदा च माया च भ्रमश्चेत्यभिधीयते ।
बन्धशक्तिर्यया लोको बम्भ्रमीत्यनिशं भुवि' ।।

इति तन्त्रसारे ।। ३७,३८ ।।

न यत्र निद्रा मूर्च्छा वा नार्थदृक् न मनोरथः ।
नानुवृत्तिर्न प्रलयस्तद् ब्रह्म विजितात्मनः ।। ३९ ।।

'अनुवृत्तिरिति प्राज्ञैर्जीवन्मुक्तिरुदीर्यते' । इति शब्दनिर्णये ।। ३९ ।।

तत्त्वं नरेन्द्र जगतामथ तस्थुषां च
देहेन्द्रियासुधिषणात्मभिरावृतानाम् ।
यः क्षेत्रवित् त्वमनयोर्हृदि विष्वगाधिः
प्रत्यक् चकास्ति भगवांस्तमवैहि सोऽस्ति ।। ४० ।।

'सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः ।
सर्वत्र विततत्वाद्वा सोऽहं त्वमिति चोच्यते ।
सर्वान्तर्यामकत्वात्तु न जीवात्मत्वतो हरिः' ।। इति तत्त्वनिर्णये ।।

त्वमनयोः स्थावरजङ्गमयोर्मध्ये एको जीवः विष्वगाधिः नानादुःखः सन्, हृदि स्थितमवैहि । अहं च स जीवोऽस्मि । ज्ञानान्महान् भवामि । यः क्षेत्रवित् ।। सर्वस्य प्रत्यक्चकास्ति स भगवानिति ।

'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत्' । इति शब्दनिर्णये ।।

'अभिमानस्त्वहङ्कार आत्मा चेत्यभिधीयते' । इति च ।। ४० ।।

यस्मिन्निदं सदसदात्मतया विभाति
मायाविवेकविधुतिः स्रजिवाहिबुद्धिः ।
तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वं
प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ।। ४१ ।।

'यत्स्वरूपतया भातमज्ञानां गगनादिकम् ।
विवेकज्ञानिनां रज्जौ सर्पमावद्विधूयते ।
तं नित्यमुक्तभावेन निरस्तप्रकृतिं भजेत्' ।। इति ज्ञानविवेके ।।

'न भ्रान्तिर्जगतो दृष्टिर्न भ्रान्तिर्हरिदर्शनम् ।
अन्योन्यात्मतया दृष्टिर्भ्रान्तिरित्यवधार्यताम्' ।। इति च ।

'मायेति ज्ञाननाम स्यान्मायेति प्रकृतिस्तथा ।
ज्ञानं स्वरूपं विष्णोस्तु प्रकृतिर्न हरेस्तनुः ।
एवं विवेकिनो विश्वं ब्रह्मरूपेण नेष्यते' ।। इति वाराहे ।।

ज्ञानप्रकृत्याख्यमायाद्वयस्य विवेकज्ञानात्सदसतोर्विष्ण्वात्मतया प्रतीतिः स्रज्यहिबुद्धिरिव विधूयत इत्यर्थः ।

'पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः ।
तथा न योगिराड्भ्रान्तो ज्ञानं देहो यतो हरेः' ।। इति षाड्गुण्ये ।। ४१ ।।

यत्पादपङ्कजपरागविलासभक्त्या
कर्माशयग्रथितमुद्ग्रथयन्ति सन्तः ।
तत्त्वं न तद् द्विमतयोऽपि विरुद्धमार्ग-
स्रोतोगुणास्तमरणं भज वासुदेवम् ।। ४२ ।।

द्विमतयः जगति भगवति च प्रतीतियुक्ता अपि भक्तिविशेषात्तत्त्वं नोद्ग्रथयन्ति । संसारगुणास्तेषां विरुद्धा एव प्रतीयन्ते यतः ।। ४२ ।।

वैन्यस्तु धुर्यो महतां संस्थित्याऽध्यात्मशिक्षया ।
आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ।। ५२ ।।

'नैजः सर्वगुणोत्कर्षः सर्वेभ्यो महदुच्यते' इति शब्दनिर्णये ।।५२।।

कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव ।
वात्सल्ये मनुवन्नॄणां प्रभुत्वे भगवानजः ।
बृहस्पतिर्ब्रह्मवादे आत्मतत्त्वे स्वयं हरिः ।। ६४ ।।

'अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः ।
एकस्तद्वेद भगवान्प्रभुर्नारायणः स्वराट्' ।। इति मोक्षधर्मेषु ।।६४।।

भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ।
ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यपरोद्यमे ।। ६५ ।।

कीर्त्योर्ध्वगीतयः पुंभिस्त्रैलोक्ये तत्र तत्र ह ।
प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव ।। ६६ ।।

'गुरुविप्रेषु भक्त्या च परेषां हितकृत्तया ।
प्रश्रयेण च कीर्त्या च पृथू राममनुव्रतः' ।। इति ब्रह्माण्डे ।

'न गुरुर्न च धर्मोऽस्ति रामदेवस्य कुत्रचित् ।
तथापि धर्मरक्षार्थं गुरुभक्तिमदर्शयत्' ।। इति वाराहे ।। ६७ ।।

।। इति श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे द्वाविंशोऽध्यायः ।।



## त्रयोविंशोऽध्यायः

तस्यानया भगवतः परिशुद्धकर्म-
सत्वात्मनस्तदनु संस्मरणानुपूर्व्या ।
ज्ञानं विरक्तिमदभून्निशितेन येन
चिच्छेद संशयपदं निजजीवकोशम् ।। ११ ।।

'आविर्भावतिरोभावौ ज्ञानस्य ज्ञानिनोऽपि तु ।
अपेक्ष्याज्ञस्तथा ज्ञानमुत्पन्नमिति चोच्यते' ।। इति तन्त्रसारे ।।११।।

छिन्नान्यधीरधिगतात्मगतिर्निरीह-
स्तत् तत्यजेऽच्छिनदिदं वयुनेन येन ।
तावन्न योगगतिभिर्यतिरप्रयत्नो
यावद् गदाग्रजकथासु रतिं न कुर्यात् ।। १२ ।।

'अपरोक्षतया वृत्तिज्ञानभेदनिरीक्षणम् ।
स्वरूपज्ञानसंस्थित्या ज्ञानत्याग उदीर्यते ।
स्वरूपज्ञानतः सम्यग्रतिर्विष्णुकथासु च' ।। इति ब्रह्मतर्के ।।१२।।

एवं स वीरप्रवरः संयोज्यात्मानमात्मनि ।
ब्रह्मभूतो दृढं काले तत्याज स्वकलेवरम् ।। १३ ।।

ब्रह्मणि भूतः ।। १३ ।।

उत्सर्पयन्नसून् मूर्ध्नि क्रमेणावेश्य निस्स्पृहः ।
वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् ।। १५ ।।

खान्याकाशे द्रवं तोये यथास्थानं विभागशः ।
क्षितिमम्भसि तत् तेजस्यदो वायौ नभस्यमुम् ।। १६ ।।

इन्द्रियाणि समस्तानि तन्मात्राणि यथोद्भवम् ।
भूतादिस्तान् समुत्क्षिप्य महत्यात्मनि सन्दधे ।। १७ ।।

तं सर्वगुणविन्यासं जीवे मायामये न्यधात् ।
तं चानुशयमात्मस्थमसावनुशयी पुमान् ।
ज्ञानवैराग्यवीर्येण स्वरूपस्थो व्यधात् प्रभुः ।। १८ ।।

'अस्येदं कारणमिति ज्ञानमेव विलापनम् ।
समाधिकाले विज्ञेयं देहादेर्दर्शनात्पुनः' ।। इति च ।।

'मायेति प्रकृतिश्चेति मायाजीवश्च कथ्यते ।
शेतेऽनुकेशवं यस्मात्तस्मादनुशयोऽपि च ।
एतैस्तु नामभिर्वाच्या श्रीर्विष्णोरनपायिनी ।।

तयै(थै)वानुशयी जीवस्तया बद्धो यतः सदा ।
पुरुषः शयनात्पूर्षु तथाऽहानादहं स्मृतः ।।

अप्राकृततनुत्वात्तु स्वरूपं हरिरुच्यते ।
नित्यचिद्दर्शनान्नित्यं ब्रह्म पूर्णत्वतः सदा' ।।

इति भागवततन्त्रे ।। १५-१८ ।।

देव्य ऊचुः –

अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् ।
सर्वात्मना पतिं भेजे यज्ञेशं श्रीवधूरिव ।। २५ ।।

‘अनपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैः’ ।।

इति शब्दनिर्णये ।। २५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे त्रयोविंशोऽध्यायः ।।



## चतुर्विंशोऽध्यायः

सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् ।
यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं सुष्ठ्वलंकृताम् ।
परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव ।। ११ ।।

विबुधासुरगन्धर्वमुनिसिद्धमहोरगाः ।
विजिताः स्युर्यया दिक्षु क्वणयन्त्यैव नूपुरैः ।। १२ ।।

‘राजपुत्रीं शुकीमग्निरावर्तन्तीं प्रदक्षिणम् ।
आदायान्तरधाद्दानसमये मन्मथातुरः’ ।। इति ब्राह्मे ।। ११-१२ ।।

स्वधर्मनिष्ठः शतजन्मभिः पुमान्
विरिञ्चतामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवं
पदं यथाऽहं विविधैः कलात्यये ।। २९ ।।

**मां** श्रियम् ।

‘ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु ।
त एव शतजन्मानि विशेषोपासका हरेः ।।

प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्राप्यानुमोदिताः ।
तया ततो हरिं यान्ति वसन्ति हरिसन्निधौ ।।

अनादिकालभक्ताश्च ज्ञानिनस्ते न संशयः ।
विशिष्टा ज्ञानभक्त्यादौ सर्वजीवनिकायतः ।।

सर्वदापि विशेषेण शतजन्मप्रयत्नतः ।
स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यते ।।

तथैव चत्वारिंशद्भिः पदं शैवं च जन्मभिः ।
विंशद्भिरैन्द्रं दशभिरन्येषामप्युदीरितम्' ।। इति षाड्गुण्ये ।। २९ ।।

अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ।। ३० ।।

अथ एवमनादिभक्तोऽहं यतः अतः प्रिया यूयम् ।। ३० ।।

रुद्र उवाच –

जितं व आत्मविद्धुर्याः स्वस्तये स्वस्तिरस्तु वः ।
भवतां राधसे राध्यं सर्वस्मा आत्मने नमः ।। ३३ ।।

'सर्वान्तर्यामिकत्वात्तु सर्वनामा जनार्दनः ।
न तु सर्वस्वरूपत्वात्सर्वेशोऽसौ हरिर्यतः' ।। इति ब्रह्मतर्के ।।३३।।

भवान् भक्तिमतां लभ्यो दुर्लभः सर्वदेहिनाम् ।
स्वाराज्यस्याप्यभिमता एकान्तेनात्मविद्गतिः ।। ५४ ।।

**स्वाराज्यस्य** इन्द्रादेः ।। ५४ ।।

क्षणार्धेनाऽपि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ५७ ॥

'सङ्गो भागवतैर्भूयानपुनर्भवमात्रतः ।
यतो विशिष्टमानन्दं मुक्तौ जनयति स्फुटम्' ॥ इति च ॥ ५७ ॥

अथानघाङ्घ्र्योस्तव कीर्तितीर्थयो-
रन्तर्बहिः स्नानविधूतपाप्मनाम् ।
भूतेष्वनुक्रोशसुसत्त्वशीलिनां
स्यात् सङ्गमोऽनुग्रह एष नस्तव ॥ ५८ ॥

**अङ्घ्र्योर्जातयोः** कीर्तितीर्थयोः ॥ ५८ ॥

यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् ।
न त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥ ६० ॥

**विश्वस्मिन्** स्थितमपि न भात्यज्ञानाम् ॥ ६० ॥

यो माययेदं पुरुरूपयाऽसृजद्
बिभर्ति भूयः क्षपयत्यविक्रियः ।
यद्भेदबुद्धिः सदिवाऽऽत्मसंस्थया
तमात्मतन्त्रं भगवन् प्रतीमहि ॥ ६१ ॥

यस्य जीवादिभ्यो भेदबुद्धिः । स दिवा सम्यग्ज्ञानं सम्यग्ज्ञानिविषया सत्यैवेत्यर्थः ।

'रात्रिरज्ञानमुद्दिष्टं सम्यग्ज्ञानं दिवा स्मृतम्' । इति शब्दनिर्णये ॥

'जीवेभ्यो जडतश्चैव भेदज्ञानं हरेः सदा ।
वास्तवं ज्ञानमुद्दिष्टं तेन मुक्तिरवाप्यते' ।। इति षाड्गुण्ये ।। ६१ ।।

क्रियाकलापैरिदमेव योगिनः
श्रद्धान्विताः साधु यजन्ति सिद्धये ।
भूतेन्द्रियान्तःकरणोपलक्षणं
वेदे च तन्त्रे च त एव कोविदाः ।। ६२ ।।

भूतेन्द्रियान्तःकरणैरुपलक्ष्यते ।। ६२ ।।

त्वमेक आद्यः पुरुषः सुप्तशक्ति-
स्तया रजः सत्त्वतमो विभिद्यते ।
महानहं खं मरुदग्निवार्धराः
सुरर्षयो भूतगणा इदं यतः ।। ६३ ।।

**सुप्तशक्तिः** स्वात्मन्येवाप्तशक्तिः ।

'प्रकृतेः स्वाप उद्दिष्टो हर्यन्यस्य त्वदर्शनम् ।
विशेषेण हरौ चापि रतिर्ज्ञानात्मिका यतः' ।।
इति सत्यसंहितायाम् ।। ६३ ।।

सृष्टं स्वशक्त्येदमनुप्रविश्य
चतुर्विधं पुरमात्मांशकेन ।
अथो विदुस्त्वां पुरुषं सन्तमत्र
भुङ्क्ते हृषीकैर्मधु सारघं यतः ।। ६४ ।।

'अवधारणे घशब्दःस्यात्सारमात्रं तु सारघम्' ।

इति शब्दनिर्णये ।। ६४ ।।

कस्त्वत्पदाब्जं विजहाति पण्डितो
यत् ते पुमानप्ययमब्जकेतनः ।
विशङ्कयाऽस्मद्गुरुरर्चति स्म यद्
विनोपपत्तिं मनवश्चतुर्दश ।। ६७ ।।

अस्मादेतद्भवतीत्युपपत्त्यपेक्षां विनापि स्वभावत एव ।। ६७ ।।

यत्स्पृष्टोऽहरहर्मुक्तक्लेशः शेतेऽमृताम्बुधौ ।
तावद् वेदाथ तत् तेऽङ्घ्रिं जनो नु स्मरते च तत् ।। ६८ ।।

अहरहः क्लेशमोक्षः सुप्तौ । तावद्वेदेत्याक्षेपो दौर्लभ्यज्ञापनार्थम् ।।६८।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे चतुर्विंशोऽध्यायः ।।



## पञ्चविंशोऽध्यायः

प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तमानसम् ।
नारदोऽध्यात्मतत्वज्ञः कृपालुः प्रत्यबोधयत् ।। ३ ।।

नारद उवाच–

श्रेयस्त्वं कतमद् राजन् कर्मणाऽऽत्मन ईहसे ।
दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते ।। ४ ।।

प्राचीनबर्हिरुवाच–

न जानामि महाभाग परं कर्मापविद्धधीः ।
ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ।। ५ ।।

भो भो प्रजापते राजन् पशून् पश्य त्वयाऽध्वरे ।
संज्ञापितान् जीवसङ्घान् निर्घृणेन सहस्रशः ।। ७ ।।

एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव ।
सम्परेतमयः कूटैश्छिन्दन्त्युत्थितमन्यवः ।। ८ ।।

'यथावत्कर्म कर्तुस्तु ज्ञानसाहाय्यकारकम् ।
अन्यथाकुर्वतः कर्म निरयाय भविष्यति ।।

तथापि कर्म निन्दन्ति न यतः कर्तुमञ्जसा ।
शक्यं ज्ञानफलस्यापि बहुत्वान्मोहनाय च' ।। इति ब्रह्माण्डे ।।३-८।।

आसीत् पुरञ्जनो नाम राजा राजन् बृहच्छ्रवाः ।
तस्याविज्ञातनामाऽऽसीत् सखाऽविज्ञातचेष्टितः ।। १० ।।

स एकदा हिमवतो दक्षिणेष्वथ सानुषु ।
ददर्श नवभिर्द्वारैः पुरीं लक्षितलक्षणाम् ।। १३ ।।

'देवजीवाभिमानी तु ब्रह्मैव तु चतुर्मुखः ।
मानुषाणां तु जीवानामभिमानी पुरञ्जनः ।।

स तु राजा हरेः पुत्रस्त्वासुराणां कलिः स्वयम् ।
जीवसंसृतिवत्तस्मात्पुरञ्जनकथाऽपि तु ।।

तस्माज्जीवसृतिज्ञप्त्यै पुरञ्जनकथां मुनिः ।
नारदोऽश्रावयद्विद्वान्नृपं प्राचीनबर्हिषम् ।।

प्रायस्तु तत्कथा जीवे स्थिता प्रत्येकशोऽपि तु ।
प्रत्येकं यत्तु युज्येत तदुन्नेयं यथा तथा ।।

उक्तं भागवतेऽप्येतत्पुराणे यावदिष्यते ।
प्रत्येकशस्तु जीवानां तदन्यत्तस्य केवलम्' ।।

इति तन्त्रभागवते ।। १०,१३ ।।

यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमाम् ।
भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः ।। २० ।।

तेषां परिवृढो राजन् सर्वेषां बलिमुद्वहन् ।
सखीकाणां सखा तस्या बहुरूपोऽग्रणीः स्त्रियः ।। २१ ।।

नारद उवाच–

इति तौ दम्पती तत्र समुह्य(द्य) समयं मिथः ।
तां प्रविश्य पुरीं राजन् मुमुदाते शतं समाः ।। ४४ ।।

'ये पुरञ्जनभृत्याद्या भार्याद्याः सर्व एव च ।
तेऽपि मानुषबुध्यादेर्विज्ञेया अभिमानिनः ।।

गायत्र्याद्यास्तु देवानां तेऽपि चैतेषु संस्थिताः ।
अलक्ष्मीद्वापराद्यास्तु आसुरास्तेऽपि मानुषाः' ।।

इति च ।। २०,२१,४४ ।।

पितृभूर्नृप पुर्या द्वा दक्षिणेन पुरञ्जनः ।
राष्ट्रं दक्षिणपाञ्चालं याति श्रुतधरान्वितः ।। ५१ ।।

देवभूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः ।
राष्ट्रमुत्तरपाञ्चालं याति श्रुतधरान्वितः ।। ५२ ।।

'दक्षिणश्रोत्रमार्गेण देवलोकं व्रजत्यसौ ।
वामश्रोत्रेण पितृणामिति वेदविदो विदुः' ।।
इति प्रवृत्तितन्त्रे ।। ५१,५२ ।।

।। इति श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे पञ्चविंशोऽध्यायः ।।



## षड्विंशोऽध्यायः

तीर्थेषु श्रुतिदृष्टेषु राजा मेध्यपशून्वने ।
यावदर्थमलं लुब्धो हन्यादिति नियम्यते ।। ६ ।।

य एवं कर्म नियतं विद्वान् कुर्वीत वा न वा ।
कर्मणा तेन राजेन्द्र ज्ञानेन स न लिप्यते ।। ७ ।।

अलुब्धो लोकोपकारार्थं घ्नन्नात्मार्थादधिकमपि हन्यात् ।

'उपकारः सतां येन तत्कृत्वा नैव दुष्यति ।
अतीव निन्दितमपि बहुहिंसायुगेव वा ।
अथवा ज्ञानिनः कर्म न दुष्टमपि लिप्यते' ।। इत्यध्यात्मे ।।६-७।।

।। इति श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे षड्विंशोऽध्यायः ।।

## सप्तविंशोऽध्यायः

द्वाविमावनुशोचन्ति बालावसदवग्रहौ ।
यो लोकशास्त्रोपनतं न राति न तदिच्छति ।। २९ ।।

'अलौकिकं च शास्त्रीयं कर्तव्यं लौकिकं कुतः ।
लोकार्थं शास्त्रहा याति निरयं त्वितरः सुरान्' ।। इति पाद्मे ।।२९।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे सप्तविंशोऽध्यायः ।।



## अष्टाविंशोऽध्यायः

स व्यापकतयाऽऽत्मानं व्यतिरिक्ततयाऽऽत्मनि ।
विद्वान् स्वप्न इवामृश्य साक्षिणं विरराम ह ।। ४० ।।

'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति' । इति श्रुतिप्रसिद्धः । स्वप्न इवेति दृष्टान्तत्वेनोच्यते । स्वप्ने हि जीवस्यास्वातन्त्र्यं प्रसिद्धम् । अतस्तत्र परमेश्वराधीनत्वं प्रसिद्धमेव । अतो जीवव्यतिरिक्त ईश्वरः सिद्धः।

'स्वप्नो यतो न स्वतन्त्रस्तत्र तद्दर्शकः परः ।
जीवादन्यस्तु विज्ञेयः स विष्णुरवधार्यताम्' ।। इति वाराहे ।।४०।।

पञ्चेन्द्रियार्था आरामा द्वारो प्राणादयः प्रभो ।
तेजोबन्नानि कोष्ठानि गोलकेन्द्रियसंग्रहः ।। ५७ ।।

इन्द्रियाणि यत्र सङ्गृह्यन्ते स गोलकेन्द्रियसङ्ग्रहः ।। ५७ ।।

अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भो ।
न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ।। ६२ ।।

'जीवसत्ताप्रदत्वाच्च सदृशत्वाच्च केशवः ।
कथ्यते तदभेदेन न तु जीवः स्वरूपतः' ।। इति च ।। ६२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे अष्टाविंशोऽध्यायः ।।



## एकोनत्रिंशोऽध्यायः

पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः ।
आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ।। २० ।।

'सुखवद्दूरतो दृश्यं तत्काले दुःखमेव यत् ।
मृगतृष्णेत्यतः प्राहुर्भोगं वैषयिकं बुधाः' ।। इति शब्दनिर्णये ।।२०।।

दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु ।
जीवस्य न व्यवच्छेदः स्याच्चेत् तत् तत्प्रतिक्रिया ।। ३३ ।।

**तत्प्रतिक्रियाऽपि** दुःखमेव ।। ३३ ।।

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा ।। ३६ ।।

'संसृतेः स्वप्नसाम्यं तु यथार्थज्ञानवर्जनम्' ।। इति च ।

'जाग्रत्यविद्यमानं तु देहात्मत्वादि केवलम् ।
अविद्यमानं स्वप्ने तु जाग्रत्त्वज्ञानमेव च' ।। इति षाड्गुण्ये ।।३६।।

**प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः ।
दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ।। ४३ ।।**

'प्रजापतिपतिर्ब्रह्मा विरिञ्चश्चेति कथ्यते' । इति शब्दनिर्णये ।।४३।।

**शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे ।
मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ।। ४६ ।।**

'मन्त्रलिङ्गैर्व्यवच्छिन्नं वेदशब्दोक्तमात्रकम् ।

वेदो वदन्नपि हरिं न सम्यग्वक्ति कुत्रचित् ।
नाऽरोहयत्यनुभवमप्रसिद्धस्वरूपतः ।।

अथाप्यनुभवारोहः प्रसन्ने केशवे भवेत् ।
किञ्चिदेव सुसम्यक् च स्वयं त्वनुभवत्यमुम्' ।। इति वाराहे ।।४६।।

**यदा यस्यानुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ।। ४९ ।।**

'यदा त्वनुभवी भूयाच्छब्दमात्रानुरोधनम् ।
त्यक्त्वाऽथ तं विदुः प्राज्ञास्त्यक्तवेद इति स्म ह ।।

यदैव त्यक्तवेदः स्यादथास्मान्मुच्यते भयात् ।
प्रायस्तु वैदिका एव रुद्राद्या अपि वै पुरा ।।

वैदिकस्त्यक्तवेदश्च ब्रह्मैवैकः प्रजापतिः ।
ततस्तु केशवं भक्त्या सम्पूज्य बहुजन्मसु ।
त्यक्तवेदत्वमापन्नाः प्रसादात्परमेष्ठिनः' ।। इति महासंहितायाम् ।

'केवलं वेदशब्देन जानन्वैदिक उच्यते ।
वेदं विनाप्यनुभवाज्ज्ञानंस्तु त्यक्तवैदिकः' ।। इत्यध्यात्मे ।।

'तत्त्वं वेदानुसारेण चिन्तयन्वैदिको भवेत् ।
वेद ऊहामनुसरेद्यस्य स त्यक्तवैदिकः' ।। इति षाड्गुण्ये ।। ४९ ।।

स त्वं विचक्ष्व मृगचेष्टितमात्मनोऽन्त-
श्चित्तं नियच्छ हृदि कर्णधुनीं च चित्तिम् ।
जह्यङ्गनाश्रममसत्तमयूथगाथं
प्रीणीहि हंसशरणं विरम क्रमेण ।। ५७ ।।

'चित्तिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारणम्' ।। इति शब्दनिर्णये ।।

एकं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तरम् ।
एष चेतनया युक्तो जीव इत्यभिधीयते ।। ७६ ।।

'प्राणेन्द्रियान्तःकरणभेदेन त्रिविधं मतम् ।
पञ्च पञ्चैव ते सर्वे प्राणबुद्धीन्द्रियाणि च ।।

कर्मेन्द्रियाणि च तथा तस्मात्पञ्चविधं स्मृतम् ।
लिङ्गं षोडशकं प्राहुर्मनसा सह तत्पुनः' ।। इति ब्राह्मे ।। ७६ ।।

भक्तिः कृष्णे दया जीवेष्वकुण्ठज्ञानमात्मनि ।
यदि स्यादात्मनो भूयादपवर्गस्तु संसृतेः ।। ८२ ।।

'देहादिव्यतिरेकेण चिद्रूपोऽहमिति स्फुटम् ।
सदैवानुभवो भक्तिर्विष्णौ तद्दर्शनादनु ।
यस्यासौ मुच्यते क्षिप्रं संसारान्नात्र संशयः' ।। इति हरिवंशेषु ।।८२।।

**अदृष्टं दृष्टवन्नङ्क्ष्येद्भूतं स्वप्नवदन्यथा ।**
**भूतं भवद् भविष्यच्च सुप्तं सर्वरहो रहः ।। ८३ ।।**

'संसारस्थमिदं सर्वमनित्यत्वाद्वृथा यतः ।
अतः प्राहुः स्वप्नसमं प्राज्ञा जगदिदं मृषा' ।। इति विष्णुसंहितायाम्
।

'सुषुप्तिस्वप्नयोश्चैव स्वर्गव्योम्नोस्तथैव च ।
अन्योन्यनामता ज्ञेया मनोबुद्ध्योस्तथैव च' ।। इति शब्दनिर्णये ।।

अतो भूतं भवत् भविष्यच्च स्वप्न इत्यर्थः ।

'रहो ब्रह्म तथा यज्ञः स्वः सत्यमिति गीयते' । इति च ।। ८३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे एकोनत्रिंशोऽध्यायः ।।



## त्रिंशोऽध्यायः

**मैत्रेय उवाच–**

**प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः ।**
**जपयज्ञेन तपसा पुरञ्जनमतोषयन् ।। ३ ।।**

'पुरेषु त्वञ्जनाज्जीवः पुरञ्जन इतीरितः ।
पुराणां जननाद्विष्णुर्व्यञ्जकत्वं तयोरपि' ।। इति तन्त्रभागवते ।।३।।

**दिव्यवर्षसहस्राणां सहस्रमहतौजसः ।**
**भौमान् भोक्ष्यथ भोगान् वै दिव्यांश्चानुग्रहान्मम ।। १७ ।।**

दिव्यवर्षसहस्राणामिति सहस्रशब्दो बहुत्ववाची ।

'मानुषाणां वत्सराणां लक्षद्वादशकं पुरा ।
प्रचेतोभिरियं पृथ्वी पालिताऽव्याहतेन्द्रियैः' ।। इति ब्रह्माण्डे ।।१७।।

**न व्यवह्रियते यज्ञो ब्रह्मैतद् ब्रह्मवादिभिः ।**
**न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ।। २० ।।**

यज्ञो ब्रह्म विष्णवाख्यं ब्रह्म यथानुभवं न व्यवह्रियते ।

'सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः' । इति भारते ।।२०।।

**शुद्धाय शान्ताय नमः स्वनिष्ठमनस्यपार्थे विलसद्द्वयाय ।**
**नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय ।।२३।।**

सु अनिष्ठमनसि ।

'अनवस्थितबुद्धीनां द्वितीयं दृश्यते हरेः ।
सम्यक्स्वस्थितबुद्धीनामिदं सर्वं हरेर्वशे' इति च ।

'नित्यं गृहीताः सत्वाद्या विग्रहाश्च त्रयः सदा ।
ज्ञानानन्दात्मकास्ते तु विग्रहा निर्गुणास्तथा ।
द्वौ तत्र ब्रह्मरुद्रस्थावेको वैकुण्ठधामगः' ।। इति प्रवृत्तसंहितायाम् ।।

नमो विशुद्धसत्त्वाय हरये हरिमेधसे ।
वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् ।। २४ ।।

'हरणाज्ज्ञानरूपत्वाद्धरिमेधा विभुः स्मृतः' ।। इति च ।।

'हरिः सर्वगुणात्मत्वात्सत्व इत्यभिधीयते' । इति षाड्गुण्ये ।।२४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे त्रिंशोऽध्यायः ।।



## एकत्रिंशोऽध्यायः

दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा ।
प्रतीच्यां दिशि वेलायां सिद्धोऽभूद् यत्र जाजलिः ।। २ ।।

'पारिव्राज्यं ब्रह्मसत्रं न्यास इत्यभिधीयते' । इत्यभिधानम् ।।

सर्वभूतात्मनि हरौ मेधा यत्र तद्ब्रह्मसत्रं सर्वभूतात्ममेधः ।

'हरिमेधास्तु संन्यासो हरौ मेधाऽत्र यद्भवेत्' । इति षाड्गुण्ये ।।२।।

श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थितः ।
सर्वेषामपि भूतानां हरिरात्माऽऽत्मदः प्रियः ।। १३ ।।

तावत्पर्यन्तमेव फलमित्यवधिः ।। १३ ।।

एतत् परं तज्जगदात्मनः पदं
सकृद् विभातं सवितुर्यथा प्रभा ।

यदाऽसवो जाग्रति सुप्तवृत्तयो
द्रव्यक्रियाकारकविभ्रमात्ययः ।। १६ ।।

'आत्मभावः शरीरे तु द्रव्यभ्रम उदाहृतः ।
क्रियाभ्रमस्त्वहं कर्ता मदीयानीन्द्रियाणि तु ।।

कारकभ्रम इत्युक्तस्त एते विभ्रमा यदा ।
श्वासादिवृत्तिलोपेन प्राणा उद्योगिनस्तदा ।।

विलीयन्ते प्राणभक्त्या नित्यं स्वापवतां स्फुटम् ।
उद्योग एव जाग्रत्स्याद्योगिनां मुक्तिसिद्धये' ।। इत्यध्यात्मे ।। १६

तेनैकमात्मानमशेषदेहिनां कालं प्रधानं पुरुषं परेशम् ।
स्वतेजसा ध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा ।। १८

'पूर्णो विष्णुः स एवैक इति भावो य ईरितः ।
आत्मैकभाव इति तं विदुर्ब्रह्मात्मदर्शिनः' ।। इति सत्यसंहितायाम्

निरस्तसङ्कल्पविकल्पमद्वयं
द्वयापवादोपरमोपलम्भनम् ।
अनादिमध्यान्तमजस्रनिर्वृतिं
संज्ञप्तिमात्रं भजतामुया दृशा ।। १९ ।।

'सङ्कल्पश्च विकल्पश्च ऋते विष्णुप्रसादतः ।
नैव सम्भवतो विष्णोः समाभावात्तु सोऽद्वयः' ।। इति तन्त्रभागवते

न भजति कुमनीषिणां स इज्यां
हरिरधनात्मधनप्रियो रसज्ञः ।

श्रुतधनकुलकर्मणां मदैर्ये
विदधति पापमकिञ्चनेषु सत्सु ॥ २२ ॥

अधनाश्च त एवात्मधनाश्चाधनात्मधनाः ॥ २२ ॥

श्रियमनुचरतीं तदर्थिनश्च
द्विपदपतीन् विबुधांश्च यः स्वपूर्णः ।
न भजति निजभृत्यवर्गतन्त्रः
कथममुमुद्विसृजेत् पुमान् कृतज्ञः ॥ २३ ॥

'श्रियं देवांश्च भृत्यत्वान्मनुते बहु केशवः ।
नात्मार्थाय यतस्ते तु भक्त्या सर्वोत्तमोत्तमाः' ॥ इति च ॥२३॥

तत् परं सर्वधिष्ण्येभ्यो मायाधिष्ठितमारुहत् ।
मुनयोऽद्याप्युदीक्षन्ते परं नापुरवाङ् नृपाः ॥ २६ ॥

'सर्वोत्तमत्वाद्विष्णुर्हि माय इत्येव शब्द्यते' । इति व्योमसंहितायाम् ।

'देवानत्युत्तममुनीन्विना के शैंशुमारकम् ।
हरेर्गृहं प्रविष्टास्तु ध्रुवो देवाश्च तद्गताः' ॥ इति मात्स्ये ॥ २६ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये चतुर्थस्कन्धे एकत्रिंशोऽध्यायः ॥

॥ चतुर्थः स्कन्धः समाप्तः ॥



# पञ्चमस्कन्धः

## प्रथमोऽध्यायः

त्वं त्वब्जनाभाङ्घ्रिसरोजकोश-
दुर्गाश्रितो निर्जितषट्सपत्नः ।
भुङ्क्ष्वेह भोगान् पुरुषातिसृष्टान्
विमुक्तसङ्गः प्रकृतिं भजस्व ।। १९ ।।

'विहितो यस्य यो धर्मो विष्णुना प्रभविष्णुना ।
तेन मुक्तिर्भवेत्तस्य तं गुरुर्वेद सर्ववित्' ।।

इति प्रवृत्तसंहितायाम् ।। १९ ।।

या वा इह तद्रथचरणनेमिकृतपरिखास्ताः सप्तसिन्धव आसन् यत एव कृता सप्तभुवो द्वीपाः ।। ३१ ।।

'पूर्वसृष्टान् रथावृत्त्या स्थूलांश्चक्रे प्रियव्रतः ।
समुद्रांस्तेन तत्कर्तेत्याहुरेनं प्रियव्रतम्' ।। इति गारुडे ।। ३१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे प्रथमोऽध्यायः ।।



## द्वितीयोऽध्यायः

का त्वं चिकीर्षसि च किं मुनिवर्य शैले
मायाऽसि काऽपि भगवत्परदेवतायाः ।

विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे
किं वा मृगान् मृगयसे विपिने प्रमत्तान् ।। ८ ।।

'परिहासप्रलापादिष्वनर्था वाग् भवेत् क्वचित्' ।
इति शब्दनिर्णये ।। ८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे द्वितीयोऽध्यायः ।।



## तृतीयोऽध्यायः

किञ्चायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि भगवन्तमुपधावति प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणं को वा ईहते ।। १४ ।।

श्रीभगवानुवाच–

अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्य आत्मजो मया सदृशो भूयादिति ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद्द्विजदेवकुलम् ।। १८ ।।

'नास्ति विष्णोः सम इति जानन्तोऽप्यृषयः सदा ।
तज्ज्ञापनाय लोकानामन्येषां प्रार्थयन् समम्' ।।
इति ब्रह्माण्डे ।। १४, १८ ।।

।। इति श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे तृतीयोऽध्यायः ।।

## चतुर्थोऽध्यायः

यस्य हीन्द्रः स्पर्धमानो भगवान् वर्षे न ववर्ष तदवधार्य भगवान् ऋषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्ववर्ष-माजनाभं नामाभ्यवर्षीत् ।। ३ ।।

'दुष्टानां मोहनार्थाय यज्ञ इन्द्रपदे स्थितः ।
पस्पर्ध ऋषभेणैव स्वरूपेण हरिः स्वयम्' ।। इति वाराहे ।। ३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे चतुर्थोऽध्यायः ।।



## पञ्चमोऽध्यायः

पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ।
तावत्क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ।।५।।

क्रियाफलं तावदेव । **कर्मात्मकं** कर्मवशम् ।। ५ ।।

एवं मनः कर्मवशं प्रयुङ्क्त अविद्ययात्मन्यवधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ।। ६ ।।

अविद्यया प्रयुङ्क्ते ।। ६ ।।

पुंसः स्त्रिया मिथुनीभाव एष तयोर्मिथो हृदयग्रन्थिमाहुः ।
यतो गृहक्षेत्रसुताप्तवित्तैर्जनस्य मोहोऽयमहं ममेति ।। ८ ।।

'ब्रह्माद्या याज्ञवल्क्याद्या मुच्यन्ते स्त्रीसहायिनः ।
बध्यन्ते केचनैतेषां विशेषं च विदो विदुः' ।। इति सत्यसंहितायाम् ।।८।।

हरौ गुरौ मयि भक्त्यानुवृत्त्या वितृष्णया द्वन्द्वतितिक्षया च ।
सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या ।।१०।।

'आत्मनो विहितं कर्म वर्जयित्वाऽन्यकर्मणः ।
कामस्य च परित्यागो निरीहेत्याहुरुत्तमाः' ।। इति च ।। १० ।।

सर्वत्र मद्भावविचक्षणेन
ज्ञानेन विज्ञानविराजितेन ।
योगेन धृत्युद्भवसत्वयुक्तो
लिङ्गं व्यपोहेत्कुशलोऽहमाख्यम् ।। १३ ।।

'सर्वस्मादुत्तमो विष्णुरिति ज्ञानमुदाहृतम् ।
प्रतिजीवं येन मुक्तिस्तद्विज्ञानं विदां मतम्' ।। इति च ।

'ज्ञानं विष्णोरुत्तमत्वे तदेव प्रतिपूरुषम् ।
विशेषेण तु विज्ञानं तच्च जानाति सर्ववित् ।।

द्वात्रिंशल्लक्षणैर्युक्तस्तीक्ष्णदंष्ट्रश्च सौम्यदृक् ।
घोररुक्चापि पुरुषः स सर्वज्ञ उदाहृतः' ।। इत्यध्यात्मे ।।

'षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः ।
सप्तपादश्चतुर्हस्तः स देवैरपि पूज्यते' ।। इति वायुप्रोक्ते ।।

'न्यग्रोधमण्डलो व्यामो बाहू न्यग्रोध उच्यते' ।। इति च ।।१३।।

तस्माद्भवन्तो हृदयेन जाताः सर्वे महीयांसममुं सुनाभम् ।
अक्लिष्टबुद्ध्या भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम् ।।२०।।

'नाभिरित्यथ नाम स्याद्धरेः सर्वाश्रयो यतः' । इति कौर्मे ।

तत्तस्य मम शुश्रूषणम् ।। २० ।।

देवासुरेभ्यो मघवान् प्रधानो
दक्षादयो ब्रह्मसुताश्च तेषाम् ।
भवः परः सोथ विरिञ्चिवीर्यः
स मत्परोऽहं द्विजदेवदेवः ।। २२ ।।

द्विजदेवानां देवः ।। २२ ।।

सर्वाणि मद्धिष्ण्यतया भवद्भि-
श्चराणि भूतानि सुता ध्रुवाणि ।
सम्भावितव्यानि पदेपदे वो
विविक्तदृष्टिस्तदुतार्हणं मे ।। २६ ।।

विविक्तदृष्टिर्जीवानां धिष्ण्यतया परमेश्वरस्य भेददृष्टिः ।

'उपपादयेत्परात्मानं जीवेभ्यो यः पदेपदे ।
भेदेनैव न चैतस्मात्प्रियो विष्णोस्तु कश्चन' ।। इति पाद्मे ।।
'यो हरेश्चैव जीवानां भेदवक्ता हरेः प्रियः' । इति च ।। २६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे पञ्चमोऽध्यायः ।।

## षष्ठोऽध्यायः

राजोवाच–

न नूनं भगवन्नात्मरामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हन्ति यदृच्छयोपगतानि ॥ १ ॥

ऋषिरुवाच–

सत्यमुक्तं किन्त्विह वा एके मनसो विस्रम्भमनवस्थानस्य घटकिराट इव न सङ्गच्छन्ति ॥ २ ॥

तथा चोक्तम्–

न कुर्यात्कस्यचित्सख्यं मनसि ह्यनवस्थिते ।
यद्विस्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम् ॥ ३ ॥

नित्यं ददाति कामस्य छिद्रं तदनु येऽरयः ।
योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥ ४ ॥

कामो मन्युर्मदो लोभः शोकमोहभयादयः ।
कर्मबन्धश्च यन्मूलः स्वीकुर्यात्को नु तद्बुधः ॥ ५ ॥

'महैश्वर्यस्वरूपो हि भगवानृषभो स्वराट् ।
नैश्वर्याणि स्वकीयानि ख्यापयामास सर्ववित् ॥

उत्तमानां ज्ञापनार्थं धर्मतत्त्वस्य केशवः ।
तेषामैश्वर्यभोगे हि मनः सक्तिं व्रजेद्यदि ॥

आनन्दो मुक्तिगो ह्रासं विकर्मकरणाद्व्रजेत् ।
धर्माधर्मविहीनोऽपि भगवानृषभस्ततः ।।

तेषां धर्मस्थापनार्थं नाविश्चक्रे परां स्थितिम् ।
देवानां नाशुभाद्ध्रासः शुभात्काचित्सुखोन्नतिः ।।

आधिकारिकजीवानामेवमन्येषु तद्द्वयम् ।
अल्पाधिकारिणां तत्र ह्रासोऽपि भवति ध्रुवम् ।।

अशुभाभावजोन्नाहो महाधीकारिणामपि ।
अशुभे कृते न भवति तारतम्याच्च स स्मृतः ।।

प्रजापाश्च तथा देवा महाधीकारिणः स्मृताः ।
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ।।

गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ता अनधीकारिणः परे' ।। इति ब्रह्माण्डे ।।१-५।।

अथैवमखिललोकपालललामो विलक्षणो जडवदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावो योगिनां साम्परायविधिमनुशिक्षयन्स्वकलेवरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थान्तरभावेनान्वीक्षमाण उपरतानुवृत्तिरुपरराम ।। ६ ।।

'विष्णोः कलेवरत्यागो भूत्यागोऽन्यो न विद्यते ।
कलेवरत्यागोऽन्येषां पञ्चत्वं समुदीरितम्' ।। इति कौर्मे ।।

**अनर्थान्तरभावेन** अर्थान्तरं नास्मीति मनसा ।। ६ ।।

तस्य ह वा एवं मुक्तलिङ्गस्य भगवत ऋषभस्य योगमायावसानो देह इमां जगतीमभिमानाभासेन चङ्क्रममाणः ।। ७ ।।

**अभिमानाभासेन** अभितो ज्ञानप्रकाशेन ॥ ७ ॥

एकदा तु काङ्कटकर्णाटकाद्दक्षिणकर्णाटकान् देशान् यदृच्छयोपगतः कुटचाचलोपवने आस्यकृताश्मकवल उन्माद इव मुक्तमूर्द्धजोऽसंवीत एव विचचार ॥ ८ ॥

अथ समीरवेगविधुतवेणुनिकर्षोपजातो दावानलस्तद्वनमालेलिहानः समन्तात् सह तेन ददाह ॥ ९ ॥

यस्य किलानुचरितमुपाकर्ण्य काङ्कटकर्णाटकानां दक्षिणकर्णाटकानां राजार्हतनामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथं पाषण्डमसमञ्जसं निजमनीषया मन्दः सम्प्रवर्त्तयिष्यते ॥ १० ॥

येन ह वा कलौ मनुजापसदा देवमायाविमोहिताः स्वविधिनियोगशौचाचारविहीना देवहेलनादीन्यपव्रतानि निजेच्छया गृह्णाना अस्नानानाचमनाशौचकेशोल्लुञ्चनादीनि कलिनाऽधर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति ॥ ११ ॥

तैरपि ह्यर्वाक्तनया निजलोकयात्रयाऽन्धपरम्परया त एवानाश्वस्थास्तमस्यन्धे स्वयमेव प्रपतिष्यन्ति ॥ १२ ॥

'ज्ञानानन्दात्मको देह ऋषभस्य महात्मनः ।
तादृशेनैव मनसा क्रमंस्तु कुटचाचले ॥

दावाग्निमनुविश्याथ तत्रस्थः प्रादहज्जगत् ।
एवमग्नेरभिव्यक्तस्तत्स्थो विष्णुः सनातनः ।।

ऋषभत्वेन सङ्गोप्य धर्मानद्यापि तत्रगः ।
आस्ते स वासुदेवात्मा वासुदेवोऽहमित्यजः ।।

सदा स्थितः स्थितिं तां तु शुश्रावार्हो दुरात्मवान् ।
पूर्वं तु पौण्ड्रको नाम वासुदेवः सुदुर्मतिः ।।

जातिस्मरो द्विधा शास्त्रं पाषण्डं निर्ममे नृपः ।
एकं तु वासुदेवाख्यं वासुदेवोऽहमित्यपि ।।

कुत्सितं वासुदेवत्वप्रतिपादकमात्मनः ।
लोकार्थं चापरमपि चकारार्हतनामकम् ।।

'तत्प्रशिष्यः क्रमुर्नाम न जानंस्तन्मतं परम् ।
वासुदेवात्मतां सर्वजीवानामवदत्कुधीः ।
क्रम्वाख्यं शास्त्रमकरोदभेदप्रतिपादकम् ।
कुशास्त्रं सर्ववेदानां विरुद्धं तामसालयम् ।
तद्दृष्ट्वाऽद्यापि वर्तन्ते वर्तिष्यन्ति कलौ तथा ।
अशौचा अव्रताचारा वासुदेवोऽहमित्यपि' ।। इति ब्राह्मे ।।८-१२।।

अहो भुवः सप्तसमुद्रवत्या
द्वीपेषु वर्षेष्वधिपुण्यमेतत् ।
गायन्ति यत्रत्यजना मुरारेः
कर्माणि भद्राण्यवतारवन्ति ।। १४ ।।

'विशेषाद्भारते पुण्यं चरेयुः पापमप्यथ ।
तथैव भगवद्भक्तिं पृथिव्यां नान्यवर्षगाः' ।। इति ब्रह्माण्डे ।।१४।।

को न्वस्य काष्ठामपरोऽनुगच्छे-
न्मनोरथेनाप्यभवाय योगी ।
यद्योगमायां स्पृहयन्त्युदस्तां
महत्तमा येन कृतप्रयत्नाः ।। १६ ।।

**योगमायां** योगमायाफलं बाह्यम् ।

'नित्योदस्ता योगशक्तिरनपेक्ष्यं फलं यतः ।
नित्यस्वरूपभूताऽपि बहिःफलविवर्जनात् ।
अकर्मेत्युच्यते यद्वन्मोक्षः फलविवर्जनात्' ।। इति पाद्मे ।। १६ ।।

यस्यामेव कवय आत्मानमविरतविविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्या ह्यापवर्गिकमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नैवाद्रियन्ते भागवतत्वेनैव परिसमाप्तसर्वार्थाः ।। १८ ।।

'नाद्रियन्ते तु ये मोक्षं पूर्वं तेषां परं सुखम् ।
स्वयोग्यं व्यज्यते मुक्तौ तच्चोक्तं तारतम्ययुक्' ।।
इति व्योमसंहितायाम् ।। १८ ।।

राजन् पतिर्गुरुरलं भवतां यदूनां
देवप्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो
मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् ।। १९ ।।

'ब्रह्मणोऽन्यस्य नो पूर्णां दद्याद्भक्तिं जनार्दनः ।
मुक्तिं ददाति सर्वेषां उच्चानां को ह्यधीशिता' ।।

इति ब्रह्मतर्के ।। १९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे षष्ठोऽध्यायः ।।



## सप्तमोऽध्यायः

परो रजाः सवितर्जातवेदो
वेदस्य गर्भो मनसेदं जजान ।
स्वरेतसाऽदः पुनराविश्य चष्टे
हंसं गृध्राणामृषभं सङ्गृणीमः ।। १३ ।।

'परोरजाऽरजस्कत्वात्त्रयीड्यत्वात्त्रयीसुतः ।
गुणात्ययात्तुरीयश्च जातवेदाश्च सर्ववित् ।।

हंसो दुःखादिहानेन जीवेशत्वाच्च गृध्रराट् ।
कालः सर्वनियन्तृत्वात्परमात्मा प्रकीर्तितः' ।।

इति तन्त्रनिरुक्ते ।। १३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे सप्तमोऽध्यायः ।।



## दशमोऽध्यायः

एवं बह्वबद्धमभिभाषमाणं नरदेवाभिमानिनं रजसा तमसाऽनुविद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पण्डितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा योगेश्वरचर्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह ।। ९ ।।

अशेषभगवत्प्रियाणां निकेतः स एव भरतो मानुषापेक्षया ।

'तत्कालस्थितभक्तेषु मानुषेष्वृषभात्मजः ।
वरोऽपि धिक्कृतो राज्ञा सुहृदा वैष्णवेष्वपि' ।। इति गारुडे ।। ९ ।।

ब्राह्मण उवाच–

त्वयोदितं व्यक्तमविप्रलब्धं
भर्तुः स मे स्याद्यदि वीर भारः ।
गन्तुर्यदि स्यादधिगम्यमध्वा
पीवेति चासौ न विदां प्रवादः ।। १० ।।

'भरणादिकृद्भरिरिति चिन्तयन्नृपमब्रवीत्' ।। इति च ।। १० ।।

स्थौल्यं कार्श्यं व्याधय आधयश्च
क्षुत्तृड्भयं कलिरिच्छा जरा च ।
निद्राऽरतिर्मन्युरहंमदश्च
देहेन जातस्य हि मे न सन्ति ।। ११ ।।

**देहेन जातस्य** देहाभिमानिनः ।

'देहमानी देहजातो विदेहो मानवर्जितः' । इति च ।।

जीवन्मृतत्वं नियमेन राज-
न्नाद्यन्तवद्यद्विकृतस्य दृष्टम् ।
स्वस्वामिभावो ध्रुव एष यत्र
तर्ह्यच्युतेऽसाविति कृत्ययोगः ।। १२ ।।

विशेषबुद्धेर्विवरं मनाक् च
पश्यामि यन्न व्यवहारतोऽन्यत् ।
क ईश्वरस्तत्र किमीशितव्य-
मथापि राजन् करवाम किं ते ।। १३ ।।

'प्राणयुक्तेररत्या च जडं जीवन्मृतं स्मृतम्' । इति च ।

'स्वामित्वं तु हरेरेव मुख्यमन्यत्र भृत्यता ।
देवेषु तन्नियत्या च त्वदादेर्व्यावहारिकम् ।।

मानुषेषु विशेषः को व्यवहारमृते वद ।
व्यत्यासान्न हि देवेषु व्यत्यासः स्वामितां गतः' ।।

इति च ।। १२-१३ ।।

न विक्रिया विश्वसुहृत्सखस्य
साम्येन वीताभिमतेस्तवापि ।
महद्विमानात्स्वकृताद्धिमादृग्
ध्क्षत्यदूरादपि शूलपाणिः ।। २६ ।।

(ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथञ्चन । न पुनः सदवज्ञाने कल्पकोटि-शतैरपि) ।

'स्वतो महदवज्ञानाद्रुद्रोऽप्यात्मानमादहेत्' । इति च ।। २६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे दशमोऽध्यायः ।।



## एकादशोऽध्यायः

तथैव राजन्नुरुगार्हमेध-
वितानविद्योरुविजृम्भितेषु ।
न वेदवादेषु हि तत्त्ववादः
प्रायेण शुद्धो नु चकास्ति साधु ।। २ ।।

'न वेदेष्वल्पबुद्धीनां ब्रह्मतत्त्वं समीक्ष्यते ।
महाबुद्धिस्तु वेदेषु पश्येद् ब्रह्मैव केवलम्' ।। इति च ।। २ ।।

स वासनात्मा विषयोपरक्तो
गुणप्रवाहो विकृतः षोडशात्मा ।
चित्रं पृथङ्नामभी रूपभेद-
मन्तर्बहिष्टः स्वपुरैस्तनोति ।। ५ ।।

दुःखं सुखं व्यतिमिश्रं च तीव्रं
कालोपपन्नं फलमाव्यनक्ति ।
आलिङ्ग्य मायारचितान्तरात्मा
स्वदेहिनं संसृतिचक्रकूटम् ।। ६ ।।

स मायारचित अन्तरात्मा मनः ॥ ५-६ ॥

तावानयं व्यवहारः सदा वै
क्षेत्रज्ञसाक्ष्योर्भवति स्थूलसूक्ष्मः ।
तस्मान्मनोलिङ्गमदो वदन्ति
गुणागुणस्यास्य परावरस्य ॥ ७ ॥

'क्षेत्रवित्तु हरिः प्राणः साक्षी ताभ्यां पुमान्सरेत्' ॥ इति च ॥७॥

गुणानुरक्तं व्यसनाय जन्तोः
क्षेमाय नैर्गुण्यमथो मनः स्यात् ।
यथा प्रदीपो घृतवर्तिमास्थितो
स्थितिं स धूमां भजति ह्यन्यदा स्वम् ।
पदं तथा गुणकर्मानुबद्धं
बहिर्मनः श्रयतेऽन्यत्र तत्वम् ॥ ८ ॥

पदं विषयम् ॥ ८ ॥

एकादशासन्मनसोऽस्य वृत्ती-
राकूतयः पञ्च धियोऽभिमानाः ।
मात्राणि कर्माणि पुरं च तासां
वदन्ति हैकादश वीर भूमिम् ॥ ९ ॥

'एकादशेन्द्रियद्वारा स्युरेकादशवृत्तयः ।
शब्दाद्यास्तदभीमानास्तदिच्छाश्चैव पञ्चशः ।
स्पर्शान्तर्भावतः कर्मखानां नैव पृथग्गतिः ॥

एकादशैव चेष्टाः स्युरिन्द्रियाणां पृथक् पृथक् ।
गोलकास्तदधिष्ठानं चैकादश निगद्यते' ।। ९ ।।

गन्धाकृतिस्पर्शरसश्रवांसि
विसर्गगत्यत्त्यभिजल्पशिल्पाः ।
एकादशं स्वीकरणं ममेति
मायामहं द्वादशमेकमाहुः ।। ११ ।।

'एष संसृतिसंभारो द्वादशैवाथवा भवेत् ।
दशकं विषयाणां च ममाहमिति च द्वयम् ।
द्वयमेव ममाहं वा संसृतिस्त्वहमेव वा' । इति च ।
अत्तिरुपस्थविषयः ।। ११ ।।

द्रव्यस्वभावाशयकर्मकालै-
रेकादशामी मनसो विकाराः ।
सहस्रशः शतशः कोटिशश्च
क्षेत्रज्ञतो न मिथो न स्वतः स्युः ।। १२ ।।

द्रव्यं देहादिः । स्वभावो योग्यता । जीवस्य क्षेत्रज्ञतः स्युः । मिथः स्वतश्च न स्युः ।। १२ ।।

क्षेत्रज्ञ आत्मा पुरुषः पुराणः
साक्षात्स्वयं ज्योतिरजः परेशः ।
नारायणो भगवान्वासुदेवः
स्वमाययाऽऽत्मन्व्यवधीयमानः ।। १४ ।।

**स्वमाययाऽऽत्मन्व्यवधीयमानः** स्वेच्छया स्वस्मिन्नेव तिरोहितत्वेन स्थितः ।

'स्वात्माधारः स्वेच्छयैव जीवदृष्टेस्तिरोहितः ।
क्षेत्रज्ञेत्युच्यते विष्णुर्जीवस्थः पुरुषोत्तमः' ।। इति च ।। १४ ।।

भ्रातृव्यमेनं त्वमदभ्रवीर्य-
मुपेक्षयाऽप्येधितमप्रमत्तः ।
गुरोर्हरेश्चरणोपासनास्त्रो
जहि व्यलीकं स्वयमात्ममोहम् ।। १८ ।।

अभिमानादेव संसारोऽन्यथा नेति परिहारः ।। १८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे एकादशोऽध्यायः ।।



## द्वादशोऽध्यायः

ब्राह्मण उवाच–

अयं जनो नाम चलन्पृथिव्यां
यः पार्थिवः पार्थिव कस्य हेतोः ।
तस्यापि चाङ्घ्र्योरधि गुल्फजङ्घा-
जानूरुमध्योरशिरोधरांसाः ।। ५ ।।

अंसे च (अंसेऽधि) दार्वी शिबिका च यस्यां
सौवीरराजेत्यपदेश आस्ते ।
यस्मिन् भवान् रूढनिजाभिमानो
राजाऽस्मि सिन्धुष्विति दुर्मदान्धः ।। ६ ।।

यस्मान्मूलकारणभूतो विष्णुरेव । अतो मुख्यं सर्वकारणत्वं तस्यैव । मूलाश्रयविवक्षा यदि न स्यात्कुतः पृथिव्यां चलतीति व्यवहारः ? यतोऽवान्तराश्रया बहवः सन्त्यङ्ग्याद्याः ।। ५-६ ।।

शोच्यानिमांस्तानधिकस्तवाधि-
र्विष्ट्या निगृह्णन्निरनुग्रहोऽसि ।
जनस्य गोप्तेति विकत्थमानो
न शोभसे वृद्धसभासु दुष्टः ।। ७ ।।

एवं मूलगोमृत्वं च विष्णोरेव ।। ७ ।।

यदि क्षितावेव चराचरस्य
विदाम निष्ठां प्रभवं च नित्यम् ।
तन्नामतोऽन्यद्व्यवहारमात्रं
निरूप्यतां तत्क्रिययानु(मेयम्)तिष्ठन् ।। ८ ।।

एवं निरुक्तं क्षितिशब्दवृत्त-
मसन्निधानं परमाणवो ये ।
अविद्यया मनसा कल्पितास्ते
येषां समूहेन कृतो विशेषः ।। ९ ।।

आश्रयत्वात्क्षितिरिति निर्वचने क्षितिशब्दोऽपि तस्मिन्नेव ।। परमाणु-मात्रायाः पृथिव्या अयुक्तत्वात्परमाणवोऽप्यस्याविद्ययैवाधारत्वेन कल्पिताः ।। ८-९ ।।

एवं कृशं स्थूलमणुर्बृहद्य-
दसच्च सज्जीवमजीवमन्यत् ।
द्रव्यस्वभावाशयकालकर्म-
नाम्न्याऽजयाऽवैहि कृतं द्वितीयम् ।। १० ।।

ज्ञानं विशुद्धं परमार्थमेक-
मनन्तरं न बहिर्ब्रह्म सत्यम् ।
प्रत्यक् प्रशान्तं भगवच्छब्दवाच्यं
यद्वासुदेवं कवयो वदन्ति ।। ११ ।।

एवं सर्वं तथा प्रकृत्यैव कल्पितं विष्णोरन्यत् । एवं प्रकृत्याधारः स्वयमनन्याधारो विष्णुरेव । अतः सर्वशब्दाश्च तस्मिन्नेव ।

'राजा गोप्ताऽऽश्रयो भूमिः शरणं चेति लौकिकः ।
व्यवहारो न तत्सत्यं तयोर्ब्रह्माश्रयो विभुः ।
गोप्ता च तस्य प्रकृतिस्तस्या विष्णुः स्वयं प्रभुः ।
तव गोप्त्री तु पृथिवी न त्वं गोप्ता क्षितेः स्मृतः ।
अतः सर्वाश्रयश्चैव गोप्ता च हरिरीश्वरः ।
सर्वशब्दाभिधेयश्च शब्दवृत्तेर्हि कारणम् ।
सर्वान्तरः सर्वबहिरेक एव जनार्दनः ।
शिर आधारता यद्वद्ग्रीवायास्तद्वदेव तु ।

आश्रयत्वं च गोमृत्वमन्येषामुपचारतः' इति च ।। १०,११ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे द्वादशोऽध्यायः ।।



## त्रयोदशोऽध्यायः

तस्येमान् श्लोकान् गायन्ति ।

आर्षभस्येह राजर्षेर्मनसाऽपि महात्मनः ।
नानुवर्त्मार्हति नृपो मक्षिकेव गरुत्मतः ।। २८ ।।

ऋते हैहयवैन्यादीनार्षभस्येह कः समः ।
यस्योपदेशात्सिन्ध्वीशो ददर्श कपिलं प्रभुम् ।। इति च ।। २८ ।।

यज्ञाय धर्मपतये विधिनैपुणाय
योगाय साङ्ख्यशिरसे प्रकृतीश्वराय ।
नारायणाय हरये नम इत्युदारं
गायन्मृगत्वमपि यः समुदाजहार ।। २९ ।।

युज्यते अनेनेति योगो हरिः । साङ्ख्यशिरसे उत्तमज्ञानस्वरूपाय ।।२९।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे त्रयोदशोऽध्यायः ।।



## पञ्चदशोऽध्यायः

तस्येमां गाथां पाण्डवेय पुराविद उपगायन्ति ।
गयं नृपं कः प्रतियाति कर्मभि-
र्यज्वाभिमानी बहुविद्धर्मगोप्ता ।
सदागतश्रीः सदसस्पतिः सतां
सत्सेवकोऽन्यो भगवत्कलामृते ।। ७ ।।

'प्रियव्रतो गयश्चैव कर्मदेवसमो गुणैः' । इति षाड्गुण्ये ।। ७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे पञ्चदशोऽध्यायः ।।



## षोडशोऽध्यायः

तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं
तुरीयभागेन पुरोऽष्टावुपक्लृप्ताः ।। २९ ।।

'यथा भागवते तूक्तं भौवनं कोशलक्षणम् ।
तस्याविरोधतो योज्यं सर्वग्रन्थान्तरस्थितम् ।
मण्डोदे पूरणं चैव व्यत्यासं क्षीरसागरे ।
राहुसोमरवीणां च मण्डलाद्द्विगुणोक्तिताम् ।
विनैव सर्वमुन्नेयं योजना भेदतोऽत्र तु' ।। इति ब्रह्माण्डे ।। २९ ।।

।। इति श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे षोडशोऽध्यायः ।।



## सप्तदशोऽध्यायः

श्रीशुक उवाच–

तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठ-नखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिताखिलजगदघमलापहो-पस्पर्शनामला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोभिरभिधीय-मानातिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्धन्यवततार यत्तद्विष्णुपदमाहुः ।। १ ।।

'वाराहे वामपादं तु तदन्येषु तु दक्षिणम् ।
पादं कल्पेषु भगवानुज्जहार त्रिविक्रमः' ।। इति च ।। १ ।।

भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महा-पुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसंज्ञां आत्म-समाधिरूपेण सन्निधायैतदभिगृणन् भव उपधावति ।। १५ ।।

भव उवाच–

ॐ नमो भगवते महापुरुषाय सर्वगुणसङ्ख्यातायानन्ताया-व्यक्ताय नम इति ।। १६ ।।

'अनन्तान्तःस्थितो विष्णुरनन्तश्च सहामुना ।
पूज्यते गिरिशेनेश इलावृतगतेन तु' ।। इति च ।।

'जीवव्यपेक्षया चैव तथाऽन्तर्याम्यपेक्षया ।
मिश्रास्तु स्तुतयो ज्ञेया विष्णोरन्यत्र केवलम्' ।। इति च ।। १६ ।।

।। इति श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे सप्तदशोऽध्यायः ।।

## अष्टादशोऽध्यायः

विश्वोद्भवस्थाननिरोधकर्म ते
ह्यकर्तुरङ्गीकृतमप्यपावृतम् ।
युक्तं न चित्रं त्वयि कार्यकारणे
सर्वात्मनि व्यतिरिक्ते च वस्तुनि ।। ५ ।।

'अप्रयासेन कर्तृत्वमकर्तृत्वमिहोच्यते ।
महाशक्तित्वतस्तच्च युज्यते परमस्य तु' ।। इति तन्त्रसारे ।। ५ ।।

केतुमाले भगवान्कामदेवस्वरूपेणास्ते लक्ष्म्याः प्रियचिकीर्षया प्रजापतेर्दुहितॄणां च तद्वर्षपतीनां पुरुषायुषाऽहोरात्रपरिसङ्ख्यानानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजितमनसां विध्वस्ता व्यसवः संवत्सरान्ते निपतन्ति ।। १९ ।।

तद्भगवतो मायामयं रूपं परमसमाधियोगेन रमादेवी संवत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेताऽहस्सु तद्भर्तृभिरुपेतोपास्ते । इदं चोदाहरति ।। १७ ।।

'कामदेवस्थितं विष्णुमुपास्ते श्री रतिस्थिता ।
कामदेवं रतिश्चापि विष्णोस्तु प्राकृतां तनुम्' ।।
इति ब्रह्माण्डे ।। १९,१७ ।।

यं लोकपालाः किल मत्सरज्वरा
हित्वा यतन्तोऽपि पृथक्समेत्य च ।
पातुं न शेकुर्द्विपदश्चतुष्पदः
सरीसृपस्थास्नु यदत्र दृश्यते ।। २७ ।।

'स्पर्धन्त इव देवास्तु हरिणा यत्र कुत्रचित् ।
हरेरेवाज्ञया क्वापि दैत्यावेशादथापि वा' ।। इति च ।। २७ ।।

यद्रूपमेतन्निजमाययाऽर्पितं
अर्थस्वरूपं बहुरूपरूपितम् ।
सङ्ख्या न यस्यास्त्ययथोपलम्भना-
त्तस्मै नमस्तेऽव्यपदेशरूपिणे ।। ३१ ।।

उपलम्भनादयथा । यथा दृष्टं तथा न तिष्ठत्यन्यथाभवतीत्यर्थः ।।३१।।

जरायुजं स्वेदजमण्डजोद्भिजं
चराचरं देवर्षिपितृभूतभेदम् ।
द्यौः खं क्षितिः शैलसरित्समुद्र-
द्वीपग्रहर्क्षेत्यभिधेय एकः ।। ३२ ।।

'सर्वान्तर्यामिकत्वात्तु सर्वनामा हरिः स्वयम् ।
न तु सर्वस्वरूपत्वाद्रूपत्वमुपचारतः' ।। इति च ।। ३२ ।।

यस्मिन्नसंख्येयविशेषनाम-
रूपाकृतौ कविभिः कल्पितेयम् ।
सङ्ख्या यया तत्त्वदृशा विनीयते
तस्मै नमः सांख्यनिदर्शनाय हि ।। ३३ ।।

दशावतार इत्यादिसङ्ख्या विनीयते विशेषेण नीयते तज्ज्ञानं तद्रूपमेव हि
।। ३३ ।।

यस्य स्वरूपं कवयो विपश्चितो
गुणेषु योनिष्विव जातवेदसम् ।
मथ्नन्ति मथ्ना मनसा दिदृक्षवो
गूढं क्रियार्थैर्नम ईरितात्मने ।। ३६ ।।

**क्रियार्थैर्यज्ञाद्यर्थैरिन्द्रादिनामभिरीरितात्मने** ।। ३६ ।।

द्रव्यक्रियाहेत्वयनेशकर्तृभि-
र्मायागुणैर्वस्तुनिरीक्षितात्मने ।
तथैव तत्रातिशयात्मबुद्धिभि-
र्निरस्तमायाकृतये नमो नमः ।। ३७ ।।

**मायागुणैः** तदिच्छानुसारिभिः ।

'द्रव्येशः शङ्करः प्रोक्तः क्रियेशो गरुडः स्मृतः ।
कारणेशस्तथा ब्रह्मा वायुराधारपः स्मृतः' ।। इति ब्रह्मतर्के ।।३७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे अष्टादशोऽध्यायः ।।



## एकोनविंशोऽध्यायः

यथैहिकामुष्मिककामलम्पटः
सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान् कुकलेवरात्यया-
द्यस्तस्य यत्नः श्रम एव केवलम् ।। १४ ।।

तन्नः प्रभो त्वं कुकलेवरार्पितां
त्वन्माययाऽहं ममतामधोक्षज ।
भिन्द्याम येनाशु वयं सुदुर्भिदां
विधेहि योगं त्वयि नः सुभावितम् ।। इति ।। १५ ।।

'यस्य सम्यक्च भवति ज्ञानं भक्तिस्तथैव च ।
निश्चितस्तस्य मोक्षः स्यात्सर्वपापकृतोऽपि तु ।
यो ममत्वादिना दोषः स त्वन्यविषयः स्मृतः' ।।
इति च ।। १४-१५ ।।

यद्यत्र नः स्वर्गसुखावशेषितं
स्विष्टस्य दत्तस्य कृतस्य शोभनम् ।
तेनाब्जनाभस्मृतिजन्मनः स्या-
द्वर्षे हरिर्यद्भजतां शं तनोति ।। २८ ।।

'अनधीकारिणो देवाः स्वर्गस्था भारतोद्भवम् ।
वाञ्छन्त्यात्मविमोक्षार्थमुद्रेकार्थेऽधिकारिणः' ।। इति कौर्मे ।।२८।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे एकोनविंशोऽध्यायः ।।



## विंशोऽध्यायः

प्रत्नस्य विष्णो रूपं यत्सत्यर्तस्य ब्रह्मणः । अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति ।। ९ ।।

यस्य स्वरूपं कवयो विपश्चितो
गुणेषु योनिष्विव जातवेदसम् ।
मथ्नन्ति मथ्ना मनसा दिदृक्षवो
गूढं क्रियार्थैर्नम ईरितात्मने ।। ३६ ।।

**क्रियार्थैर्**यज्ञाद्यर्थैरिन्द्रादिनामभिरीरितात्मने ।। ३६ ।।

द्रव्यक्रियाहेत्वयनेशकर्तृभि-
र्मायागुणैर्वस्तुनिरीक्षितात्मने ।
तथैव तत्रातिशयात्मबुद्धिभि-
र्निरस्तमायाकृतये नमो नमः ।। ३७ ।।

**मायागुणैः** तदिच्छानुसारिभिः ।

'द्रव्येशः शङ्करः प्रोक्तः क्रियेशो गरुडः स्मृतः ।
कारणेशस्तथा ब्रह्मा वायुराधारपः स्मृतः' ।। इति ब्रह्मतर्के ।।३७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे अष्टादशोऽध्यायः ।।



## एकोनविंशोऽध्यायः

यथैहिकामुष्मिककामलम्पटः
सुतेषु दारेषु धनेषु चिन्तयन् ।
शङ्केत विद्वान् कुकलेवरात्यया-
द्यस्तस्य यत्नः श्रम एव केवलम् ।। १४ ।।

तन्नः प्रभो त्वं कुकलेवरार्पितां
त्वन्माययाऽहं ममतामधोक्षज ।
भिन्द्याम येनाशु वयं सुदुर्भिदां
विधेहि योगं त्वयि नः सुभावितम् ।। इति ।। १५ ।।

'यस्य सम्यक्च भवति ज्ञानं भक्तिस्तथैव च ।
निश्चितस्तस्य मोक्षः स्यात्सर्वपापकृतोऽपि तु ।
यो ममत्वादिना दोषः स त्वन्यविषयः स्मृतः' ।।
इति च ।। १४-१५ ।।

यद्यत्र नः स्वर्गसुखावशेषितं
स्विष्टस्य दत्तस्य कृतस्य शोभनम् ।
तेनाब्जनाभस्मृतिजन्मनः स्या-
द्वर्षे हरिर्यद्भजतां शं तनोति ।। २८ ।।

'अनधीकारिणो देवाः स्वर्गस्था भारतोद्भवम् ।
वाञ्छन्त्यात्मविमोक्षार्थमुद्रेकार्थेऽधिकारिणः' ।। इति कौर्मे ।।२८।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे एकोनविंशोऽध्यायः ।।



## विंशोऽध्यायः

प्रत्नस्य विष्णो रूपं यत्सत्यर्तस्य ब्रह्मणः । अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति ।। ५ ।।

'सूर्यसोमाग्निवारीरविधातृषु यथाक्रमम् ।
प्लक्षादिद्वीपसंस्थास्तु स्थितं हरिमुपासते' ।। इति च ।। ५ ।।

एवं परस्तात्क्षीरोदात्परित उपवेशितः शाकद्वीपो द्वात्रिंश-ल्लक्षयोजनायामः समानेन च दधिमण्डोदेन परित उपक्लृप्तः यस्मिन् शाको नाम महीरुहः स्वक्षेत्रव्यपदेशको यस्य ह महान्सुरभिगन्धस्तं द्वीपमनुवासयति ।। २४ ।।

'अनाम्लं तु दधि क्षीरं क्षीरं सान्द्रं तथा दधि' ।।
इति शब्दनिर्णये ।। २४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे विंशोऽध्यायः ।।



## द्वाविंशोऽध्यायः

ग्रहर्क्षताराममयमाधिदैविकं
रूपं हरेर्मंत्रकृतस्त्रिकालम् ।
नमस्यतः स्तुवतो नश्यते वै
स्वयं त्रिकालं कृतमाशु पापम् ।। ३२ ।।

'ज्ञानानन्दात्मके विष्णौ शिंशुमारवपुष्यथ ।
ऊर्ध्वलोकेषु संव्याप्त आदित्याद्यास्समाश्रिताः' ।।
इति ब्रह्माण्डे ।। ३२ ।।

।। इति श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे द्वाविंशोऽध्यायः ।।

## त्रयोविंशोऽध्यायः

**तस्यानुभावमिमं भगवान्स्वायंभुवो नारदः सह तुंबुरुणा सभायां ब्रह्मणः संश्लोकयामास ।। ४० ।।**

इलावृतस्थस्तुतिवत्पातालमूलस्थस्तुतिर्योजनीयाऽनन्तविषया ।। ४० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये पञ्चमस्कन्धे त्रयोविंशोऽध्यायः ।।

**।। पञ्चमः स्कन्धः समाप्तः ।।**



# षष्ठस्कन्धः

## प्रथमोऽध्यायः

यमदूता ऊचुः–

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।
वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम ।। ४० ।।

'वेदानां प्रथमो वक्ता हरिरेव यतो विभुः ।
अतो विष्ण्वात्मका वेदा इत्याहुर्वेदवादिनः' ।।

इति शब्दनिर्णये ।। ४० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे प्रथमोऽध्यायः ।।



## द्वितीयोऽध्यायः

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ।। १४ ।।

म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम् ।
अजामिलोऽप्यगान्मुक्तिं किमुत श्रद्धया गृणन् ।। ५२ ।।

नारायणोऽयमित्यन्यहेलनविषयत्वेनोक्तमघहरम् ।

'सर्वथाऽघहरं विष्णोर्नाम तद्भक्तिपूर्वकम् ।
अभक्त्योदाहृतं नैव फलदातृ भविष्यति ।
नामस्वामितया तस्य स्मरणं जायते यतः ।
भक्तस्यातो नामकीर्तिः सङ्केतादावपीरिता ।
अजामिलोऽपि स्मरणाद्भक्त्या मृत्योरमुच्यत' ।।

इति नारदीये ।। १४,५२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे द्वितीयोऽध्यायः ।।



## तृतीयोऽध्यायः

यम उवाच–

परो मदन्यो जगतस्तस्थुषश्च
ओतं प्रोतं पटवद् यत्र विश्वम् ।
यदंशतोऽस्य स्थितिजन्मनाशा
नस्योतवद् यस्य वशे च लोकः ।। १२ ।।

ओतं प्रोतं पटवत् ।

'यथा कन्थापटाः सूत्र ओताः प्रोताश्च संस्थिताः ।
एवं विष्णाविदं विश्वमोतं प्रोतं च संस्थितम्' ।। इति स्कान्दे ।। १२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे तृतीयोऽध्यायः ।।

## चतुर्थोऽध्यायः

न यस्य सख्यं पुरुषो वेत्ति सख्युः
सखा वसन् संवसतः पुरेऽस्मिन् ।
गुणो यथा गुणिनोऽव्यक्तदृष्टि-
स्तस्मै महेशाय नमस्करोमि ।। २४ ।।

गुणो यथा गुणिनः । कश्चित्पुरस्थितो गुणभूतः प्रधानभूतस्य राज्ञः ममासौ सखेति राज्ञा चिन्तितमपि न जानाति ।

'यथा राज्ञः प्रियत्वं तु भृत्यो वेद न चात्मनः ।
तथा जीवो न यत्सख्यं वेत्ति तस्मै नमोस्तु ते' ।।
इति स्कान्दे ।। २४ ।।

देहोऽसवोऽक्षा मनवो भूतमात्रा
नात्मानमन्यं च विदुः परं यत् ।
सर्वं पुमान् वेद गुणांश्च तज्ज्ञो
न वेद सर्वज्ञमनन्तमीडे ।। २५ ।।

'देहमानी वैश्रवणो मरुतः प्राणमानिनः ।
इन्द्राद्या इन्द्रियात्मानो रुद्रोऽन्तःकरणात्मकः ।
नैते विदन्ति स्वात्मानं परं वापि विमोहिताः ।
जीवाभिमानी ब्रह्मा तु सर्वं वेद प्रजापतिः ।
सोऽपि वेद हरिं नैव सम्यक्सैव हि सर्ववित्' ।। इति च ।। २५ ।।

यदोपरामो मनसो नामरूप-
रूपस्य दृष्टिस्मृतिसंप्रमोषात् ।

य ईयते केवलया स्वसंस्थया
हंसाय तस्मै शुचिसद्मने नमः ॥ २६ ॥

**केवलया स्वसंस्थया ।** स्वप्नसुषुप्त्यादौ मनस उपरमाज्जीवस्यास्वातन्त्र्यदर्शनेऽपि स्वप्नप्रबोधादिदर्शनादन्य ईश्वरस्तन्नियामकोऽस्तीति ज्ञायते । जीवेच्छाभावात्केवलत्वम् ।

'यदोपरामो मनसः स्वप्नसुप्तिलयादिषु ।
तदावस्थाप्रबोधादिकारणत्वेन केशवः ।
अस्वातन्त्र्यात्तु जीवस्य विद्यतेऽन्यो नियामकः ।
जीवप्रवृत्त्यानुकूल्याज्ज्ञायतेऽसौ तदा विभुः' ॥ इति हरिवंशेषु ॥२६॥

मनीषिणोऽन्तर्हृदि सन्निवेशितं
स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः ।
वह्निं यथा दारुणि पाञ्चदश्यं
मनीषया निष्कृषन्तीह गूढम् ॥ २७ ॥

इच्छादिरूपेण **त्रिवृद्भिः ।**

'इच्छादित्वेन त्रिविधा विमलाद्यास्तु शक्तयः ।
विष्णोः स्वरूपभूता यास्ताभ्यस्तन्नामिकाः पराः ।
जायन्ते तत्प्रसादेव ताश्च पीठे प्रपूजयेत् ।
तद्भिन्नजीवास्तस्यैव प्रसादात्तत्समीपगाः' ॥ इति तन्त्रनिर्णये ।

'दशेन्द्रियाणि च मनो बुद्धिप्राणप्रधानकाः ।
चतुर्दशैषां परमः पाञ्चदश्यो हरिः स्मृतः ।
बुद्धेर्भेदेन वैतेषु पाञ्चदश्योऽथ संस्थितेः' ॥ इति च ॥ २७ ॥

स वै ममाशेषविशेषमाया-
निषेधनिर्वाणसुखानुभूतिः ।
स सर्वनामा स च विश्वरूपः
प्रसीदतामनिरुक्तात्मशक्तिः ।। २८ ।।

'इयत्ता तु विशेषः स्यादानन्दादौ तदुज्झितेः ।
सर्वैर्विशेषै रहित उच्यते हरिरव्ययः ।
अप्राकृतस्वरूपत्वान्निर्मायश्चेति कथ्यते' ।। इति च ।

'तद्रूपसदृशं रूपं यतः सर्वस्य सर्वदा ।
सर्वरूपो यतः शब्दमुख्यार्थः सर्वनामकः' ।। इति च ।। २८ ।।

यद्यन्निरुक्तं वचसा निरूपितं
धियाऽक्षिभिर्वा मनसा वोत यस्य ।
मा भूत् स्वरूपं गुणरूपबृंहितं
स वै गुणापायनिसर्गलक्षणः ।। २९ ।।

अलौकिकत्वान्नो विष्णुर्निरुक्तो नो निरूपितः ।
तथापि वेदेषूक्तत्वादुक्तो रूपित एव च' ।।
इति व्योमसंहितायाम् ।। २९ ।।

यस्मिन् यतो येन च यस्य यस्मै
यं यो यथा कुरुते कार्यते वा ।
परावरेषां परमं प्राक् स्वसिद्धं
तद् ब्रह्म तद्धेतुरनन्यदेकम् ।। ३० ।।

सप्तविभक्त्यर्थस्य कालस्य प्रकारस्य च हेतुर्ब्रह्मैव ।

'विभक्त्यर्थस्य कालस्य प्रकाराणां च कारणम् ।
एक एव परो विष्णुः सर्वसत्ताप्रदत्वतः' ।। इति भविष्यत्पर्वणि ।।

'अनन्यः सदृशाभावादेको रूपाद्यभेदतः' ।। इति च ।। ३० ।।

अस्तीति नास्तीति च वस्तुनिष्ठयो-
रेकस्थयोर्भिन्नविरुद्धधर्मयोः ।
अपेक्षितं किञ्चन सांख्ययोगयोः
समं परं ह्यनुकूलं बृहत् तत् ।। ३२ ।।

'मदन्यो नास्ति सर्वेश इति विध्यासुरं मतम् ।
अस्तीति दैवमुभयोर्हरिरेव ह्यपेक्षितः ।
निषेधविध्योर्विषयः फलदाता च केशवः ।
तादृग्बुद्धेः कारणं च स्थानयोश्चोच्चनीचयोः' ।। इति च ।। ३२ ।।

योऽनुग्रहार्थं भजतां पादमूल-
मनामरूपो भगवाननन्तः ।
नामानि रूपाणि च जन्मकर्मभि-
र्भेजे स मह्यं परमः प्रसीदताम् ।। ३३ ।।

'तत्कर्मणामदृष्टत्वादनामा चाप्यदर्शनात् ।
अरूपस्त्ववतारेण रूपकर्माणि दर्शयेत् ।
नित्यरूपो नित्यकर्माऽप्यव्यक्तत्वमपेक्ष्य तु ।
अरूपकर्मेत्युदितो रूपकर्मोज्झितेर्न तु' ।। इति प्रकाशसंहितायाम् ।

'अनामा सोऽधिकार्थत्वादव्यक्तत्वादरूपकः ।
कंसारित्वादिसामर्थ्यो व्यक्तरूपोऽवतारगः' ।। इति च ।

'लोकदृष्ट्याधिकार्थानि मूलनामानि केशवे ।
अथ दामोदरादीनि लोकदृष्ट्या समानि तु ।
आनन्दोऽव्यक्तरूपस्तु मूलरूपमुदाहृतम् ।
स एव व्यक्तिमापन्नः प्रादुर्भाव उदीरितः' इति च ।। ३३ ।।

यः प्राकृतैर्ज्ञानपथैर्जनानां
यथाशयं देहगतो विभाति ।
यथाऽनिलः पार्थिवमाश्रितो गुणं
स ईश्वरो मे कुरुतान्मनोरथम् ।। ३४ ।।

'स्वदेहस्थं हरिं प्राहुरधमा जीवमेव तु ।
मध्यमाश्चाप्यनिर्णीतं जीवाद्भिन्नं जनार्दनम् ।
पूर्णानन्दादिगुणकं सर्वजीवविलक्षणम् ।
उत्तमास्तु हरिं प्राहुस्तारतम्येन तेषु च ।
बुद्धिशुध्यनुसारेण यथाप्राणं शरीरगम् ।
श्वासमात्रं जनाः प्राहुरनिर्णीतं च मध्यमाः ।
देवदेवेश्वरं सूत्रमानन्दं प्राणवेदिनः' इति च ।। ३४ ।।

ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः ।
विभूतयो मम ह्येता भूतानां भूतिहेतवः ।। ४५ ।।

'विशेषव्यक्तिपात्रत्वात् ब्रह्माद्यास्तु विभूतयः ।
तदन्तर्यामिणश्चैव मत्स्याद्या विभवाः स्मृताः' ।।
इति तन्त्रनिर्णये ।। ४५ ।।

तपो मे हृदयं ब्रह्म तनुर्विद्या क्रियाऽऽकृतिः ।
अङ्गानि क्रतवो जाता धर्म आत्माऽसवः सुराः ।। ४६ ।।

'तपोऽभिमानी रुद्रस्तु विष्णोर्हृदयमाश्रितः ।
विद्यारूपा तथैवोमा विष्णोस्तनुमुपाश्रिता ।
शृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः ।
अङ्गेषु क्रतवः सर्वे मध्यदेहे च धर्मराट् ।
प्राणे वायुश्चित्तगतो ब्रह्मान्याः खेषु देवताः' ।। इति च ।।

'यदाश्रितं यद्भवति तत्तन्नामकमीरितम्' ।। इति शब्दनिर्णये ।।४६।।

अहमेवेदमासाग्रे नान्यत् किञ्चान्तरं बहिः ।
संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ।। ४७ ।।

सञ्ज्ञानमात्रं यदिदं त्वया तपसा दृष्टं मम रूपं तदेवाग्र आसीत् ।

'नानावर्णो हरिस्त्वेको बहुशीर्षभुजोरुपात् ।
आसील्लये तदन्यत्तु सूक्ष्मरूपं श्रियं विना ।
असुप्तः सुप्त इव च मीलिताक्षोऽभवद्धरिः ।
अन्यत्रानादराद्विष्णौ श्रीश्च लीनेव कथ्यते ।
सूक्ष्मत्वेन हरौ स्थानाल्लीनमन्यदपीष्यते' ।। इति मात्स्ये ।।४७।।

मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।
यदासीत् तत एवाद्यः स्वयम्भूः समभूदजः ।। ४८ ।।

गुणतोऽनन्ते ।

'प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते ।
तदानन्त्यं तु गुणतस्ते चानन्ता हि सङ्ख्यया ।
अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च' ।।
इति तन्त्रभागवते ।। ४८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे चतुर्थोऽध्यायः ।।



## अष्टमोऽध्यायः

सनत्कुमारोऽवतु कामदेवा-
द्धयशीर्षो मां पथि देवहेलनात् ।
देवर्षिवर्यः पुरुषान्तरार्चनात्
कूर्मो हरिर्मां निरयादशेषात् ।। १७ ।।

सनत्कुमारोऽवतु कामदेवात् ।

'सनत्कुमारनामा तु ब्रह्मचर्यवपुर्हरिः ।
सनत्कुमारमपरं ब्रह्मपुत्रं विवेश यः ।
स मां योग्येतरात्कामात्पातु विश्वेश्वरः प्रभुः' ।। इति च ।

देवर्षिवर्यः पुरुषान्तरार्चनात् । विष्णोरपरिवारत्वदृष्ट्या देवान्तरार्चनात् ।

'महिदासो देवऋषिः पातु मां विष्णुरव्ययः ।
तदनर्पितकर्मभ्यस्तदस्मरणतस्तथा' ।। इति च ।। १७ ।।

यथा हि भगवानेव वस्तुतः सदसच्च यत् ।
सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ।। ३१ ।।

तथैकात्म्यानुभावेन विकल्परहितः स्वयम् ।
भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ।। ३२ ।।

तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ।। ३३ ।।

यथा हि भगवानेव–

'सदसन्नियामकतया सदसद्रूप उच्यते ।
सत्येनानेन मां देवः पातु विष्णुश्चतुर्भुजः' ।।

'एक एव परो विष्णुर्भूषाहेतिध्वजेष्वजः ।
तत्तच्छक्तिप्रदत्वेन स्वयमेव व्यवस्थितः ।
सत्येनानेन मां देवः पातु सर्वेश्वरो हरिः' ।। इति ।। ३१-३३ ।।

एतद् धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत् सद्यः साध्वसात् स विमुच्यते ।। ३६ ।।

न कुतश्चिद् भयं तस्य विद्यां धारयतो भवेत् ।
राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित् ।। ३७ ।।

'गुरुशिष्ययोरयोग्यत्वाद्गुरुवृत्तेरपूर्तितः ।
अप्रसादाद्गुरोर्विद्या न यथोक्तफलप्रदा' ।। इति च ।।

'विद्याः कर्माणि च सदा गुरोः प्राप्ताः फलप्रदाः ।

अन्यथा नैव फलदाः प्रसन्नोक्ताः फलप्रदाः' ।।
इति च तन्त्रसारे ।। ३६,३७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे अष्टमोऽध्यायः ।।



## नवमोऽध्यायः

देवा ऊचुः-

वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका
ब्रह्मादयो ये वयमुद्विजन्तः ।
हराम यस्मै बलिमन्तकोऽसौ
बिभेति यस्मादरणं ततो नः ।। २० ।।

'कालोऽन्तकः प्रधानं च मृत्युरव्यक्तमित्यपि ।
उच्यते प्रकृतिः सूक्ष्मा श्रीर्भूर्दुर्गेति नामभिः ।
सैव ब्रह्मादिभयदा विष्णोश्च वशवर्तिनी ।
अभयापि बिभेतीव तद्वशत्वादुदीर्यते' ।। इति तु माहात्म्ये ।।२०।।

पुरा स्वयम्भूरपि संयमाम्भ-
स्युदीर्णवातोर्मिरवैः कराले ।
एकोऽरविन्दात् पतितस्ततार
तस्माद् भयाद् येन स नोऽस्तु पारः ।। २३ ।।

'यत्र वायूदपन्नादिरूपेण प्रकृतिः स्थिता ।
एकस्तत्राबिभेद्ब्रह्मा विचार्य भयमत्यगात् ।
अन्तर्गतो हरिस्तस्य ध्यातो भयमपानुदत्' ।। इति च ।।

'जनिष्यतां जनानां तु स्वभावानां प्रसिद्धये ।
ज्ञानादिगुणपूर्णस्य ब्रह्मणोऽपि क्षणार्धगाः ।
भयादिका भवन्तीव कथं तस्मिन्स्थिरालयाः' ।। इति च ।।

'भगवत्प्रीतये नित्यं ब्रह्मणो ये भयादयः ।
न वृथा तस्य भावः स्यात्कश्चित्तेऽपि क्षणार्धगाः ।
अज्ञानं च चतुर्वारं द्विवारं भयमेव च ।
शोकोऽपि तावान्नान्यत्र कदाचिद्ब्रह्मणो भवेत् ।
तत्रापि भगवत्प्रीत्या उन्नत्यैवास्य तद्भवेत्' ।। इति ब्रह्मतर्के ।। २३ ।।

य एक ईशो निजमायया नः
ससर्ज येनानुसृजाम विश्वम् ।
वयं च यस्यापि पुरः समेताः
पश्याम लिङ्गं पृथगीशमानिनः ।। २४ ।।

लिङ्गमेव पश्यामः ।

'कदाचिदभिमानस्तु देवानामपि सन्निव ।
प्रायः कालेषु नास्त्येव तारतम्येन सोऽपि तु' ।। इति च ।।२४।।

आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ।
पर्युपासितमुन्निद्रशरदम्बुरुहेक्षणम् ।। २८ ।।

'श्रीवत्सः प्रकृतिर्ज्ञेया ब्रह्माख्यः कौस्तुभः पुमान् ।
तदतीतैः षोडशभिः स्वरूपैरप्युपास्यते' ।। इति च ।

श्रीवत्सकौस्तुभौ विनाऽऽत्मतुल्यैः प्रकृतिपुरुषातीतत्वात्सप्तदशरूपाण्यपि तुल्यानीत्यर्थः । आत्मभूतैश्च तुल्यैश्च आत्मतुल्यैः ।

'अपुंप्रकृत्यधीनत्वाद्वासुदेवादिका हरेः ।
तुल्याश्च केशवाद्याश्च न च भिन्नाः कथञ्चन' ।। इति तन्त्रसारे ।।

श्रीवत्सकौस्तुभाभ्यां तु विनाभावं प्रदर्शयेत् ।
पुंप्रकृत्यात्मकाभ्यां स धत्ते नित्यं जनार्दनः ।
यदस्याभ्यामतीतत्वं यद्वशो नानयोर्हरिः ।
श्रीवत्सकौस्तुभाभ्यां तु विनाभावः स एव तु' ।। इति च ।।

'आत्मैव सप्तदशधा स्वयं भूत्वा जनार्दनः ।
मध्यस्थावृतिरूपेण क्रीडते पुरुषोत्तमः' ।। इति च ।। २८ ।।

देवा ऊचुः–

नमस्ते यज्ञवीर्याय वयसे उत ते नमः ।
नमस्ते अस्तु चक्राय नमोऽस्तु पुरुहूतये ।। ३० ।।

'वयः सर्वस्य वयनाद्भगवान्पुरुषोत्तमः' ।। इति च ।

'मा तन्तुश्छेदि वयतो धियं मे' ।। इति श्रुतिः ।। ३० ।।

यत् ते गतीनां तिसृणामीशितुः परमं पदम् ।
नार्वाचीनो विसर्गस्य धातुर्वेदितुमर्हति ।। ३१ ।।

'देवलोकात्पितृलोकान्निरयाच्चापि यत्परम् ।
तिसृभ्यः परमं स्थानं वैष्णवं विदुषां गतिः' ॥

इति माहात्म्ये ॥ ३१ ॥

अथ तत्र भगवान् किं देवदत्तवदिह गुणविसर्गापतितः पारतन्त्र्येण स्वकृतकुशलाकुशलफलमुपाददाति आहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति ह वाव न विदामः ।

न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वर अनवगाह्य-माहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलि-लान्तःकरणदुरवग्रहवादिनां च विवादानवसरे उपरतसमस्तमायामये केवलस्वात्ममायामन्तर्धाय को नु दुर्घट इव भवति ।

स्वरूपद्वयाभावात् समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम् ।

स एव हि पुनः सर्ववस्तुषु वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारण-कारणभूतः सर्वप्रत्यगात्मत्वात् सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ।

अथ ह वाव तव महिमामहामृतरससमुद्रविप्रुषाऽसकृल्लीढया स्व-मनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशा-भासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि निरन्तरनिर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र पुनरयं संसारपरिवर्तः ।

त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयोऽभूवन् दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽय-मिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिः यथाऽ-पराधं दण्डं दधर्थावतीर्य ।। ३३ ।।

अथ तत्र भगवान् किं देवदत्तवदित्याक्षेपः । अचिन्त्यशक्तेरनन्तगुणस्य कुतः पारतन्त्र्यादिकमित्यभिप्रायः । उपरतसमस्तमायामये प्राकृतस्वभाववर्जिते । केवलं स्वात्ममायां निजसामर्थ्यम् । स्वरूपद्वयाभावादित्यादि समाधानम् ।

'स्वतन्त्रः परतन्त्रो वा ज्ञोऽज्ञो दुःखी सुखी नु किम् ।
इत्यादिसंशयः क्व स्याज्ज्ञानिनां पुरुषोत्तमे ।
तस्यानन्तगुणत्वाच्च पूर्णशक्तित्वतो हरेः ।
स्वातन्त्र्यादिकमेवास्य विदो जानन्ति निश्चयात् ।
घटकत्वाद्दुर्घटस्य दुर्ज्ञेयत्वाच्च सर्वशः ।
तच्छक्तेरविदो जीवं परतन्त्रं वदन्त्यमुम् ।
एवं दुर्घटया शक्त्या ज्ञाज्ञानां परमेश्वरः ।
यथा रज्जुः सर्पधिया रज्जुबुध्यावगम्यते ।
तथा यथार्थवुध्या च मिथ्याबुद्ध्याऽवगम्यते
स्वेच्छयैव महाविष्णुः फलदश्चानुसारतः' ।। इति तन्त्रभागवते ।

त्रिनयनो नृसिंहरूपी ।

'विष्णोर्नृसिंहनामानि त्रिनेत्रोग्रादिकानि तु' ।। इति शब्दनिर्णये ।
'विविधं भावपात्रत्वात्सर्वे विष्णोर्विभूतये' ।। इति च ।। ३३ ।।

हंसाय दभ्रनिलयाय निरीक्षकाय
कृष्णाय मृष्टयशसे निरुपक्रमाय ।

सत्संग्रहाय भवपान्थनिजाश्रयाय
शश्वद् वरिष्ठगतये हरये नमस्ते ।। ३५ ।।

'निरुपक्रमो हरिर्नित्यमप्रयत्नो ह्युपक्रमेत्' ।। इति च ।। ३५ ।।

न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् ।
तस्य तानिच्छतो यच्छे यदि सोऽपि तथाविधः ।। ३९ ।।

स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्मभिः ।
न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषग्यथा ।। ४० ।।

यदि सोऽपि तथाविधः अत्युत्तमो न भवति चेत् । युष्मत्कामो मत्प्रिय एव । अन्यथा न दद्यामिति भावः ।

'विष्णोः प्रियं कामयन्ति देवा नैवाप्रियं क्वचित् ।
यद्यप्रियं कामयन्ति न रातीशो हितो हि सः' ।।
इति तन्त्रभागवते ।। ३९,४० ।।

मघवन् यात भद्रं वो दध्यश्चमृषिसत्तमम् ।
विद्याव्रततपःसारं गात्रं याचत मा चिरम् ।। ४१ ।।

'समर्था अपि याचन्ते देवा मुन्यादिकान्क्वचित् ।
आज्ञयैव हरेस्तेषां यशोऽर्थमपि नान्यथा' ।। इति च ।। ४१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे नवमोऽध्यायः ।।



## दशमोऽध्यायः

नूनं स्वार्थपरो लोको न वेद परसङ्कटम् ।
यदि वेद न याचेत नेति नाह यदीश्वरः ।। ६ ।।

'आज्ञयैव महाविष्णोः कार्यार्थमपि च क्वचित् ।
नीचानपि च याचन्ते स्वात्मनो गुणवत्तराः ।
नीचवाक्यं वदेयुश्च सुरा नैतावता क्वचित् ।
तेजःक्षतिर्भवेदेषां जनकस्य यथार्भकात्' ।। इति तन्त्रमालायाम् ।।६।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे दशमोऽध्यायः ।।



## द्वादशोऽध्यायः

पुरुषः प्रकृतिर्व्यक्तमात्मभूतेन्द्रियाशयाः ।
शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहम् ।
अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् ।। ११ ।।

मन्यतेऽनीशमीश्वरम् ।

'अनीशं जीवरूपेण परमात्मानमीश्वरम् ।
ये मन्यन्ते तान्समीक्ष्य स्नेहान्निरयभाग्भवेत्' ।। इति च ।

'हिरण्यगर्भः पुरुष आत्मा वायुरुदाहृतः ।
शेषोऽव्यक्तस्तथैवेन्द्र आशयः समुदाहृतः' ।। इति च ।। ११ ।।

वज्रस्तु तत्कन्धरमाशुवेगः
कृन्तन्समन्तात् परिवर्तमानः ।
न्यपातयत् तावदहर्गणेन
यो ज्योतिषामयने वार्त्रहत्ये ।। ३३ ।।

'सन्धितः समयेनेन्द्रो वृत्रेणाथो करग्रहः ।
समुद्रतीरे विचरन्फेनेन वधमस्य तु ।
नर्मणा जहि फेनेन वाचयित्वा सुरेश्वरः ।
पादस्पर्शविवादं च कृत्वा युद्धाय दंशितः ।
फेने वज्रं समावेश्य विष्णुयुक्तं व्यसर्जयत् ।
अपानुदच्छिरस्तस्य ध्यायतो वत्सरेण सः ।।' इत्याग्नेये ।। ३३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे द्वादशोऽध्यायः ।।



## त्रयोदशोऽध्यायः

श्रीशुक उवाच–

एवं सञ्चोदितो विप्रैर्मरुत्वानहनद् रिपुम् ।
ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ।। १० ।।

तयेन्द्रं स्म ह सन्तप्तं निर्वृतिर्नामुमाविशत् ।
ह्रीमतां वाच्यतां प्राप्तं(ह्रीमन्तं हत्यया तप्तं)
सुखयन्त्यपि नो गुणाः ।। ११ ।।

‘प्रारब्धकर्मणैवैषां क्लृप्तदुःखस्य सूचकम् ।
इदानीन्तनकर्म स्याद्व्रणहेतुर्यथा रणः ।
देवादीनां स्थितप्रज्ञभावान्नैवान्यथा भवेत् ।
प्रारब्धमपि तु क्वापि किञ्चिद्विघटितं भवेत्’ ।। इति च ।।१०,११।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे त्रयोदशोऽध्यायः ।।



## चतुर्दशोऽध्यायः

मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ।। ५ ।।

‘नवकोट्यस्तु देवानामृषयः शतकोटयः ।
नारायणायनाः सर्वे ये केचित्तत्परायणाः’ ।। इति च ।

‘नारायणायना देवा ऋष्याद्यास्तत्परायणाः ।
ब्रह्माद्याः केचनैव स्युः सिद्धो योग्यसुखं लभन्’ ।।
इति तन्त्रभागवते ।। ५ ।।

अहो विधातस्त्वमतीव बालिशो
यस्त्वात्मसृष्ट्यप्रतिरूपमीहसे ।
परे तु जीवत्यपरस्य या मृतिः
विपर्ययश्चेत् त्वमसि ध्रुवं परः ।। ५३ ।।

न हि क्रमश्चेदिह मृत्युजन्मनोः
शरीरिणामस्तु तदाऽऽत्मकर्मभिः ।
यः स्नेहपाशो निजसर्गवृद्धये
स्वयं कृतस्ते तमिमं विवृश्चसि ।। ५४ ।।

त्वं तात नार्हसि स मां कृपणामनाथां
त्यक्तुं विचक्ष्व पितरं तव शोकतप्तम् ।
अञ्जस्तरेम भवताऽप्रजदुस्तरं यद्
ध्वान्तं न याह्यकरुणेन यमेन दूरम् ।। ५५ ।।

उत्तिष्ठ तात त इमे शिशवो वयस्या-
स्त्वामाह्वयन्ति नृपनन्दन संविहर्तुम् ।
सुप्तश्चिरं ह्यशनया च भवान् परीतो
भुंक्ष्व स्तनं पिब शुचो हर नः स्वकानाम् ।। ५६ ।।

नाहं तनूज ददृशे हतमङ्गला ते
मुग्धस्मितं मुदितवीक्षणमाननाब्जम् ।
किं वा गतोऽस्यपुनरन्वयमन्यलोकं
नीतोऽघृणेन न शृणोमि कला गिरस्ते ।। ५७ ।।

'सन्तापक्रोधरागादिष्वनर्थकवचः क्वचित्' ।।
इति शब्दनिर्णये ।। ५३-५७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे चतुर्दशोऽध्यायः ।।

## पञ्चदशोऽध्यायः

चरन्ति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः ।
मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिङ्गिनः ।। १५ ।।

कुमारो नारद ऋभुरङ्गिरा देवलोऽसितः ।
अपान्तरतमो व्यासो मार्कण्डेयोऽथ गौतमः ।। १६ ।।

वसिष्ठो भगवान् रामः कपिलो बादरायणिः ।
दूर्वासा याज्ञवल्क्यश्च जातूकर्ण्यस्तथाऽऽरुणिः ।। १७ ।।

रोमशश्च्यवनो दत्त आसुरिः सपतञ्जलिः ।
पराशरोऽथ मैत्रेयो भरद्वाजश्च आरुणः ।
ऋषिर्वेदशिरा बोध्यो मुनिः पञ्चशिखस्तथा ।। १८ ।।

हिरण्यनाभः कौशल्यः श्रुतदेवः क्रतुध्वजः ।
एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः ।। १९ ।।

नारायणायना देवा ऋष्याद्यास्तत्परायणाः ।
ब्रह्माद्याः केचनैव स्युः सिद्धो योग्यसुखं लभन् ।। इति तन्त्रभागवते

'नवकोट्यस्तु देवानामृषयः शतकोटयः ।
नारायणायनाः सर्वे ये केचित्तत्परायणाः' ।। इति च ।।१५-१९।।

अधुना पुत्रिणां तापो भवतैवानुभूयते ।
एवं दारा गृहा रायो विविधैश्वर्यसम्पदः ।। २५ ।।

सर्वेऽपि शूरसेनेमे शोकमोहभयार्तिदाः ।
गन्धर्वनगरप्रख्याः स्वप्नमायामनोरथाः ।। २७ ।।

दृश्यमाना विनाऽर्थेन न दृश्यन्ते मनोभवाः
कर्माभिध्यायतो नाना कर्माणि मनसोऽभवन् ।। २८ ।।

'मनसो द्वेषरागाभ्यां पुण्यपापसमुद्भवः ।
पुत्रादि पुण्यपापाभ्यां तस्मात्सर्वं मनोभवम्' ।।
इति नारदीये ।। २५-२८ ।।

अयं हि देहिनो देहो द्रव्यज्ञानक्रियात्मकः ।
देहिनो विविधक्लेशसन्तापकृदुदाहृतः ।। २९ ।।

'द्रव्यात्मकः स्थूलदेहः क्रिया कर्मेन्द्रियाणि च ।
ज्ञानेन्द्रियाणि च मनो ज्ञानात्मकमुदाहृतम्' ।। इति ब्रह्मवैवर्ते ।।

'कार्यकारणयोरेकशब्दव्यवहृतिर्भवेत्' ।। इति शब्दनिर्णये ।। २९ ।।

तस्मात् स्वस्थेन मनसा विमृश्य गतिमात्मनः ।
द्वैते ध्रुवार्थविश्रम्भं त्यजोपशममाविश ।। ३० ।।

'अनन्यापेक्षि(क्ष)तस्त्वेको हरिरन्यद्द्वयं स्मृतम् ।
अन्यापेक्षत्वतस्तेन प्राप्तत्वाद्द्वैतमुच्यते' ।। इति च ।। ३० ।।

यत्पादमूलमुपसृत्य नरेन्द्र पूर्वे
शर्वादयो भ्रममिमं द्वितयं विसृज्य ।
सद्यस्तदीयमतुलानधिकं महित्वं
प्रापुर्भवानपि परं न चिरादुपैति ।। ३६ ।।

'रुद्राद्याः शेषदेहस्थं विष्णुं संकर्षणाभिधम् ।
शेषान्तर्यामिणं ज्ञात्वा स्वपदं प्रापुरञ्जसा' ।। इति तन्त्रभागवते ।

'द्वैतेन बन्धसंत्यागाद्द्वैतत्यागी भवत्युत' ।। इति शब्दनिर्णये ।

देहाद्येऽहंममाभिमानो भ्रमः ।

'तेषां तेषां पदान्येव वैष्णवानि पदानि तु ।
तेषां महित्वं च तथा हरेस्तद्वशगं यतः ।
अतुल्यानधिकं चैव तस्य तस्यैव मुक्तिगम् ।
स्वस्यैव पूर्वमाहात्म्यमपेक्ष्य न हरेः क्वचित् ।
माहात्म्यमन्यप्राप्यं स्यान्न ते विष्णविति श्रुतेः' ।। इति तन्त्रभागवते ।।

'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान्केवलो हरिः' ।। इति स्कान्दे ।।

तत्प्रसादलभ्यत्वात्तदीयमपि तेनातुलमनधिकं चान्यमाहात्म्यम् ।।३६।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे पञ्चदशोऽध्यायः ।।



## षोडशोऽध्यायः

एष नित्योऽव्ययः सूक्ष्म एकः सर्वाश्रयः स्वदृक् ।
आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः ।। ९ ।।

एष नित्योऽव्ययः ।

'अनित्यसम्बन्धयुताः पित्राद्या नित्ययुग्घरिः' ।। इति च ।

आत्मानं चावताररूपेण सृजते ।। ९ ।।

नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम् ।
उदासीन इवासीनः परावरदृगीश्वरः ।। ११ ।।

'भोक्ता सद्गुणभोक्तृत्वान्न भोक्ता तदवृद्धितः ।
अचिन्त्यशक्तितस्तच्च युज्यते परमेशितुः' ।। इति च ।। ११ ।।

वचस्युपरते प्राप्यो य एको मनसा सह ।
अनामरूपचिन्मात्रः सोऽव्ययः(व्यान्नः) सदसत्परः ।।२१।।

बाह्यमनस्युपरते चिन्मात्रमनसा सह प्राप्यः ।। २१ ।।

यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते ।
मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ।। २२ ।।

मृन्मयेष्विव मृज्जातिः ।

'पृथिवी पर्वताश्चैव मृन्मयाः समुदीरिताः ।
तेषु मृज्जातयः सर्वे जायन्ते स्थावरादयः' ।। इति च ।। २२ ।।

ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः ।
जगाम देवदेवस्य शेषस्य चरणान्तिकम् ।। २९ ।।

'अन्यान्तर्यामिणं विष्णुमुपास्यान्यसमीपगः ।
भवेद्योग्यतया तस्य पदं वा प्राप्नुयान्नरः' ।। इति नारदीये ।।२९।।

**तद्दर्शनध्वस्तसमस्तकिल्बिषः**
**स्वच्छा(स्था)मलान्तःकरणोऽभ्ययान्मुहुः ।**
**प्रवृद्धभक्त्याऽऽप्रणयाश्रुलोचनः**
**प्रहृष्टरोमा तमनादिपूरुषम् ।। ३१ ।।**

अनेन प्रकारेण मुहुस्तत्सकाशमभ्ययात् ।

'शेषान्तर्यामिणं विष्णुं चित्रकेतुरुपास्य तु ।
शेषाविष्टहरेश्चापि वरान्प्राप्याप तद्गतिम्' ।।

इति तन्त्रमालायाम् ।। ३१ ।।

**अहं वै सर्वभूतानि भूतात्मा भूतभावनः ।**
**शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू ।। ५१ ।।**

'हरिस्तु सर्वभूतानि तदन्तर्याम्यपेक्षया ।
तिङ्पदान्यपि सर्वाणि सुप्पदानि तथैव च ।
तस्मिन्नेव प्रवर्तन्ते मुख्यवृत्त्या विशेषतः' ।। इति च ।। ५१ ।।

**लोकेऽविततमात्मानं लोकं चात्मनि सन्ततम् ।**
**उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ।। ५२ ।।**

लोकं चात्मनि सन्ततं वासनारूपेण ।। ५२ ।।

**एवं जागरणादीनि जीवस्थानानि चात्मनः ।**
**मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ।। ५४ ।।**

**मायामात्राणि** प्रकृतिनिर्मितानि ।। ५४ ।।

उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः ।
अन्वेति व्यतिरिच्येत तज्ज्ञानं ब्रह्म तत् परम् ।। ५६ ।।

प्रतिबोधेऽन्वेति स्वयमपि प्रतिबुद्धः । सुप्तावस्वपन्व्यतिरिच्येत ।।५६।।

यद्येष विस्मृतः पुंसो मद्भावो भिन्न आत्मनः ।
ततः संसार एतस्य(एकस्य) देहाद् देहो मृतेर्मृतिः ।। ५७ ।।

'सर्वभिन्नं परात्मानं विस्मरन्संसरेदिह ।
अभिन्नं संस्मरन्याति तमो नास्त्यत्र संशयः' ।। इति च ।। ५७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे षोडशोऽध्यायः ।।



## सप्तदशोऽध्यायः

एषामनुध्येयपदाब्जयुग्मं
जगद्गुरुं मङ्गलमङ्गलं स्वयम् ।
यः क्षत्रबन्धुः परिभूय सूरीन्
प्रशास्ति धृष्टस्तदयं हि दण्ड्यः ।। १३ ।।

एषां पक्षे तदवराणामनुध्येयपदाब्जयुग्मम् ।

'विष्णुब्रह्मप्राणवीन्द्रांस्तद्दारानप्यृते हरः ।
ध्येयो हरेः पार्षदाद्यैर्ध्यायन्हरिचतुर्मुखौ ।
प्राणमेषां तथा दारान्न स्वतन्त्रतया क्वचित्' ।।

इति तन्त्रमालायाम् ।।१३।।

न चा(त)स्य कश्चिद् दयितः प्रतीपो
न ज्ञातिबन्धुर्न परो न च स्वः ।
समस्य सर्वत्र निरञ्जनस्य
कुतोऽनुरागः कुत एव रोषः ।। २२ ।।

'सेवायोग्यातिरेकेण स्वानामपि न दास्यति ।
अपराधातिरेकेण नान्यस्यातः समो हरिः' ।।
इति माहात्म्ये ।। २२ ।।

देहिनां देहसंयोगाद् द्वन्द्वानीश्वरलीलया ।
सुखं दुःखं मृतिर्जन्म शापानुग्रह एव च ।। २९ ।।

अविवेककृतः पुंसो ह्यर्थभेद इहात्मनि ।
गुणदोषविकल्पश्च भिदेव स्वप्नकल्पिता ।। ३० ।।

'यत्तद्भगवता क्लृप्तं तदेव नियतं भवेत् ।
अतोऽन्येषां वरः शापो गुणदोषप्रकर्तृता ।
स्वतः प्राप्ता भेदकृतिर्वासनारूपिणो यथा ।
विद्यमानस्य मनसि पुनः स्वप्नेषु दर्शनम् ।
भगवद्वशता यस्मात्सर्वेषां ज्ञेयमेव तत्' ।।
इति प्रकाशसंहितायाम् ।। ३० ।।

इति भागवतो देव्याः प्रतिशप्तुमलन्तमः ।
मूर्ध्ना सञ्जगृहे शापमेतावत् साधुलक्षणम् ।। ३७ ।।

प्रतिशप्तुमलन्तमः ।

'देवा एव तदन्येभ्यः शक्ता नास्त्यत्र संशयः ।
अशक्ता अपि शक्तानां शक्ताः शापादिषु स्फुटम् ।
तथाप्यशक्तैर्विहिताः शापाद्याः शक्तिमत्सु वै ।
अत्यल्पाश्चाल्पकालाश्च न सम्यक्प्रभवन्ति च ।
यत्नेनापोहितुं शक्या उत्तमैस्तु न संशयः ।
उत्तमेषु कृताः शापाः कर्तॄणां ज्ञानपुण्ययोः ।
निःशेषेण निहन्तारस्तदनुग्रहमन्तरा ।
सदारयोर्ब्रह्मविष्ण्वोर्वरशापादयोऽखिलाः ।
तदन्येन कृताः सर्वे निष्फला एव निश्चयात् ।
न चाप्यवान्तराः शापा भवन्त्येषां तु कुत्रचित् ।
वरा विष्णोः श्रियश्च स्युर्ब्रह्मणश्च यथाक्रमम् ।
उत्तमैरधमानां तु वराः शापा यथोदितम् ।
सम्पूर्णफलदा एव नात्र कार्या विचारणा' ।। इति स्कान्दे ।। ३७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे सप्तदशोऽध्यायः ।।



## एकोनविंशोऽध्यायः

तस्या अधीश्वरः साक्षात् त्वमे(व)कः पुरुषः परः ।
त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग् भवान् ।। ११ ।।

गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग् भवान् ।
त्वं हि सर्वशरीरात्मा श्रीः शरीरेन्द्रियाशया ।। १२ ।।

नामरूपे भगवती प्रत्ययस्त्वम(मु)पाश्रयः ।
यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ।

तथेमा उत्तमश्लोक सन्तु सत्या ममाशिषः ।। १३ ।।

इज्या क्रिया ।

'अन्तर्यामी तु यज्ञादेर्विष्णुरिज्यादिनां रमा ।
तत्तच्छब्दैस्ततो वाच्यौ न तु सर्वस्वरूपतः ।
अन्तर्यामी श्रियश्चापि विष्णुरेव न संशयः ।
नान्तर्यामी कश्चिदस्ति विष्णोः क्वापि कुतश्चन' ।।
इति ब्रह्मतर्के ।। ११-१३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये षष्ठस्कन्धे एकोनविंशोऽध्यायः ।।

## ।। षष्ठः स्कन्धः समाप्तः ।।



# सप्तमस्कन्धः

## प्रथमोऽध्यायः

निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः ।
स्वमायागुणमाविश्य बाध्यबाधकतां गतः ।। ६ ।।

'बाध्यादिस्थो हरिर्नित्यं बाध्यतादिगतेत्यपि ।
गीयते न तु बाध्यत्वादिदोषयुतत्वतः' ।। इति भविष्यत्पर्वणि ।।

ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते ।
विन्दन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ।। ९ ।।

'दधिस्थघृतवत्काष्ठे वह्निवच्च जनार्दनः ।
देहेन्द्रियासुजीवेभ्यो विविच्य ज्ञायते न तु' ।। इति च ।।

कालं चरन्तं सृजतीश आश्रयः
प्रधानपुंभ्यां नरदेव सत्यकृत् ।
स तत्र तत्रोभयसिद्धिमाप्नुयात्
लिङ्गात्मनो लिङ्गगुणाश्च सन्ति ।। ११ ।।

प्रधानपुंभ्यां सह ।।

य एष राजन्नपि काल ईशिता
सत्वं सुरानीकमिवैधयत्यजः ।
तत्प्रत्यनीकानसुरान् सुरप्रियो
रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ।। १२ ।।

**काले** कालविषयेऽपीशिता । देहादिकारणत्वात् सुरानीकमिव स्थितं सत्वम् ।

'स्वभावतः प्रियत्वात्तु सदा देवप्रियो हरिः ।
अप्रियश्चासुराणां स स्वभावात्तूभयं नृणाम् ।
देशकालौ गुणांश्चैव भक्त्यादीनप्यपेक्ष्य तु ।
योग्यतां च तथा कर्म सम इत्यभिधीयते ।
स्वतः प्रियोऽपि देवानामुत्पाद्यैव गुणानिमान् ।
इतरेषां तथा दोषान्सुखदुःखे ददात्यजः ।
उभयं तु मनुष्याणामतः सम इतीरितः ।
अनादिनियताश्चैव गुणदोषाः सुरादिषु ।
यथाक्रमं पुनश्चैव नियमाद्वर्धितास्तथा ।
विष्णुनैव ततो नित्यं विषमश्च जनार्दनः' ।। इति ब्रह्मतर्के ।।

'न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित् ।
योग्यतायास्तन्नियत्या विषमत्वं भवेदिति' ।। इति स्कान्दे ।।

'विषमत्वं तु दोषाय शुभाशुभविपर्यये ।
अतस्तादृशवैषम्यं ब्रह्मसूत्रे निराकृतम् ।
शुभाशुभनियन्तृत्वं न दोषो गुण एव सः ।
अतस्तदिष्टं कृष्णस्य ब्रह्मसूत्रकृतो विभोः' ।। इति तन्त्रनिर्णये ।।

शपतोरसकृद् विष्णुं यद् ब्रह्म परमव्ययम् ।
श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः ।। २० ।।

'नियमाद्भुज्यते पुम्भिर्धर्माधर्मफलं मृतौ ।
कैश्चिदत्रापि भुज्येत तस्मान्नाधर्ममाचरेत्' ।। इति भारते ।।

यन्निबन्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ।
तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ।
परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते ।। २६ ।।

**कैवल्यात्** देहाद्यभावादेव । **अकर्तुः** तस्यान्यः कर्ता न विद्यते । इदं एषा । 'व्यत्ययोऽतिशयकुत्सनभेदेषु' इति सूत्रात् ।।

तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा ।
स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक् ।। २७ ।।

**कथञ्चिन्नेक्षते पृथक्** । तत्रैव मनसोऽभिनिवेशेन तदन्यं नेक्षते । वैरादीनामेकतमेनापि यो युञ्ज्यात् स नेक्षत इति स्वभावकथनं न विधिः ।

'कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ।
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः' ।

'तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' ।।

'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम्' ।।

'मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' ।।

'यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ।
तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात् ।

हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।
विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः' ।।

'वरतोऽपि न मुच्यन्ते द्वेषिणः शापतोऽपि तु ।
भक्ता नैव निपात्यन्ते धर्माधर्मैस्तथेतरैः ।
अन्यावेशकृतं यत्तु तद्वराद्यैरपोह्यते ।
तद्विरुद्धस्वभावानामन्यथा न कथञ्चन' । इत्यादेः ।।

यस्मादेवं कोऽप्युपद्रवो नास्ति भगवतस्तस्मादेव द्वेषादिनापि मनो योक्तुं शक्यते तत्प्रेरणया । तादृशानां एतदेव चिन्तयति च । अन्यथा आत्मनो दुःखकारणं द्वेषादिकं कथं सर्वनियामको हरिरुत्पादयेत् ।। २७ ।।

यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ।
न तथा भक्तियोगेन इति मे निश्चिता मतिः ।। २८ ।।

कीटः पेशस्कृता रुद्धः कुड्ये यान्तमनुस्मरन् ।
संरम्भभययोगेन विन्दते तत्सरूपताम् ।। २९ ।।

एवं कृष्णे भगवति मायामनुज ईश्वरे ।
वैरेण धूतपाप्मानः तमापुरनुचिन्तया ।। ३० ।।

तत्रैव हेतुः । **यथा वैरानुबन्धेनेति** । यथा वैराभिनिवेशिनः तथा भक्त्यभिनिवेशिनो न सन्ति । तत्कथमन्यथा भक्तानेव बहून्हरिः कुर्यादिति भावः ।।

**कीटः पेशस्कृतेत्यादि** चैद्यादीनां भक्तियुतत्वप्रतिपादनम् । स्नेहाद्यायतननाशादिनाऽप्युपद्रवोऽस्य नास्तीति निर्वैरेणेत्याद्युक्तम् ।

'ततः कनीयसा एव देवा ज्यायसा असुराः' इति श्रुतिः ।

**तन्मयतां** मनसस्तत्राभिनिवेशनम् ।

'मागधाद्या यथा नित्यं द्वेषादाग्रहिणो हरौ ।
न तथाऽऽग्रहिणो भक्ता ऋते ब्रह्माणमव्ययम्' ।। इति हरिवंशेषु ।।

**योगः** स्नेहः । संरम्भभययुक्तस्नेहेन ।

'प्रीतिः स्नेहस्तथा योगः प्रेम(मा)बन्ध इतीर्यते' । इति शब्दनिर्णये ।।

वैरयुक्तयाऽप्यनुचिन्तया तमापुः ।

'अनुचिन्तेति तामाहुर्भक्तिपूर्वा तु या स्मृतिः' । इति च ।।

'स्नेहादन्नं ददातीति स्वाकर्षणभयेऽपि च ।
विद्यमानेऽप्यल्पकोपे सङ्गतिस्नेहतस्तथा ।
पेशस्कृद्रूपतां कीटो यथा याति तथैव तु ।
चैद्यादयोऽसुरावेशाद्धरौ द्वेषयुता अपि ।
निजस्वभावया भक्त्या नीता हरिसरूपताम् ।
तथा हि करुणो विष्णुरन्यावेशाद्यदि द्विषन् ।
हीयते किं ममानेन नित्यानन्द स्वरूपिणः ।
देहबन्धयुतानां हि द्वेषिणाऽपकृतं भवेत् ।
मम को ह्यपराध्येत निर्दोषसुखरूपिणः ।
अतो मय्यपराधस्तु स्वस्मिन्नेव न मे भवेत् ।
अतो यच्चासुरावेशात्कृतमेतेन दुष्कृतम् ।
अनादिभक्तो यस्मान्मे मोचयिष्ये ततस्त्वहम् ।
इति मत्वा मोचयति चैद्यादीनपि केशवः' ।।

इति ब्रह्माण्डे ।। २८-३० ।।

कामात् स्नेहाद् भयाद् द्वेषाद् यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ।। ३१ ।।

कामादिभिरपि यथावद्भक्त्या सहैव मन आवेश्य तदघं यत्तु द्वेषादिकृतमघं यथाभूतया भक्त्या हित्वा ।। ३१ ।।

गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ।। ३२ ।।

'गोप्यः कामयुता भक्ताः कंसाविष्टः स्वयं भृगुः ।
ज्ञेयो भययुतो भक्तश्चैद्यादिस्था जयादयः ।
विद्वेषसंयुता भक्ता वृष्णयो बन्धुसंयुताः ।
बहुमानस्नेहसाम्याद्देवा भक्ताः प्रकीर्तिताः ।
स्नेहोपसर्जनादेव बहुमानान्मुनीश्वराः ।
बहुमानोऽपि देवानामृषिभ्योऽप्यधिको मतः ।
ब्रह्मवीन्द्रेन्द्र-कामादेरितरेषां यथाक्रमम्' ।। इति ब्रह्मतर्के ।।

कतमोऽपि न वेनस्य पञ्चानां पुरुषं प्रति ।
तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ।। ३३ ।।

कतमोऽपि भक्तियोगो न वेनस्य । तस्मात्केनापि प्रकारेण उपायेनैव मनो निवेशयेत् । नानुपायेन ।

'उपायो भक्तिरुद्दिष्टो द्वेषाद्या अनुपायकाः' । इति शब्दनिर्णये ।।

मातृष्वसेयो वश्चैद्यो दन्तवक्रश्च पार्थिव ।
पार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ ।। ३४ ।।

स्वतो भक्ताश्चैद्यादयोऽपि परावेशाद्द्वेषिण इत्यत्र हेतुर्मातृष्वसेय इत्यादि ।। ३४ ।।

पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः ।
दिग्वाससः शिशून् मत्वा द्वाःस्थौ तान् प्रत्यषेधताम् ।।३८।।

द्वास्थावित्यनेनाधिकारस्थत्वमुक्तम् ।

'अधिकारस्थिताश्चैव विमुक्ताश्च द्विधा जनाः ।
विष्णुलोकस्थितास्तेषां वरशापादियोगिनः ।
अधिकारस्थिता मुक्तिं नियतं प्राप्नुवन्ति च ।
विमुक्त्यनन्तरं तेषां वरशापादयो न तु ।
देहेन्द्रियासुयुक्ताश्च पूर्वं पश्चान्न तैर्युताः ।
अप्यभीमानिभिस्तेषां देवैः स्वात्मोत्तमैर्युताः' ।। इति तन्त्रसारे ।।३८।।

तं सर्वभूतात्मभूतं प्रशान्तं समदर्शनम् ।
भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः ।। ४४ ।।

सर्वभूतात्मनि भूतम् ।। ४४ ।।

ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवःसुतौ ।
रावणः कुम्भकर्णश्च सर्वलोकप्रतापि(प)नौ ।। ४५ ।।

तावद्य क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ।
अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ।। ४६ ।।

'हिरण्यकशिपुर्भूतममन्यत मृतौ हरिम् ।
अतो भयानको जातस्तत्र राजानमेव च ।

मत्वा राजैव सञ्जातः कृष्णं चक्रादिलक्षणैः ।
मृतिकाले हरिं चैव मत्वा भक्त्यैव केवलम् ।
द्वाःस्थत्वं हरिमाविश्य प्रापैव मनुजोऽपि तु' ।। इति गारुडे ।।

'विष्णुभक्तेश्च तज्ज्ञानादन्यतो मुक्तिवाचकाः ।
विष्णोर्गुणह्रासवाचः श्रीब्रह्मादेस्तथा क्रमात् ।
विष्ण्वादिद्वेषतश्चैव सुखवाचस्तथाऽखिलाः ।
मोहनार्थाः समुद्दिष्टा यथार्थद्योतकास्तथा' ।।
इति प्रकाशसंहितायाम् ।। ४५-४६ ।।

वैरानुबन्धतीव्रेण ध्यानेनाच्युतसाम्यताम् ।
नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ।। ४८ ।।

**वैरानुबन्धः** वैरयुक्ता भक्तिः ।

'अनुबन्धस्तु भक्तिः स्याद्बन्धः स्नेह उदाहृत' ।। इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे प्रथमोऽध्यायः ।।



## द्वितीयोऽध्यायः

तावद् यात भुवं यूयं ब्रह्मक्षत्रसमेधिताम् ।
सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानकान् ।। १० ।।

विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् ।
देवर्षिपितृभूतानां धर्मस्य च परायणम् ।। ११ ।।

'विप्रयज्ञादिमूलं तु हरिरित्यासुरं मतम् ।
हरिरेव हि सर्वस्य मूलं सम्यङ्मतो नृप' ।। इति ब्राह्मे ।।

नित्य आत्माऽव्ययः शुद्धः सर्ववित् सर्वगः परः ।
धत्तेऽसावात्मनो लिङ्गं मायया विसृजन् गुणान् ।। २२ ।।

**धत्तेऽसावात्मनो लिङ्गम् ।** जीवमनआदीनामाधारं ब्रह्म ।। २२ ।।

यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ।। २३ ।।

एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् ।
याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ।। २४ ।।

**लिङ्गवानिव –** जीव इव ।

'असमं समतामेति भ्रान्तिदृष्ट्यैव केवलम् ।
जीवेन ब्रह्म न समं तत्त्वदृष्ट्या कथञ्चन' ।। इति षाड्गुण्ये ।।

'यथोदचलनाद् वृक्षप्रतिबिम्बप्रचालनात् ।
तटस्थवृक्षचलनं कल्पयेदबुधो नरः ।
तथा मनसिजैर्दोषैराभासे दूषिते नरे ।
आभासिनो ब्रह्मणश्च दोषमज्ञः प्रकल्पयेत् ।
आत्मनश्चक्षुषो भ्रान्त्या यथा पश्येद्भ्रमं भुवः ।
तथैव स्वात्मनो दोषाद्दोषवद्ब्रह्म पश्यति' ।। इति ब्रह्मतर्के ।।२३-२४।।

सम्भवश्च विनाशश्च शोकश्च विविधः स्मृतः ।
अविवेकश्च चिन्ता च विवेकस्मृतिरेव च ।। २६ ।।

**विवेकस्मृतिः** अविवेकिन एव विवेकित्वभ्रान्तिः ।

'अन्तर्हिरण्यकादीनां भक्तिरस्त्येव केशवे ।
असुरावेशतस्त्वन्यान् हरिस्तोतॄन्द्विषन्ति च' ।। इति पाद्मे ।।२६।।

यम उवाच–

अहो अमीषां वयसाऽधिकानां
विपश्यतां लोकविधिं विमोहः ।
यत्रोद्भवस्तत्र गतं मनुष्यं
स्वयं सधर्मा अनुशोचन्त्यपार्थम् ।। ३७ ।।

**यत्रोद्भवस्तत्र गतं** अदर्शनं गतम् ।

'अदर्शनादिहायातः पुनश्चादर्शनं गतः' इति भारते ।। ३७ ।।

भूतानि तैस्तैर्निजयोनिकर्मभि-
र्भवन्ति काले न भवन्ति सर्वशः ।
न तत्र हात्मा प्रकृतावपि स्थित-
स्तस्या गुणैरन्यतमो निबध्यते ।। ४१ ।।

**अन्यतम आत्मा** परमात्मा ।

'सुविरुद्धस्वरूपत्वाज्जीवादन्यतमो हरिः' ।। इति वामने ।।

भगवन्माहात्म्यकथनेन सर्वस्य तद्वशत्वात्स एव भजनीयो न शोकेन प्रयोजनम्' । इति फलितार्थः ।। ४१ ।।

यथाऽनलो दारुषु भिन्न ईयते
यथाऽनिलो देहगतः पृथक् स्थितः ।

यथा नभः सर्वगतं न सज्जते
तथा गुणैः सर्वगुणाश्रयः परः ॥ ४३ ॥

'देहदारुगतौ प्राणवह्नी सर्वगतं नभः ।
देहादिभ्यो यथा भिन्ना न लिप्यन्ते च तद्गुणैः ।
तथा जीवगतो विष्णुर्जीवाद्भिन्नो न तद्गुणैः' ॥ इति च ॥

सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ ।
यः श्रोता योऽनुवक्तेह न स दृश्येत कर्हिचित् ॥ ४४ ॥

न श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः ।
यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः ॥ ४५ ॥

भूतेन्द्रियमनोलिङ्गान् देहानुच्चावचान् विभुः ।
भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥ ४६ ॥

यावल्लिङ्गान्वितो ह्यात्मा तावत् कर्मनिबन्धनः ।
ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते ॥ ४७ ॥

वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ।
यथा मनोरथः स्वप्नः सर्वमैन्द्रियकं मृषा ॥ ४८ ॥

**इन्द्रियवान्** जीवः । **भजत्युत्सृजति ह्यन्यः** परमात्मा । स एव श्रोताऽनुवक्ता च ।

'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता स योऽतोऽश्रुतः' ।
इत्यादेः ॥

मुख्यप्राणोऽपि स्वतो न श्रोता किमु जीव इति । अयं ननु सुयज्ञ इत्याक्षेपः । यश्च सुयज्ञः सोऽपि स्वतः श्रोतुं वक्तुं न च शक्तः । अतस्तस्यानुशोकेन किमित्यर्थः ।

'अन्यो जीवोऽचितो देहात्तद्वशो देह उच्यते ।
पश्यामीत्यभिमानोऽस्य चक्षुराद्यभिमानवान् ।।

न तद्वशाश्चक्षुराद्या न दृष्ट्यादौ स ईश्वरः ।
चक्षुराद्या मनो जीवो दृष्ट्यादिश्चापि यद्वशे ।।

स प्राण इति विज्ञेयो ज्ञाता मन्ता च स प्रभुः ।
तस्यापि ज्ञातृमन्तृत्वं न स्वतः शक्यते क्वचित् ।।

यस्तस्य ज्ञातृमन्तृत्वदाता स भगवान्हरिः ।
स्वतो ज्ञाता च मन्ता च द्रष्टा श्रोता च केशवः ।।

ज्ञानादिदो न तस्यान्यः सर्वस्य ज्ञानदो हरिः ।
स देहान्भजते विष्णुः स्वेच्छयैवोत्सृजत्यपि ।।

यावद्देहस्थितो विष्णुस्तावज्जीवो विपर्ययः ।
तावत् क्लेशादयश्चास्य वृथा चेन्द्रियवृत्तयः ।।

यदोत्सृजति देहं स हरिः सर्वात्मना विभुः ।
तदा तदभिमानी तु जीवो मुच्येत संसृतेः ।।

अतिभिन्नस्वरूपौ तौ जीवेशावेकदेहगौ ।
देहाभिमानी त्वेकोऽत्र न मानी मानदः परः' ।। इति गारुडे ।

'इन्द्रियाद्यभिमानेन तद्वान् जीव उदीर्यते ।
अतन्मानाद्धरिः प्रोक्तस्त्वदेहोऽनिन्द्रियस्तथा ।।

जीवानभिमते देहे न विष्णुर्जीवति स्थितः ।
अतश्चादेह उद्दिष्टः परमात्मा सनातनः' ।। इति प्रकाशसंहितायाम् ।

स चान्यः श्रोतुर्वक्तुश्चेति चशब्दः ।।

**लिङ्गान्** भूतेन्द्रियमनोरूपान् ।

'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव च' । इति शब्दनिर्णये ।।

**आत्मा** परमात्मा । **कर्मनिबन्धनो** जीवः । **ततः** परमात्मनो विपरीतः ।। **मृषा** वृथा । स्वप्नदृष्टवित्तादिवत् ।

'लेपाभिमानी जीवस्तु स्वरूपानुभवी न च ।
मुक्तेः प्राक्तेन मान्युक्तो न मानी विष्णुरुच्यते ।
सर्वं ममेति पश्यन्नप्यलेपाभिमतिर्यतः ।
सम्यक्स्वरूपानुभवात्स्वतन्त्रत्वाददोषतः' ।। इति ब्रह्मतर्के ।।४४-४८।।

हिरण्यकशिपुरुवाच–

बाल एवं प्रवदति सर्वे विस्मितचेतसः ।
ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ।। ५८ ।।

'अहं ममाभिमानादि त्वयथोत्थमनित्यकम् ।
महदादि यथोत्थं च नित्या चापि यथोत्थिता ।।
अस्वतन्त्रैव प्रकृतिः स्वतन्त्रो नित्य एव च ।
यथार्थभूतश्च पर एक एव जनार्दनः' ।। इति च ।। ५८ ।।

क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव च ।
स्वपराभिनिवेशेन विनाऽज्ञानेन देहिनः ।। ६० ।।

**'क आत्मा कः परः'** इति देहाद्यपेक्षया ।

'न हि देहादिरात्मा स्यान्न च शत्रुरुदीरितः ।
अतो दैहिकवृद्धौ वा क्षये वा किं प्रयोजनम् ।
यस्तु देहगतो जीवः स हि नाशं न गच्छति ।
ततः शत्रुविवृद्धौ वा स्वनाशे शोचनं कुतः ।
देहादिव्यतिरिक्तौ तु जीवेशौ प्रतिजानताम् ।
अत आत्मविवृद्धिस्तु वासुदेवे रतिः स्थिरा ।
शत्रुनाशस्तथाऽज्ञाननाशो नान्यः कथञ्चन' ।। इति ब्रह्मवैवर्ते ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे द्वितीयोऽध्यायः ।।



## तृतीयोऽध्यायः

**सृष्ट्वा चराचरमिदं तपोयोगसमाधिना ।
अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ।। ९ ।।**

**तदहं वर्धमानेन तपोयज्ञसमाधिना ।
कालात्मनोश्च नित्यत्वात् साधयिष्ये तथाऽऽत्मनः ।। १० ।।**

'जानतामपि कर्तव्यं कर्मात्मसदृशं सदा ।
तत्रात्मसदृशाज्ञानाद्रागाद्यैर्वा विमोहिताः ।
जानन्तोऽपि ह्यसदृशं कर्म कुर्युर्ऋते विभुम् ।
चतुरास्यं स नायोग्यं कर्म कुर्यात्कथञ्चन' ।। इति नारदीये ।।

'तपसा विद्यया वापि ज्ञानध्यानादिनाऽथवा ।
व्यस्तैः समस्तैरपि वा कुर्वतां यत्नमुत्तमम् ।
संहारविक्षेपशतैर्बहुकोटिभिरेव वा ।
न शक्यन्ते समारोढुं स्वात्मायोग्यपदानि तु ।
तथाप्याचरतां कुर्युर्दैत्यानां सुरनायकाः ।
विघ्नं तु तप आदीनां वैयर्थ्यस्यापनुत्तये' ।। इति प्रकाशसंहितायाम् ।।

अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ।
किमन्यैः कालनिर्धूतैः कल्पान्तैर्वैष्णवादिभिः ।। ११ ।।

**वैष्णवादिभिः** ब्रह्मनिर्मितैः ।

'ब्रह्मा स्वयम्भूर्द्रुहिणो वैष्णवः शतदृक्तथा' । इति शब्दनिर्णये ।।११।।

तवासनं हि जगतां पारमेष्ठ्यं जगत्पते ।
भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ।। १३ ।।

'भवाय श्रेयसे चैव न कश्चित्तदपेक्षते ।
मधुकैटभयोश्चैव हिरण्यादेस्तथैव च ।
नान्यो ब्रह्मपदं वाञ्छत्यृजून्योग्यान्विना क्वचित् ।
ततः श्रेयांसि वाञ्छन्ति न तु तत्पदमाप्तये' ।। इति ब्रह्माण्डे ।।

'भवो वृद्धिः समुद्दिष्टा श्रेयो मोक्ष उदाहृतः ।
वृद्धस्य न पुनर्ह्रासो भूतिरित्येव कथ्यते' ।। इति शब्दनिर्णये ।।

तपन्तं तपसा लोकान् यथा भावितत्तं रविम् ।
विलक्ष्य विस्मितः प्राह हसंस्तं हंसवाहनः ।। १६ ।।

**'क आत्मा कः परः'** इति देहाद्यपेक्षया ।

'न हि देहादिरात्मा स्यान्न च शत्रुरुदीरितः ।
अतो दैहिकवृद्धौ वा क्षये वा किं प्रयोजनम् ।
यस्तु देहगतो जीवः स हि नाशं न गच्छति ।
ततः शत्रुविवृद्धौ वा स्वनाशे शोचनं कुतः ।
देहादिव्यतिरिक्तौ तु जीवेशौ प्रतिजानताम् ।
अत आत्मविवृद्धिस्तु वासुदेवे रतिः स्थिरा ।
शत्रुनाशस्तथाऽज्ञाननाशो नान्यः कथञ्चन' ।। इति ब्रह्मवैवर्ते ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे द्वितीयोऽध्यायः ।।



## तृतीयोऽध्यायः

**सृष्ट्वा चराचरमिदं तपोयोगसमाधिना ।
अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ।। ९ ।।**

**तदहं वर्धमानेन तपोयज्ञसमाधिना ।
कालात्मनोश्च नित्यत्वात् साधयिष्ये तथाऽऽत्मनः ।। १० ।।**

'जानतामपि कर्तव्यं कर्मात्मसदृशं सदा ।
तत्रात्मसदृशाज्ञानाद्रागाद्यैर्वा विमोहिताः ।
जानन्तोऽपि ह्यसदृशं कर्म कुर्युर्ऋते विभुम् ।
चतुरास्यं स नायोग्यं कर्म कुर्यात्कथञ्चन' ।। इति नारदीये ।।

'तपसा विद्यया वापि ज्ञानध्यानादिनाऽथवा ।
व्यस्तैः समस्तैरपि वा कुर्वतां यत्नमुत्तमम् ।
संहारविक्षेपशतैर्बहुकोटिभिरेव वा ।
न शक्यन्ते समारोढुं स्वात्मायोग्यपदानि तु ।
तथाप्याचरतां कुर्युर्दैत्यानां सुरनायकाः ।
विघ्नं तु तप आदीनां वैयर्थ्यस्यापनुत्तये' ।। इति प्रकाशसंहितायाम् ।।

अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ।
किमन्यैः कालनिर्धूतैः कल्पान्तैर्वैष्णवादिभिः ।। ११ ।।

**वैष्णवादिभिः** ब्रह्मनिर्मितैः ।

'ब्रह्मा स्वयम्भूर्द्रुहिणो वैष्णवः शतदृक्तथा' । इति शब्दनिर्णये ।।११।।

तवासनं हि जगतां पारमेष्ठ्यं जगत्पते ।
भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ।। १३ ।।

'भवाय श्रेयसे चैव न कश्चित्तदपेक्षते ।
मधुकैटभयोश्चैव हिरण्यादेस्तथैव च ।
नान्यो ब्रह्मपदं वाञ्छत्यृजून्योग्यान्विना क्वचित् ।
ततः श्रेयांसि वाञ्छन्ति न तु तत्पदमाप्तये' ।। इति ब्रह्माण्डे ।।

'भवो वृद्धिः समुद्दिष्टा श्रेयो मोक्ष उदाहृतः ।
वृद्धस्य न पुनर्ह्रासो भूतिरित्येव कथ्यते' ।। इति शब्दनिर्णये ।।

तपन्तं तपसा लोकान् यथा भावितत्तं रविम् ।
विलक्ष्य विस्मितः प्राह हसंस्तं हंसवाहनः ।। १६ ।।

'सकामं तु तपः क्रूरं लोकानां भयकृद्भवेत् ।
इतरच्छान्तये सर्वलोकानां भवति ध्रुवम्' ।। इति प्रकाशिकायाम् ।

'ब्रह्माणमभजद्ब्रह्मपदार्थं स हिरण्यकः' । इति स्कान्दे ।।

व्यवसायेन तेऽनेन दुष्करेणामनस्विभिः ।
तपोनिष्ठेन भवता जितोऽहं दितिनन्दन ।। २० ।।

**जितः** वशीकृतः ।

'पराभूतं वशस्थं च जितमित्युच्यते बुधैः' ।। इति शब्दनिर्णये ।।

हिरण्यकशिपुरुवाच–

कल्पान्ते कालसृष्टेन योऽन्धेन तमसाऽऽवृतम् ।
अभिव्यनग् जगदिदं स्वयंज्योतिः स्वरोचिषा ।। २६ ।।

आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति ।
रजःसत्वतमोधाम्ने पराय महते नमः ।। २७ ।।

'प्रायस्तु स्तुतिशब्देषु मिश्रा वाचो हरिं विना ।
केचिज्जीवगुणास्तत्र तन्नियन्तुर्हरेः परे ।
एकस्थानैककार्यत्वाद्विष्णोः प्राधान्यतस्तथा ।
जीवस्य तदधीनत्वान्न भिन्नाधिकृतं वचः' इति ब्रह्मतर्के ।।

**त्रिवृता** प्रकृत्या ।। २६, २७ ।।

त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ।
चित्तस्य चित्तिर्मनइन्द्रियाणां पतिर्महाभूतगुणाशयेशः ।। २९ ।।

प्राणेन सह ।। २९ ।।

त्वं सप्ततन्तून् वितनोषि तन्वा
त्रय्या चतुर्होत्रकविद्यया च ।
त्वमेक आत्माऽऽत्मवतामनादि-
रनन्तपारः कविरव्ययात्मा ।। ३० ।।

**सप्ततन्तून्** सप्तक्रतून् ।। ३० ।।

त्वमेव कालोऽनिमिषो जनाना-
मायुर्लवाद्यावयवैः क्षिणोषि ।
कूटस्थ आत्मा परमेष्ठ्यजो महान्
त्वं जीवलोकस्य च जीव आत्मा ।। ३१ ।।

जीवानां प्राणधारकः ।।

त्वत्तः परं नापरमप्यनेज-
देजच्च किञ्चिद् व्यतिरिक्तमस्ति ।
विद्याकलास्ते तनवश्च सर्वा
हिरण्यगर्भोऽसि बृहत् त्रिपृष्ठः ।। ३२ ।।

'परावरेषु यस्मात्त्वं व्याप्तो विष्णुः सनातनः ।
तस्मान्न व्यतिरिक्तं त्वदित्याहुर्वेदवेदिनः' ।। इति पाद्मे ।। ३२ ।।

विद्याश्च कलाश्च विद्याकलाः ।

'महाविद्याः कलाश्चैव त्वत्तनावाश्रिता यतः ।
विद्यातनुरिति प्राहुरतस्त्वां तत्त्ववेदिनः' इति च । त्रिपृष्ठः तुरीयः ।।

नान्तर्बहिर्दिवानक्तमन्यस्मादपि चायुधैः ।
न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि ।। ३६ ।।

'ब्रह्मणोऽप्यधिकं विष्णुं जानन्नपि हिरण्यकः ।
ब्रह्माणं तद्गुणैः स्तौति तद्गविष्णुविवक्षया' ।। इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे तृतीयोऽध्यायः ।।



## चतुर्थोऽध्यायः

एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ।
भगवत्यकरोद् द्वेषं भ्रातुर्वधमनुस्मरन् ।। ४ ।।

'स्वतो भक्ता हिरण्याद्याः परावेशाद्धरौ द्विषः' इति च ।। ४ ।।

तस्मिन् महेन्द्रभवने महासुरो
महाबलो निर्जितलोक एकराट् ।
रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः
प्रतापितैरूर्जितचण्डशासनः ।। १२ ।।

तमङ्ग मत्तं मधुनोरुगन्धिना
विवृत्तताम्राक्षमशेषधिष्ण्यपाः ।
उपासतोपायनपाणिभिर्विना
त्रिभिस्तपोयोगबलौजसां पदम् ।। १३ ।।

'आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः ।
मरुतश्चैव विश्वे च साध्याश्चैव च तद्गताः ।
अतस्त्रय इति प्रोक्ताश्चत्वारो मानुषाः स्मृताः' ।। इति स्कान्दे ।।

'उपायनं ददुः सर्वे विना देवान् हिरण्यके' । इति च ।

'अयज्ञभागेष्वपि तु सुरशब्दः प्रदृश्य(युज्य)ते ।
यज्ञभागभुजस्त्वेव त्रय इत्यभिशब्दिताः' ।। इति च ।।१२-१३।।

यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु ।
धर्मे मयि च विद्वेषः स वा आशु विनश्यति ।। २८ ।।

निर्वैराय प्रशान्ताय स्वसुताय महात्मने ।
प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ।। २९ ।।

'यत्र क्व च यशस्थानमन्येषामिति केशवः ।
सर्वत्रापि तु देवानामित्यन्यान्पूजयेत्कचित्' ।। इति च ।।२८-२९।।

यस्मिन् महागुणा राजन् गृह्यन्ते कविभिर्मुहुः ।
न तेऽधुनाऽभिधीयन्ते यथा भगवतीश्वरे ।। ३५ ।।

'अन्येषां हरिसाम्यं तु किञ्चित्साम्यमुदीरितम् ।
सम्यक्साम्यं तु मत्स्यादेरिति शास्त्रस्य निर्णयः' ।। इति च ।।३५।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे चतुर्थोऽध्यायः ।।

※ ※ ※

## पञ्चमोऽध्यायः

प्रह्लाद उवाच–

परः स्वश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ।
विमोहितधियां दृष्टः तस्मै भगवते नमः ।। ११ ।।

स यदाऽनुगतः पुंसां पशुबुद्धिर्विभिद्यते ।
अन्य एष तथाऽन्योऽहमिति देहगताऽसती ।। १२ ।।

'स्वातन्त्र्येणान्यसद्भावनिषेधाय श्रुतिस्त्वियम् ।
अन्योऽसावन्योऽहमि'ति पश्यन्नज्ञ इति स्म ह ।

आत्मानमन्तर्यमयेदिति भेदं स्वरूपतः ।
आह तद्ब्रह्मणोऽधीना भिन्ना जीवाः सदैव तु ।
स्वरूपसत्ता कर्तृत्वं भोगो मोक्षस्तथैव च ।
मुक्तस्यावस्थितिश्चैव सर्वं विष्णोर्वशे सदा' ।।

इति ब्रह्मतर्के ।। ११-१२ ।।

प्रह्लाद उवाच–

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।। २३ ।।

आत्मस्थत्वेन वेदनमात्मनिवेदनम् ।

'मुक्तस्यापि ममान्तस्थो नियन्तैव हरिः सदा ।
इति ज्ञानं समुद्दिष्टं सम्यगात्मनिवेदनम्' ।। इति च ।। २३ ।।

गुरुपुत्र उवाच–

न मत्प्रणीतं न परप्रणीतं
सुतो वदत्येष तवेन्द्रशत्रो ।
नैसर्गिकीयं मतिरस्य राजन्
नियच्छ मन्युं क्व तदाऽऽत्ममानः ।। २८ ।।

क्व तदाऽऽत्ममानो मम ? ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे पञ्चमोऽध्यायः ।।



## षष्ठोऽध्यायः

प्रत्यगात्मस्वरूपेण कालरूपेण च स्वयम् ।
व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योविकल्पितः ।। २८ ।।

'अन्तर्यामी प्रत्यगात्मा व्याप्तः कालो हरिः स्मृतः' ।
इति च ।। २८ ।।

केवलानुभवानन्दस्वरूपः परमेश्वरः ।
माययान्तर्हितैश्वर्य ईयते गुणसर्गया ।। २९ ।।

प्रकृत्या तमसाऽऽवृतत्वाद्धरेरैश्वर्यं न ज्ञायते ।। २९ ।।

तस्मात् सर्वेषु भूतेषु दयां कुरुत सौहृदम् ।
भावमासुरमुन्मुच्य तया तुष्यत्यधोक्षजः ।। ३० ।।

'विष्णोर्गृहत्वाद्भूतेषु दया कार्या विजानता' ।। इति च ।। ३० ।।

तुष्टे च तत्र किमलभ्यमनन्त आद्ये
किं तैर्गुणव्यतिकरैरिह येऽनुसिद्धाः ।
धर्मादिभिः किमगुणेन च कांक्षितेन
सारं जुषां चरणयोरुपगायतां नः ।। ३१ ।।

'काङ्क्षतो मोक्षगमपि सुखं नाकाङ्क्षतो यथा' ।। इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे षष्ठोऽध्यायः ।।



## सप्तमोऽध्यायः

जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः ।
फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ।। १८ ।।

'षड्विकाराः शरीरस्य न विष्णोस्तद्गतस्य तु ।
तदधीनं शरीरं च ज्ञात्वा तन्ममतां त्यजेत्' ।। इति च ।।

हेतुत्वाद्विष्णवधीनत्वं शरीरस्य ।। १८ ।।

अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः ।
विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ।। २२ ।।

'अभिमान्यपेक्षया विष्णुः पञ्चविंश इति स्मृतः ।
जडव्यपेक्षया जीवः सम्यग्ज्ञेयो हरिः स्मृतः' ।। इति च ।। २२ ।।

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ।
ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः ।। २५ ।।

बुद्धेः जीवस्य ।

'सत्वबुद्ध्यादिशब्दैस्तु जीवोऽपि क्वचिदीर्यते ।
जाग्रदाद्याः कर्म चैव सुखदुःखे च तस्य हि ।
जाग्रदादेः परो द्रष्टा सुखनिष्ठो हरिः स्मृतः ।। २५ ।।

एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः ।
सरूपमात्मनो धत्ते गन्धैर्वायुरिवान्वयात् ।। २६ ।।

'स जीवेन सह स्थानात्तत्स्वरूपः प्रदृश्यते ।
अज्ञदृष्ट्या न ज्ञदृष्ट्या यथा गन्धयुतोऽनिलः ।। २६ ।।

एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः ।
अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवाप्यते ।। २७ ।।

अदृष्टेर्जीवपरयोर्भेदस्याप्नोति संसृतिम् ।
अभेदनिश्चयाद्याति तमो नास्त्यत्र संशयः' ।। इति च ।।

बुद्धिभेदैः जीवानां तारतम्यज्ञापकैः ।

'दुःखरूपोऽपि संसारो बुद्धिपूर्वमवाप्यते ।
यथा स्वप्ने शिरश्छेदं स्वयं कृत्वाऽऽत्मनोऽवशः ।
ततो दुःखमवाप्येत तथा जागरितेऽपि तु ।
जानन्नप्यात्मनो दुःखमवशस्तु प्रवर्तते' इति च ।। २७ ।।

तस्माद् भवद्भिः कर्तव्यः कर्मणां त्रिगुणात्मनाम् ।
बीजनिर्हरणे योगः प्रवाहोपरमो धियः ।। २९ ।।

**धियः प्रवाहस्योपरमः** परमेश्वरे रमणम् ।।

निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि ।
यदाऽऽतिहर्षोत्पुलकाश्रुगद्गदः प्रोत्कण्ठ उद्गायति रौति नृत्यति
।। ३५ ।।

यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे जगत्पते
नारायणेत्यात्मगतिर्गतत्रपः ।। ३६ ।।

तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ।। ३७ ।।

**तद्भावभावः** तद्यथास्वरूपम् भक्तिः ।।

'केचिद्भक्ता विनृत्यन्ति गायन्ति च यथेप्सितम् ।
केचित्तूष्णीं जपन्त्येव केचिच्चोभयकारिणः' ।। इति च ।।३५-३७।।

अधोक्षजालापमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम् ।

तद् ब्रह्मनिर्वाणसुखं विदुर्बुधा-
स्ततो भजध्वं हृदये हृदीश्वरम् ।। ३८ ।।

**ब्रह्मनिर्वाणसुखं** ब्रह्मनिमित्तनिर्वाणसुखम् ।। ३८ ।।

कोऽतिप्रयासोऽसुरबालका हरे-
रुपासने स्वे हृदि छिद्रवत् सतः ।
अस्यात्मनः सख्युरशेषदेहिनां
सामान्यतः किं विषयोपपादनैः ।। ३९ ।।

अशेषदेहिनां सामान्यतो हृदिस्थत्वेन ।। ३९ ।।

तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ।
भजतानीहयाऽऽत्मानमनीहं हरिमीश्वरम् ।। ४९ ।।

'अप्रयत्नेन करणमनीहा प्रोच्यते बुधैः' ।। इति च ।। ४९ ।।

सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः ।
भूतैर्महद्भिः स्वकृतैः कृतानां बीजसंज्ञितः ।। ५० ।।

'व्यञ्जनाज्जगतो विष्णुर्बीजं न परिणामतः' । इति च ।। ५० ।।

दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ।
खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ।। ५५ ।।

**अच्युततां** च्युतिवर्जनम् ।।

।। इति श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे सप्तमोऽध्यायः ।।

## अष्टमोऽध्यायः

ऋषय ऊचुः–

त्वं नस्तपः परममात्थ यदात्मतेजो
येनेदमादिपुरुषात्मगतं समस्तम् ।
तद् विप्रलुप्तममुनाद्य शरण्यपाल
रक्षागृहीतवपुषा पुनरन्वमंस्थाः ।। ४४ ।।

तद्विप्रलुप्तमिति सादृश्याभेदवचनम् । आलोचनमेव तपः ।

'यस्य ज्ञानमयं तपः' ।। इति श्रुतेः ।।

गन्धर्वा ऊचुः–

वयं विभो ते नटनाट्यगायका
येनात्मसाद् वीर्यबलौजसा कृताः ।
स एष नीतो भवता दशामिमां
किमुत्पथस्थः कुशलाय कल्पते ।। ५१ ।।

'नटनं तु कथावन्धो नाट्यकं भावदर्शनम्' । इति गान्धर्वे ।।५१।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे अष्टमोऽध्यायः ।।



## नवमोऽध्यायः

साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ।
अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शङ्किता ।। २ ।।

प्रह्लादं प्रेषयामास ब्रह्माऽवस्थितमन्तिके ।
तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ।। ३ ।।

'अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैर्जनैः ।
नृसिंहं शङ्कितेव श्रीर्लोकमोहाय नो ययौ ।
प्रह्लादे चैव वात्सल्यदर्शनाय हरेरपि ।
ज्ञात्वा मनस्तथा ब्रह्मा प्रह्लादं प्रेषयत्तदा ।
एकत्रैकस्य वात्सल्यं विशेषाद्दर्शयेद्धरिः ।
अवरस्यापि मोहाय क्रमेणैवापि वत्सलः' ।। इति ब्रह्माण्डे ।।२-३।।

विप्राद् द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनात्मगेह-
प्राणः पुनाति सकलं न तु भूरिमानः ।। १० ।।

**द्विषड्गुणयुतात् ।**

'ज्ञानं च सत्यं च दमः शमश्च (श्रुतं च)
ह्यमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।
दानं च यज्ञश्च (धृतिः) तपः श्रुतं (शमश्च) च
महाव्रता द्वादश ब्राह्मणस्य' ।। इति भारते ।। १० ।।

यस्मिन् यतो येन च यर्हि यस्य
यस्मै यथा यमुत यस्त्वपरः परो वा ।
भावं करोति विकरोति पृथक् स्वभावः
सञ्चोदितस्तदखिलं भवतः स्वरूपम् ।। २० ।।

'कर्तृकर्मक्रियादीनां सत्ता वृत्तिस्तथैव च ।
विष्ण्वधीनं यतः सर्वं सर्वरूपस्तदुच्यते' ।। इति ब्रह्मतर्के ।।२०।।

माया मनः सृजति कर्ममयं बलीयः
कालेन चोदितगुणानुमतेन पुंसः ।
छन्दोमयं यदजयार्पितषोडशारं
संसारचक्रमज कोऽतितरेत्त्वदन्यः ।। २१ ।।

दशेन्द्रियप्राणमनोऽरम् । मूलं मन एव संसारचक्रस्य ।। २१ ।।

क्काहं रजःप्रभव ईश तमोऽधिकेऽस्मिन्
जातः सुरेतरकुले क्क तवानुकम्पा ।
न ब्रह्मणो न तु भवस्य न वै रमाया
यन्मेऽर्पितः शिरसि पद्मकरप्रसादः ।। २६ ।।

रमादीनामिदानीं नार्पितः ।। २६ ।।

नैषा परावरमतिर्भवतो ननु स्यात्
जन्तोर्यथाऽऽत्मसुहृदो जगतस्तथाऽपि ।
संसेवया सुरतरोरिव ते प्रसादः
सेवानुरूप उदयो न परावरत्वम् ।। २७ ।।

रमादीनामधिकोदयोऽपि सेवाधिकत्वादेव ।।

'श्रीब्रह्मब्राह्मीवीन्द्रादित्रिकतत्स्त्रीपुरुष्टुताः ।
तदन्ये च क्रमादेव सदा (सर्वे) मुक्तौ सृतावपि ।
हरिभक्तौ च तज्ज्ञाने सुखे च नियमेन तु ।
परतः स्वतः कर्मतो वा न कथञ्चित्तदन्यथा' ।। इति ब्रह्मतर्के ।। २७ ।।

त्वं वा इदं सदसदीश भवांस्ततोऽन्यो
माया यदात्मपरबुद्धिरियं ह्यपार्था ।
यद् यस्य जन्मनिधनं स्थितिरीक्षणं च
तद् वै तदेव खलु कालवदुष्टितर्वोः ।। ३१ ।।

यथा वृक्षश्च वृक्षदाहश्च दैवकालाधीनत्वाद्दैवं कालश्चेत्युच्यते एवं त्वदधीनत्वात्सर्वस्य सर्वं त्वमित्युच्यसे, स्वतस्तद्भिन्नोऽपि ।। अहं चान्यश्च परमेश्वर एवेत्यपार्था भ्रान्तिः । तदधीनत्वादेव स इत्युच्यते । न स्वरूपत्वादित्यर्थः ।। ३१ ।।

न्यस्येदमात्मनि जगद् विलयाम्बुमध्ये
शेषासनो निजसुखानुभवो निरीहः ।
योगेन मीलितदृगात्मनि वीतनिद्र-
स्तुर्यस्थितो ननु तमोऽनुगुणांश्च युंक्षे ।। ३२ ।।

तुर्यः स्थितः ।। ३२ ।।

तस्यैव ते वपुरिदं निजकालशक्त्या
सञ्चोदितं प्रकृतिधर्मिण आत्मगूढम् ।

अम्भस्यनन्तशयनाद्विरमत्समाधेः
नाभेरभूत् स्वकणिकाद्वटवन्महाब्जम् ।। ३३ ।।

तत्सम्भवः कविरतोऽन्यदपश्यमान-
स्त्वां बीजमात्मनि ततं स बहिर्विचिन्वन् ।
नाविन्ददब्दशतमप्सु निमज्जमानो
जातेऽङ्कुरे कथमिहोपलभेत बीजम् ।। ३४ ।।

जगदात्मकमब्जमपि भगवद्वशत्वात्तद्वपुः ।

'स्थावराणां तु सर्वेषां देवता याऽभिमानिनी ।
विशेषाद्वटबीजे च साऽश्वत्थे च व्यवस्थिता ।।
अदृश्या कणिका नाम सा वृक्षान्व्यञ्जयत्यपि ।
अतो बीजमिति प्रोक्ता सा जातेऽप्यङ्कुरे स्थिता ।।
एवं हरिः कारणेषु स्थितः कार्यजनेरनु ।
कार्याण्यनुप्रविष्टः सन् प्रथमं (नात्र) तत्र दृश्यते' ।। इति च ।।३३।।

स त्वात्मयोनिरतिविस्मित आश्रितोऽब्जं
कालेन तीव्रतपसा परिशुद्धभावः ।
त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं
भूतेन्द्रियाशयमये विततं ददर्श ।। ३५ ।।

एवं सहस्रवदनाङ्घ्रिशिरःकरोरु-
नासास्यकर्णनयनाभरणायुधाढ्यम् ।
मायामयं सदुपलक्षणसन्निवेशं
दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ।। ३६ ।।

'गन्धाख्या देवता यद्वत्पृथिवीं व्याप्य तिष्ठति ।
एवं व्याप्तं जगद्विष्णुं ब्रह्माऽऽत्मस्थं ददर्श ह' ।। इति च ।

**मायामयं** ज्ञानस्वरूपम् । **सदुपलक्षणसन्निवेशं** आनन्दादिलक्षण-समुदायरूपम् ।। ३६ ।।

प्रायेण देवमुनयः स्वविमुक्तिकामा
मौनं चरन्ति विजने न परार्थनिष्ठाः ।
नैतान् विहाय कृपणान् विमुमुक्ष एको
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ।। ४४ ।।

प्रायेण देवमुनयः ।

'आश्रितेषु कृपा कार्या विशेषात्तात्त्विकैः सुरैः ।
मुनिभिश्च तथा कैश्चित्कैश्चित्कार्याऽखिलेष्वपि ।
तथापि तात्त्विकसुरकृपाविषयतां गताः ।
एत एव विमुच्यन्ते तदन्ये न कथञ्चन' ।। इति च ।। ४४ ।।

रूपे इमे सदसती तव वेददृष्टे
बीजाङ्कुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र विचिन्वते त्वां
योगेन वह्निमिव दारुषु नान्यतः स्यात् ।। ४७ ।।

कार्यकारणरूपे तद्वशत्वापेक्षया साक्षात् स्वरूपापेक्षया स्वरूपादन्यद्रूपं न ।। ४७ ।।

।। इति श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे नवमोऽध्यायः ।।

## दशमोऽध्यायः

श्रीभगवानुवाच–

त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ ।
यत् साधोऽस्य कुले जातो भवान् वै कुलपावनः ।। १९ ।।

जन्मान्तरपितृभिस्त्रिसप्तभिः ।। १९ ।।

भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ।
भवान् मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ।। २२ ।।

'ऋते तु तात्त्विकान्देवान्नारदादींस्तथैव च ।
प्रह्लादादुत्तमः को नु विष्णुभक्तौ जगत्त्रये' । इति स्कान्दे ।। २२ ।।

कुरु ते प्रेतकार्याणि पितुः पूतस्य सर्वशः ।
मदङ्गस्पर्शनेनाङ्ग लोकान् यास्यति सुप्रजाः ।। २३ ।।

'मधुकैटभौ भक्त्यभावादूरौ भगवतो मृतौ ।
तम एव क्रमादाप्तौ भक्त्या चैद्यो हरिं ययौ' ।। २३ ।।

श्रीभगवानुवाच–

मैवंविधोऽसुराणां ते प्रदेयः पद्मसम्भव ।
वरः क्रूरनिसर्गाणामहीनाममृतं यथा ।। ३१ ।।

'यथा हिरण्यकस्यादादन्तःस्थितहरीरितः ।
तथा नादात्तदन्यस्य ब्रह्मा दैत्यस्य कस्यचित्' ।। इति च ।।३१।।

एनः पूर्वकृतं यत् तद् राजानः कृष्णवैरिणः ।
जहुस्तेऽन्ते तदात्मानः कीटाः पेशस्कृतो यथा ।। ४० ।।

'पौण्ड्रके नरके चैव साल्वे कंसे च रुग्मिणि ।
आविष्टास्तु हरेर्भक्तास्तद्भक्त्या हरिमीयिरे ।
असुरास्तु स्वयं ते तु महातमसि पातिताः' ।। इति च ।

तदात्मानस्तत्राविष्टास्तद्भक्ताः । वैरोपसर्जनेनानुबन्धेनेत्यन्वयः ।।४०।।

एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ।
अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ।। ४३ ।।

प्रह्लादस्यानुचरितं महाभागवतस्य च ।
भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ।। ४४ ।।

सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् ।
परावरेषां स्थानानां कालेन व्यत्ययो महान् ।। ४५ ।।

धर्मो भागवतानां च भगवान् येन गम्यते ।
आख्यानेऽस्मिन् समाख्यातमाध्यात्मिकमशेषतः ।। ४६ ।।

भगवान्येन गम्यत इत्यनेन भागवतधर्मेणैव भगवान् गम्यते न द्वेषादि-नेत्युपसंह्रियते ।। वृत्तानुकथनं च तदर्थत्वेनैव ।।

ज्ञानस्य विशेषा याथात्म्यादयः ।

'भक्तिर्ज्ञानं विरक्तिश्च नवकः श्रवणादिकः ।
धर्मो भागवतः प्रोक्तस्तद्भक्तेषु तथा नव' ।।

इति तन्त्रसारे ।। ४३-४६ ।।

स वा अयं ब्रह्म महद् विमृग्यं
कैवल्यनिर्वाणसुखानुभूतिः ।
प्रियः सुहृद् वः खलु मातुलेय
आत्माऽर्हणीयो विधिकृद् गुरुश्च ।। ५० ।।

**निर्वाणसुखं** अशरीरसुखम् । 'एतद्धाणमवष्टभ्य' ।। इति श्रुतेः ।।५०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे दशमोऽध्यायः ।।



## एकादशोऽध्यायः

नारद उवाच–

स एष भगवान् राजन् व्यतनोद् विततं यशः ।
पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ।। १ ।।

तदधीनं वा सर्वं न वेति संशयं रुद्रस्याहनत् । अल्पकेनैव मयेन रुद्रस्य प्रतीकारं कृत्वा ।। १ ।।

राजोवाच–

कस्मिन् कर्मणि देवस्य यशोऽभूज्जगदीशितुः ।
यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ।। २ ।।

कस्मिन्कर्मणि मयो विपरीतं चकार ।। २ ।।

वत्स आसीत् तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ।
प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ।।
तेऽसुरा ह्यपि पश्यन्तो न न्यषेधन् विमोहिताः ।। १२ ।।

'सापेक्षं न तु दोषाय यत्र सिद्धमपेक्षितम्' ।। इति शब्दनिर्णये ।। १२ ।।

देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन ।
आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ।। १४ ।।

विष्णुनाऽऽदिष्टं व्यपोहितुं देवोऽसुरोऽन्यो वा न समर्थः ।। १४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे एकादशोऽध्यायः ।।



## द्वादशोऽध्यायः

श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्याऽवनतिः सख्यं दास्यमात्मसमर्पणम् ।। ११ ।।

'अनाद्यनन्तकालेषु मुक्तौ संसार एव च ।
मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदैव तु ।
इति सम्प्रीतिकं ज्ञानं विद्यादात्मसमर्पणम् ।
बहिस्थेश्वरदासत्वं दास्यमित्युच्यते बुधैः' ।।
इति तन्त्रमालायाम् ।। ११ ।।

या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ।
हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ।। ३० ।।

'हरिरस्मिंस्थित इति स्त्रीणां भर्तरि भावना ।।
शिष्याणां च गुरौ नित्यं शूद्राणां ब्राह्मणादिषु ।
भृत्यानां स्वामिनि तथा हरिभाव उदीरितः' ।। इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे द्वादशोऽध्यायः ।।



## त्रयोदशोऽध्यायः

कल्पयेदात्मनो यावदाभासमिदमीश्वरः ।।
द्वैतं तावन्न विरमेत् ततो ह्यस्य विपर्ययः ।। १० ।।

'बहुत्वेनैव वस्तूनां यथार्थज्ञानमुच्यते ।
अद्वैतज्ञानमित्येतद् द्वैतज्ञानं तदन्यथा ।
यथाज्ञानं तथा वस्तु यथावस्तु तथा मतिः ।।
नैव ज्ञानार्थयोर्भेदस्तत एकत्ववेदनम्' ।। इति च ।। १० ।।

दत्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ।
गृहं वनं वा प्रविशेत् प्रव्रजेत् तत्र वा वसेत् ।। १४ ।।

'गुरोराज्ञानुरोधेन दूरस्थो वा गृही भवेत्' ।। इति च ।।

अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ।
भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ।। १५ ।।

'अप्रविष्टः सर्वगतः प्रविष्टस्त्वनुरूपवान् ।
एवं द्विरूपो भगवान् हरिरेको जनार्दनः' इति च ।। १५ ।।

आत्मन्यग्नीन् समारोप्य संन्यस्याहं ममात्मताम् ।
कारणेषु न्यसेत् सम्यक् सङ्घातं तु यथार्हतः ।। २४ ।।

'कार्यस्य कारणलयज्ञानमात्रं विलापनम्' ।। इति च ।। २४ ।।

(रूपाणि चक्षुषा राजन् ज्योतिष्यभिनिवेशयेत् ।)
अप्सु प्रवेशयेद् जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत् ।।
मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे ।। २८ ।।

परः कविर्बृहस्पतिः ।। २८ ।।

कर्माण्यध्यात्मना रुद्रे यदहंसम्मताः क्रियाः ।
सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ।। २९ ।।

'चित्तं हिरण्यगर्भे तु विलाप्य परमात्मनि ।
क्षेत्रज्ञाख्ये लापयेच्च ततो नान्यत्स्मरेद्बुधः' ।। इति च ।। २९ ।।

इत्यक्षरतयाऽऽत्मानं चिन्मात्रमवशेषितम् ।
ज्ञात्वाऽद्वयोऽथ विरमेद् दग्धयोनिरिवानिलः ।। ३१ ।।

**आत्मानं** परमात्मानम् । अद्वयः । ततोऽन्यस्मृतिवर्जितः । दग्धयोनिर्यथानल इति कृत्याभावमात्रम् ।

'न हरिं स्मरतः कृत्यं दग्धेन्धनहुताशवत्' । इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे त्रयोदशोऽध्यायः ।।



# चतुर्दशोऽध्यायः

पश्येदात्मन्यदो विश्वं परे सदसतोऽद्वये ।
आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ।। ४ ।।

**आत्मनि** परमात्मनि ।। ४ ।।

नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ।
अतिवादान् त्यजेत् तर्कान् पक्षं कञ्चिन्न संश्रयेत् ।। ७ ।।

न शिष्याननुबध्नीत ग्रन्थान् नैवाभ्यसेद् बहून् ।
न व्याख्यामुपजीवेत नारम्भानारभेत् क्वचित् ।। ८ ।।

अप्रयोजकं पक्षं न संश्रयेत् ।

'नाप्रयोजनपक्षी स्यान्न वृथा शिष्यबन्धकृत् ।
न चोदासीनशास्त्राणि न विरुद्धानि चाभ्यसेत् ।।

'न व्याख्ययोपजीवेत न निषिद्धान्समाचरेत् ।
एवं भूतो यतिर्याति तदेकशरणो हरिम्' ।। इति समाचारे ।।७-८।।

विकल्पं जुहुयाच्चित्ते तन्मनस्यर्थविभ्रमे ।
मनो वैकारिके हुत्वा मायायां वै जुहोत्यमुम् ।। ४४ ।।

**चित्ते** मनोवृत्त्यभिमानिनि । **अर्थविभ्रमे** अर्थेषु भ्रममाणे ।

'चित्ताख्याग्नेरधीनं हि जगदेतद्विचिन्तयेत् ।
मनोनामेन्द्रवशगमग्निं च प्रविचिन्तयेत्' ।। इत्यादि च ।। ४४ ।।

स्वात्मवृत्तं मयेत्थं ते सुगुप्तमनुवर्णितम् ।
व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत्प्रियः ।। ४६ ।।

'अशास्त्रीयत्वान्मुखतः शास्त्रापेतमिदं विदुः ।
शास्त्रनिर्णयगम्यत्वाच्छास्त्रीयमभिधीयते' ।। इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे चतुर्दशोऽध्यायः ।। १३ ।।



## पञ्चदशोऽध्यायः

कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः ।। १४ ।।

**नभश्छदिः** नभोव्याप्यस्थितः परमात्मा ।। १४ ।।

तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके ।
चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ।। २२ ।।

'सप्तम्यादित्रयं चैव तथा चैत्रत्रयोदशी ।
चतस्रस्त्वष्टकाः प्रोक्ताः सर्वपक्षाद्विशेषतः' ।। इति च व्यासस्मृतौ ।।

'हेमन्ते शिशिरे चैव नित्यश्राद्धं गुणोत्तरम्' । इति च ।। २२ ।।

पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः ।
शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ।। ३८ ।।

जीवेन रूपेण सह ।। ३८ ।।

तेष्वीशो भगवान् राजन् तारतम्येन वर्तते ।
तस्मात् पात्रं हि पुरुषो यावानात्मा यथेयते ।। ३९ ।।

'ब्रह्मादिस्थावरान्तेषु न विशेषो हरेः क्वचित् ।
व्यक्तिमात्रविशेषेण तारतम्यं वदन्ति च' ।। इति च ।। ३९ ।।

पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ।
तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ।। ४२ ।।

तन्वोऽस्य ब्राह्मणा राजन् कृष्णस्य जगदात्मनः ।
पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ।। ४३ ।।

'शिलावत्प्रतिमाः सन्तो विप्राद्याश्च हरेः स्मृताः' ।।
इति च ।। ४२-४३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे पञ्चदशोऽध्यायः ।।



## षोडशोऽध्यायः

निषेकादिश्मशानान्तैः संस्कारैः संस्कृताः द्विजाः ।
इन्द्रियेषु क्रियायज्ञान् ज्ञानदीपेषु जुह्वति ।। ५२ ।।

इन्द्रियाणि मनस्येवं वाचि वैकारिकं मनः ।
तां तु वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत् ।। ५३ ।।

ओङ्कारं बिन्दुनादे तु तं तु प्राणे महत्यमुम् ।

'यज्ञाभिमानिनो देवान्स्मरन्तीन्द्रियमानिनाम् ।
वशगांस्तान्मनोमानिसुरेन्द्रस्य वशे स्थितान् ।
वेदात्मिकायाः पार्वत्यास्तं तां रुद्रवशे स्थिताम् ।
वर्णत्रयात्मकं रुद्रं शेषे तु प्रणवात्मके ।
बिन्दुरूपसरस्वत्यां तं तां तस्यां पुनर्न्यसेत् ।
मूलस्थानादरूपायां तां वायौ तं जनार्दने ।
प्रकृतावथवा प्राणं तामेव पुरुषोत्तमे' ।। इति ब्रह्मतर्के ।।५२-५३।।

अग्निः सूर्यो दिवा वायुः शुक्लो राकोत्तरः स्वराट् ।। ५४ ।।

स्वराट् इन्द्रः ।। ५४ ।।

विश्वोऽथ तैजसः प्राज्ञस्तुर्य आत्मा समन्वयः ।
देवयानमिदं प्राहुर्भूत्वा भूत्वाऽनुपूर्वशः ।
आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते ।। ५५ ।।

'विश्वाद्या अनिरुद्धाद्यास्ते द्विधा सम्प्रकीर्तिताः ।
विष्णुरूपास्तदन्ये च तान्सर्वान्याति मोक्षगः ।

तदन्ये च दिवस्पुत्राः सर्वे च द्युसमीपगाः ।
ते दिवं प्रापयन्त्येनं सा वायुं स हरिं पृथक् ।
विश्वादिरूपं तुर्यश्च वासुदेवश्च नापरः' ।। इति च ।

अधिको भूत्वा सुखादिभिः ।। ५५ ।।

य एते पितृदेवानामयने देवनिर्मिते ।
शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ।। ५६ ।।

'भक्तिमान्मार्गविन्नैव नीचां गतिमवाप्नुयात्' ।। इति च ।। ५६ ।।

आदावन्तेऽजनानाशं बहिरन्तः परावरम् ।
ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिश्च यत् स्वयम् ।। ५७ ।।

ग्लापकत्वात् तमः ।। ५७ ।।

अबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः ।
दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ।। ५८ ।।

दुर्घटत्वादर्थत्वेन परमेश्वरेणैव कल्पितम् ।। ५८ ।।

क्षित्यादीनां इहार्थानां छाया न कतमाऽपि हि ।
न संघातो विकारोऽपि न पृथङ् नान्वितोऽपि वा ।। ५९ ।।

'छाया रीतिः प्रकारश्च भावश्चेत्यभिधीयते' । इति शब्दनिर्णये ।

क्षित्यादीनां पदार्थानां कतमोऽपि प्रकारो न घटते । परमेश्वरकल्पितत्वात्कार्यमित्येव वक्तुं युक्तम् । न हि बह्वपां सङ्घातमात्रं पृथिवी । न च

विकारमात्रम् । न हि कालुष्यादिविकारमात्रेण पृथिवी भवति । न चाद्भ्यः पृथक्स्थितिः । न च वस्तुद्वयवत् सहावस्थानमात्रम् ।। ५९ ।।

धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना ।
न स्युर्ह्यसत्यवयविन्यासन्नावयवा इव ।। ६० ।।

एवमवयवावयविनोरपि ।। ६० ।।

स्यात् सादृश्यभ्रमस्तावद् विकल्पे सति वस्तुनः ।
जाग्रत्स्वप्नौ यथा स्वप्ने तथा विधिनिषेधता ।। ६१ ।।

न च सादृश्यमात्रम् । वस्तुभेदे हि तद्युज्यते । तस्मात्स्वप्न एव । जाग्रत्स्वप्नौ यथा विशेषतो दृश्येते तथा पृथिव्यबादिविशेषो दुर्घटोऽपीश्वरकल्पनयैवासौ दृश्यते तथा पृथिव्यबादिविशेषो दुर्घटोऽपीश्वरकल्पनयैवासौ दृश्यते ।

'कार्यकारणवस्तूनां विशेषो न निरूपितः ।
तथा पीशेच्छयैवासौ दृश्यते नियतोऽपि च' ।। इति च ।। ६१ ।।

अहं पुराऽभवं कश्चिद् गन्धर्व उपबर्हणः ।
नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसम्मतः ।। ६९ ।।

**अतीतमहाकल्पे** अतीतब्रह्मकल्पे ।। ६९ ।।

'ब्रह्मकालः परश्चेति महाकल्पश्च कीर्तितः' । इति च ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये सप्तमस्कन्धे षोडशोऽध्यायः ।।

## ।। सप्तमः स्कन्धः समाप्तः ।।

# अष्टमस्कन्धः

## तृतीयोऽध्यायः

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ।
योऽस्मात् परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ।। ३ ।।

यत इति स्रष्टृत्वम् । येनेति प्रवर्तकत्वम् । य इति सत्ताप्रदत्वम् । न सन्ति यदुपेक्षयेत्युक्तत्वात् ।

'उत्पन्नस्यापि यत्सत्ता हरेस्तत्स इतीर्यते ।
हरेर्विश्वं भिन्नमपि परमोऽसौ यतो विभुः' ।। इति ब्रह्मतर्के ।। ३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये अष्टमस्कन्धे तृतीयोऽध्यायः ।।



## पञ्चमोऽध्यायः

न यस्य वध्यो न च रक्षणीयो
नोपेक्षणीयादरणीयपक्षः ।
अथापि सर्गस्थितिसंयमार्थं
धत्ते रजःसत्वतमांसि काले ।। २२ ।।

'अनुग्राह्यतया पक्षा देवा नात्मार्थतो हरेः' । इति च ।। २२ ।।

विपश्चितं प्राणमनोधियात्मना-
मर्थेन्द्रियाभासमनिद्रमव्रणम् ।

छायातपौ यत्र न गृध्रपक्षौ
तमक्षरं खं त्रियुगं व्रजामहे ।। २७ ।।

'छाया त्वविद्या सम्प्रोक्ता जन्यविद्याऽऽतपः स्मृतः ।

'जीवगृध्रस्य तौ पक्षावध ऊर्ध्वपथोः पृथक् ।
तौ विष्णोस्तु न विद्येते नित्यविद्यास्वरूपिणः' ।। इति च ।।२७।।

अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु ।
त्रिनाभि विद्युद्बलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ।। २८ ।।

गुणत्रयनाभि । विद्युद्ब्रह्म ।

'विद्युद्ब्रह्मेत्युपासीत' । इति श्रुतेः ।

'जगच्चक्रस्याक्षभूतो बलरूपश्च केशवः' ।। इति च ।। २८ ।।

न यस्य कश्चातितिपिपर्ति मायां
यया जनो मुह्यति वेदनार्थम् ।
तं निर्जितात्मात्मगुणं परेशं
नमामि भूतेषु समं चरन्तम् ।। ३० ।।

आत्मा च आत्मगुणाश्च निर्जिता येन ।। ३० ।।

अम्भस्तु यद्रेत उदारवीर्यं
सिध्यन्ति जीवन्त्युत वर्धमानाः ।
लोकास्त्रयोऽथाखिललोकपालाः
प्रसीदतां ब्रह्म महाविभूतिः ।। ३३ ।।

सोमं मनो यस्य समामनन्ति
दिवौकसां वै बलमन्ध आयुः ।
ईशो नगानां प्रजनः प्रजानां
प्रसीदतां नः स महाविभूतिः ।। ३४ ।।

'सूर्यसोमयमेन्द्रादीनृतेऽन्ये लोकपा अपि ।।
अद्भिर्जीवन्ति सोमाच्च महेन्द्रादीनृतेऽखिलाः ।
अपां सोमस्य चेन्द्राद्याः सर्वे वै जीवनप्रदाः' इति च ।।३३,३४।।

अग्निर्मुखं यस्य तु जातवेदा
जातः क्रियाकाण्डनिमित्तजन्मा ।
अन्तः समुद्रे पचतः स्वधातून्
प्रसीदतां नः स महाविभूतिः ।। ३५ ।।

**समुद्रे** उदरे ।।

यच्चक्षुरासीत् तरणिर्देवयानं
त्रयीमयो ब्रह्मण एष धिष्ण्यम् ।
द्वारं च मुक्तेरमृतस्य मृत्योः
प्रसीदतां नः स महाविभूतिः ।। ३६ ।।

अमृतस्येति मुक्तेरित्यस्य विशेषणम् ।। ३६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये अष्टमस्कन्धे पञ्चमोऽध्यायः ।।

※ ※ ※

## षष्ठोऽध्यायः

अवरोप्य गिरिं स्कन्धात् सुपर्णः पततां वरः ।
ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः ।। ३९ ।।

'अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरम् ।
अमृतार्थं सुपर्णोढो रैवतस्यान्तरे मनोः' ।। इति ब्राह्मे ।। ३९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये अष्टमस्कन्धे षष्ठोऽध्यायः ।।



## सप्तमोऽध्यायः

तदुग्रवेगं दिशि दिश्युपर्यधो
विसर्पदुत्सर्पदसह्यवीर्यम् ।
भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा
अरक्ष्यमाणाः शरणं सदाशिवम् ।। १९ ।।

विलोक्य तं देववरं त्रिलोक्या
भवाय देव्याऽभियुतं मुनीनाम् ।
आसीनमद्रावपवर्गहेतो-
स्तपो जुषाणं स्तुतिभिः प्रणेमुः ।। २० ।।

प्रजा ऊचुः–

देवदेव महादेव भूतात्मन् भूतभावन ।
त्राहि नः शरणापन्नान् त्रैलोक्यदहनाद् विषात् ।। २१ ।।

त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः ।
तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ।। २२ ।।

'रुद्रस्य यशसेऽर्थाय स्वयं विष्णुर्विषं विभुः ।
न सञ्जहे समर्थोऽपि वायुं चोचे प्रशान्तये' इति च ।।

'तत्र तत्र स्तुतिपदैर्हरिरेव तु तद्गतः ।
स्तूयतेऽतो युक्तमेव गुणाधिक्यवचोऽपि तु' इति च ।। १९-२२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये अष्टमस्कन्धे सप्तमोऽध्यायः ।।



## अष्टमोऽध्यायः

श्रीशुक उवाच–

नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं
क्वचित् तच्च न सङ्गवर्जितम् ।
कश्चिन्महांस्तस्य न कामनिर्जयः
स ईश्वरः किं परतो व्यपाश्रयः ।। १९ ।।

धर्मः क्वचित् तस्य न भूतसौहृदं
त्यागः क्वचित् तच्च न मुक्तिकारणम् ।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं
न हि द्वितीयो गुणसङ्गवर्जितः ।। २० ।।

क्वचिच्चिरायुर्न हि शीलमङ्गलं
क्वचित् तदप्यस्ति न वेद्यमायुषः ।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः
सुमङ्गलः कश्चन काङ्क्षते हि माम् ॥ २१ ॥

एवं विमृश्याव्यभिचारिसद्गुणं
पदं निजैकाश्रयिसद्गुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितं
रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २२ ॥

'अनाद्यनन्तकालेऽपि विष्णुमेवाश्रिता रमा ।
अन्येषां ज्ञापनार्थाय दोषानुक्त्वेतरान् जहौ' ॥ इति च ॥१९-२२॥

अमृतस्य पूर्णकलशं बिभ्रद्वलयभूषितः ।
स वै भगवतस्साक्षात् विष्णोरंशांशसम्भवः ॥ ३३ ॥

धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक् ।
तमालोक्यासुरास्सर्वे कलशं चामृताहृतम् ॥ ३४ ॥

लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन् ।
नीयमानेऽसुरैस्तस्मिन् कलशेऽमृतभाजने ॥
विषण्णमनसो देवा हरिं शरणमाययुः ॥ ३५ ॥

'तेषां सत्याच्चालनार्थं हरिर्धन्वन्तरिर्विभुः ।
समर्थोऽप्यसुराणां तु स्वहस्तादमुचत्सुधाम्' । इति च ॥३३-३५॥

॥ इति श्रीभागवततात्पर्यनिर्णये अष्टमस्कन्धे अष्टमोऽध्यायः ॥

## नवमोऽध्यायः

दृष्ट्वा मृधे गरुडवाहमिभारिवाह
आविध्य शूलमहिनोदथ कालनेमिः ।
तल्लीलया गरुडमूर्ध्नि पतद् गृहीत्वा
तेनाहनन्नृप सवाहमरिं त्र्यधीशः ।। ५६ ।।

माली सुमाल्यतिबलौ युधि पेततुर्य-
श्चक्रेण कृत्तशिरसावथ माल्यवांस्तम् ।
आहत्य तिग्मगदयाऽहनदण्डजेन्द्रं
तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाऽऽद्यः ।। ५७ ।।

'कालनेम्यादयः सर्वे हरिणा निहता अपि ।
शुक्रेणोज्जीविताः सन्तः पुनस्तेनैव पातिताः' ।। इति च ।।५६,५७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये अष्टमस्कन्धे नवमोऽध्यायः ।।



## एकोनविंशोऽध्यायः

यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ।
तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ।। १२ ।।

एष वा उत्तमश्लोको न जिहासति यद् यशः ।
हत्वा मैनां हरेद् युद्धे शयीत निहतो मया ।। १३ ।।

'बलिरप्यसुरावेशात्स्तुवन्नपि जनार्दनम् ।
आक्षिपत्यन्तरा क्वापि प्रह्लादो नित्यभक्तिमान्' ।।
इति ब्रह्माण्डे ।। १२-१३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये अष्टमस्कन्धे एकोनविंशोऽध्यायः ।।



## द्वाविंशोऽध्यायः

मीन उवाच–

न म एतदलं राजन् सुखं वस्तुमुदश्चनम् ।
पृथु देहि पदं मह्यं यत् त्वाऽहं शरणं गता ।। २० ।।

'अनन्तशक्तिर्भगवान् मत्स्यरूपी जनार्दनः ।
क्रीडार्थं याचयामास स्वयं सत्यव्रतं नृपम् ।।' इति मात्स्ये ।।२०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये अष्टमस्कन्धे द्वाविंशोऽध्यायः ।।

।। अष्टमः स्कन्धः समाप्तः ।।



# नवमस्कन्धः

## षष्ठोऽध्यायः

एवंविधानेकगुणः स राजा
परात्मनि ब्रह्मणि वासुदेवे ।
क्रियाकलापैः समुवाह भक्तिं
यया विरिञ्चादिमधश्चकार ।। ८४ ।।

'ब्रह्मादिभक्तिकोट्यंशादंशो नैवाम्बरीषके ।
नैवान्यस्य च कस्यापि तथापि हरिरीश्वरः ।
तात्कालिकोपचेयत्वात्तेषां यशस आदिराट् ।
ब्रह्मादयश्च तत्कीर्तिं व्यञ्जयामासुरुत्तमाम् ।
मोहनाय च दैत्यानां ब्रह्मादेर्निन्दनाय च ।
अन्यार्थं च स्वयं विष्णुर्ब्रह्माद्याश्च निराशिषः ।
मानुषेषूत्तमत्वाच्च तेषां भक्त्यादिभिर्गुणैः ।
ब्रह्मादेर्विष्णवधीनत्वज्ञापनाय च केवलम् ।
दुर्वासाश्च स्वयं रुद्रस्तथाप्यन्याय्यमुक्तवान् ।
तस्याप्यनुग्रहार्थाय दर्पनाशार्थमेव च' ।। इति गारुडे ।। ८४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये नवमस्कन्धे षष्ठोऽध्यायः ।।



# अष्टमोऽध्यायः

रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धे-
स्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ।
जघ्ने चतुर्दशसहस्रमवारणीय-
कोदण्डपाणिरटमान उवास कृच्छ्रम् ।। ९० ।।

रक्षोधमेन वृकवद् विपिनेऽसमक्षं
वैदेहराजदुहितुर्यपयापितायाम् ।
भ्रात्रा वने कृपणवत् प्रियया वियुक्तः
स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार ।। ९२ ।।

'नित्यपूर्णसुखज्ञप्तिस्वरूपोऽसौ यतो विभुः ।
अतोऽस्य राम इत्याख्या तस्य दुःखं कुतोऽण्वपि ।
तथाऽपि लोकशिक्षार्थमदुःखो दुःखवर्तिवत् ।
अन्तर्हितां लोकदृष्ट्या सीतामासीत्स्मरन्निव ।
ज्ञापनार्थं पुनर्नित्यसम्बन्धं स्वात्मनः श्रिया ।
अयोध्याया विनिर्गच्छन् सर्वलोकस्य चेश्वरः ।
प्रत्यक्षं तु श्रिया सार्धं जगामानादिरव्ययः' ।। ९०,९२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये नवमस्कन्धे अष्टमोऽध्यायः ।।



## नवमोऽध्यायः

मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ।
ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ।। १५ ।।

तच्छ्रुत्वा भगवान् रामो रुन्धन्नपि धिया शुचः ।
स्मरंस्तस्या गुणांस्तांस्तान् नाशक्नोद् रोद्धुमीश्वरः ।। १६ ।।

स्त्रीपुम्प्रसङ्ग एतादृक् सर्वत्र त्रासमावहः ।
अपीश्वराणां किमुत ग्राम्यस्य गृहमेधिनः ।। १७ ।।

तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत् प्रभुः ।
त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ।। १८ ।।

स्मरतां हृदि विन्यस्य बुद्धं पद्ममिवांशुकैः ।
स्वपादपल्लवं राम आत्मज्योतिरगात् ततः ।। १९ ।।

पुरुषो रामचरितं श्रवणैरुपधारयन् ।
आनृशंस्यपरो राजन् कर्मबन्धैर्विमुच्यते ।। २३ ।।

'नित्यपूर्णसुखज्ञप्तिस्वरूपोऽसौ यतो विभुः ।
अतोऽस्य राम इत्याख्या तस्य दुःखं कुतोऽण्वपि ।
तथाऽपि लोकशिक्षार्थमदुःखो दुःखवर्तिवत् ।
अन्तर्हितां लोकदृष्ट्या सीतामासीत्स्मरन्निव ।
ज्ञापनार्थं पुनर्नित्यसम्बन्धं स्वात्मनः श्रिया ।
अयोध्याया विनिर्गच्छन्सर्वलोकस्य चेश्वरः ।
प्रत्यक्षं तु श्रिया सार्धं जगामानादिरव्ययः' ।।

'नक्षत्रमासगणितं त्रयोदशसहस्रकम् ।
ब्रह्मलोकसमं चक्रे समस्तं क्षितिमण्डलम् ।।
रामो रामो राम इति सर्वेषामभवत्तदा ।
सर्वो राममयो लोको यदा रामस्त्वपालयत् ।।'
इति स्कान्दे ।। १५-१९,२३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये नवमस्कन्धे नवमोऽध्यायः ।।



## चतुर्दशोऽध्यायः

वरेण छन्दयामास प्रीतः सत्यवतीसुतः ।
वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ।। ७ ।।

ततश्चावभृथस्नानविधूताशेषकिल्बिषः ।
सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ।। २३ ।।

'जामदग्न्यो वरं वव्रेऽनन्तशक्तिरपि स्वयम् ।
पितुर्मान्यत्वसिध्यर्थं लोके लोकेश्वरः प्रभुः ।
अपापमपि देवेशं पितरः संन्यवर्तयन् ।
अजानन्तोऽस्य माहात्म्यं मोहितास्तस्य मायया ।
मोहयन्मायया लोकं चक्रे चापचितिं वधे ।
पुण्यपापादिनिर्मातुः कुतः पापादिसङ्गतिः' ।। इति च ।। ७,२३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये नवमस्कन्धे चतुर्दशोऽध्यायः ।।

## सप्तदशोऽध्यायः

मूढे भर द्वाजमिमं भरद्वाजं बृहस्पतेः ।
त्राता तु दुःखात् पितरौ भरद्वाजस्ततस्त्वयम् ।। ३८ ।।

चोद्यमाना सुरैरेवं मत्वा तं देवमात्मजम् ।
व्यसृजन्मरुतोऽबिभ्रन् दत्तोऽयं वितथेऽन्वये ।। ३९ ।।

द्वाजमिमं भर । उचथ्यस्य क्षेत्रजो बृहस्पतेर्जात इति । द्वयोर्जातत्वाद्वाजः । बृहस्पतेर्वाजः प्रजासन्ततिर्येन भृता बृहस्पतेर्भरद्वाजः ।

भरद्वाजो मरुद्भिश्च भृतो जातो द्वयोर्यतः । इति पाद्मे ।।३८-३९।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये नवमस्कन्धे सप्तदशोऽध्यायः ।।

## ।। नवमः स्कन्धः समाप्तः ।।



## दशमस्कन्धः

### प्रथमोऽध्यायः

स्वप्ने यथा पश्यति देहमीदृशं
मनोरथेनाभिनिविष्टचेतनः ।
दृष्टश्रुताभ्यां मनसाऽनुचिन्तयन्
प्रपद्यते तत् किमपि ह्यपस्मृतिः ।। ४१ ।।

स्वप्ने यथा दृष्टश्रुतस्मृत्यनुसारि देहं प्राप्नोति । अपस्मृतिर्मृतः । पूर्वदेह-स्मरणाभावात् । अनभिमानतः (अभिमानतः) ।। ४१ ।।

यतो यतो धावति दैवचोदितं
मनो विकारात्मकमात्मपञ्चसु ।
गुणेषु मायारचितेषु देह्यसौ
प्रपद्यमानः सह तेन जायते ।। ४२ ।।

**यतो यतः ।** यत्र यत्र मनो धावत्यात्मपञ्चानां मध्ये तत्र तत्र तेन दैवेन सह जायते गुणानुबद्धः सन् ।

'दैवगान्धर्वपित्र्येषु मानुषेष्वासुरेषु च ।
यत्र यत्र मनो याति तत्र तत्रोपजायते ।
स्वगुणस्यानुसारेण सत्वादिविनिबन्धनः' ।। इति गारुडे ।

'देवादित्वं योग्यतया तत्सकाशस्त्वनुस्मृतेः ।
श्वेतद्वीपादि तत्रापि योग्यतामप्यपेक्ष्य तु ।

विष्णोः स्थानं विनाऽन्यत्र वायुशक्रादिनामपि ।
त्रैलोक्यदेशभेदेषु योग्यता न त्वपेक्षिता' ।। इति नारदीये ।।४२।।

ज्योतिर्यथैवोदकपार्थिवेष्वदः
समीरवेगानुगतं विभाव्यते ।
एवं स्वमायारचितेष्वसौ पुमान्
गुणेषु रागानुगतो विमुह्यति ।। ४३ ।।

तस्मान्न कस्यचिद् द्रोहमाचरेत् स तथाविधः ।
आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ।। ४४ ।।

**विभाव्यते** विविधं भाव्यते । **स्वमायारचितेषु** विष्णुमायारचितेषु । **रागानुगतः** पुमान् जीवो विविधं मुह्यति ।

'यथैवोदशरावेषु सूर्यादिः प्रतिबिम्बितः ।
वायुना चलितो भाति छिन्नभिन्नादिरूपवान् ।
एवं विष्णिवच्छया जातगुणेषु प्रतिबिम्बितः ।
छिन्नो भिन्नो मृतोऽस्मीति बहुधा प्रतिपद्यते ।
तदेव च दृढीभूत उदके निःशरावके ।
छेदभेदादि नाप्नोति निश्चलं प्रतिबिम्बितम् ।
एवं गुणैर्विमुक्तस्तु जीवो नाप्नोति दुःखिताम् ।
शरावबद्गुणाः प्रोक्ता अज्ञानं तु द्रवत्ववत् ।
दृढीभूतोदवज्जीवस्तज्ज्ञानं प्रतिबिम्बवत् ।
नित्यान्तःकरणं चैव प्रतिबिम्बश्च तद्गतः ।
द्वयमेव विमुक्तस्य न किञ्चिज्जडमिष्यते ।
सूर्यकान्तादिवत्तस्य स्वरूपं द्वयमप्युत ।

तस्मान्न हन्तुं शक्योऽसौ केनचिज्जीव आत्मवान् ।
तस्मात्स्वजीवनार्थाय न परद्रोहमाचरेत् ।
हन्यते चाङ्गभावेन परेषां द्रोहमाचरन्' ।। इति तन्त्रभागवते ।।

'परः स्वो हरिरुद्दाम इति नामचतुष्टयम् ।
विष्णोर्गुह्यं तु यो वेद सर्वपापैः प्रमुच्यते' ।। इति प्रकाशिकायाम् ।।

'स्वतन्त्रत्वात्सुखत्वाच्च स्वनामा विष्णुरुच्यते' इति पाद्मे ।।४३,४४।।

अग्नेर्यथा दारुवियोगयोगयो-
रदृष्टतोऽन्यन्न निमित्तमस्ति ।
एवं हि जन्तोरपि दुर्विभाव्यः
शरीरसंयोगवियोगहेतुः ।। ५१ ।।

कुण्डादिस्थाग्नेर्दारुयोगादौ स्वतः प्रवृत्त्यभावात् ।

'यथा कुण्डस्थितस्याग्नेर्दैवाद्दारूपसंनमेत् ।
देहयोगो वियोगश्च तथा दैवान्न चान्यथा' ।। इति वामने ।। ५१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे प्रथमोऽध्यायः ।।



## तृतीयोऽध्यायः

भगवानपि विश्वात्मा भक्तानामभयङ्करः ।
आविवेशांशभागेन मन आनकदुन्दुभेः ।। १७ ।।

ततो जगन्मङ्गलमच्युतांशं
समाहितं शूरसुतेन देवी ।
दधार सर्वात्मकमात्मभूतं
काष्ठा यथाऽऽनन्दकरं नभस्तः ।। १९ ।।

'आविश्य पितरं विष्णुः स्वरूपेणैव मातरम् ।
विडम्बनार्थं लोकस्य निर्जनिश्चाप्यथाविशत् ।
आनन्दमात्रदेहेन जातवत्सम्प्रदृश्यते' । इति च ।। १७,१९ ।।

ब्रह्मभवावूचतुः–

सत्यव्रतं सत्यपरं त्रिसत्यं
सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्यमुत सत्यनेत्रं
सत्यात्मकं त्वां शरणं प्रपन्नाः ।। २७ ।।

'सच्छब्द उत्तमं ब्रूयादानन्दं तीति वै वदेत् ।
येति ज्ञानं समुद्दिष्टं पूर्णानन्ददृशिस्ततः ।
सत्यशब्दोदितं तादृग्रूपं नित्यं यतो हरेः ।
सत्यव्रतस्ततो विष्णुः सद्भूतत्रयमुच्यते ।
त्यं तदन्यत्समुद्दिष्टं तत्परत्वात्तु तत्परः ।
वेदमुख्यार्थरूपत्वात्त्रिसत्यो भगवान् हरिः ।
सत्यस्य चोत्तमानन्दज्ञानदातृत्वतः सदा ।
सत्यस्य सत्यो भगवान्सत्यस्थो जगति स्थितः ।
जगन्नेतृत्वतः सत्यनेता विष्णुः प्रकीर्तितः ।
अत्तृत्वाच्च तदादानात्सत्यात्मा चोच्यते विभुः' इति तन्त्रभागवते ।।

एकायनोऽसौ द्विफलस्त्रिमूल-
श्चतूरसः पञ्चशिफः षडात्मा ।
सप्तत्वगष्टविटपो नवाक्षो
दशच्छदी द्विखगो ह्यादिवृक्षः ।। २८ ।।

त्वमेक एवास्य सतः प्रसूतिः
स्थानं निधानं त्वमनुग्रहश्च ।
त्वन्मायया संवृतचेतसस्त्वां
पश्यन्ति नाना न विपश्चितो ये ।। २९ ।।

'जगद्वृक्षाश्रया ह्येषा प्रकृतिस्तु गुणत्रयम् ।
मूलं मात्राः शिफास्तस्य उत्पित्सुत्वादिकास्तथा ।
षट्प्रकारास्तु विटपा देवगन्धर्वदानवाः ।
राक्षसाश्च पिशाचाश्च तिर्यङ्मानुषतस्थुषः ।
इन्द्रियाण्यस्य पत्राणि द्वारो द्वारो नव स्मृताः ।
प्रवृत्तं च निवृत्तं च फलद्वयमुदीरितम् ।
धर्मादयस्त्वत्र रसा मोक्ष एकफलस्य तु ।
प्रवृत्ताश्च निवृत्ताश्च पक्षिणो द्विविधा मताः ।
कारणस्य सदा सत्वात्प्रवाहेण च सन्नसौ ।
न कदाचिन्न भूतोऽसौ न चैव न भविष्यति ।
स्वतो वा परतो वापि सन्नतोऽसौ जगत्तरुः ।
अस्य स्वर्गादिकृद्विष्णुः सदानन्दैकरूपकः ।।' इति च ।।२८-२९।।

बिभर्षि रूपाण्यवबोध आत्मन्
क्षेमाय लोकस्य चराचरस्य ।

सत्त्वोपपन्नानि सुखावहानि
सतामभद्राणि मुहुः खलानाम् ।। ३० ।।

त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि
समाधिनाऽऽवेशितचेतसो ये ।
त्वत्पादपोतेन महत्कृतेन
कुर्वन्ति गोवत्सपदं भवाब्धिम् ।। ३१ ।।

'सदा सर्वगुणाढ्यत्वात्सत्ववान् हरिरुच्यते ।
न तु सत्वगुणात्मत्वाद्यत स्त्रिगुणवर्जितः' ।।
इति नारदीये ।। ३०,३१ ।।

स्वयं समुत्तीर्य सुदुस्तरं द्युमन्
भवार्णवं भीममदभ्रसौहृदाः ।
भवत्पदाम्भोरुहनावमत्र ते
निधाय याताः सदनुग्रहो भवान् ।। ३२ ।।

'भगवत्पादपोतोऽसौ नान्यपोतसमो भवेत् ।
सन्निधायैव शिष्येषु तदेव प्राप्नुयुर्यतः' ।। इति वामने ।।

'भगवत्पादनौकाया नेयं नौकोपमा भवेत् ।
तया तीर्त्वा तु तामेव प्राप्य तिष्ठन्ति तत्र यत्' ।। इति ब्राह्मे ।।

अतस्तामेव याताः ।। ३२ ।।

सत्त्वं विशुद्धं श्रयते भवान् स्थितौ
शरीरिणां श्रेयउपायनं वपुः ।

वेदक्रियायोगतपःसमाधिभि-
स्तवार्हणं येन जनः समीहते ।। ३५ ।।

‘विशुद्धसत्त्वब्रह्मादेः शरीरे संस्थितो हरिः ।
तेषामादेशमार्गेण वेदाद्यैरर्चयन्ति तम्’ ।। इति भागवततन्त्रे ।।३५।।

सत्त्वं न चेद् धातरिदं निजं भवेद्
विज्ञानमज्ञानभिदापमार्जनम् ।
गुणप्रकाशैरनुमीयते भवान्
प्रकाशते यस्य च येन वाऽगुणः ।। ३६ ।।

‘सत्वं ब्रह्मादिदेहाख्यं ज्ञानरूपं तमोनुदम् ।
यदि न स्यात्तदा सत्वप्रकाशानुमितो विभुः ।
यदि न स्यात्परो विष्णुः कथं विद्वज्जना अमुम् ।
अर्चयन्तीति तत्त्वस्य जिज्ञासुभिरधोक्षजः ।
कथं ज्ञायेत कस्यापि निर्गुणत्वात्परो विभुः’ ।। इति तन्त्रभागवते ।।

न नामरूपे गुणजन्मकर्मभिः
निरूपितव्ये तव तस्य साक्षिणः ।
मनोवचोभ्यामनुमेयवर्त्मनो
देवक्रियायाः प्रतियन्त्यथापि हि ।। ३७ ।।

‘लोकसिद्धार्थनाम्नः स राहित्यान्नामवर्जितः ।
अरूपोऽप्राकृतत्वाच्च सत्वाभावात्तथाऽगुणः ।
अकर्माऽक्लिष्टकारित्वान्नित्यत्वादज एव च ।
अलौकिकार्थसन्नाम्नामनन्तत्वाज्जनार्दनः ।

अनन्तनामा परमः सुसुखज्ञानरूपवान् ।
तानि चास्य सुदिव्यानि सुगन्धीनि सुभान्ति च ।
शुभलक्षणपूर्णानि सुवर्णानि महान्ति च ।
यदतोऽनन्तरूपोऽसौ पूर्णानन्दादिभोजनात् ।
बलैश्वर्यसुवीर्यादिपूर्णासङ्ख्यगुणत्वतः ।
अनन्तगुण एवासौ ते चाभिन्ना गुणा हरेः ।
परस्परमभिन्नाश्च सर्वधर्माश्च तद्गताः ।
अभिन्नानि च रूपाणि सर्वाणि जगदीशितुः ।
प्राकृतस्य तु नामादेरीक्षिता पुरुषोत्तमः ।
अनामादिवचोभिस्तु स एषोऽर्थोऽनुमीयते ।
अनामत्वादि चान्यच्च ज्ञानिनां मनसेङ्ग्यते ।
तेनैव चोह्य एषोऽर्थस्तस्माज्ज्ञेय इति प्रभुः' ।। इति ब्रह्मतर्के ।।

देवक्रियायाः प्रतियन्ति भगवत्प्रेरणादेव जानन्ति ।

'नामरूपादि विष्णोस्तु न शक्यं ज्ञातुमञ्जसा ।
तथापि तत्प्रसादेन जानन्ति परमर्षयः' ।। इति पाद्मे ।। ३७ ।।

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्
नामानि रूपाणि च मङ्गलानि ते ।
क्रियासु यस्त्वच्चरणारविन्दयो-
राविष्टचित्तो न भवाय कल्प्यते ।। ३८ ।।

यस्मान्नामरूपादयः सन्ति तस्माच्छृण्वन् गृणन् । क्रियासु क्रियमाणासु प्रेरकत्वेन पूज्यत्वेन च ।

'सर्वक्रियासु कर्तृत्वपूज्यत्वेन जनार्दनम् ।
यो वेत्ति नैति संसारं तत्प्रसादान्न संशयः' ।। इति क्रियायोगे ।।३८।।

दिष्ट्या हरेऽस्या भवतः पदो भुवो
भारोऽपनीतस्तव जन्मनेशितुः ।
दिष्ट्याऽङ्कितां त्वत्पदकैः सुशोभनै-
र्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ।। ३९ ।।

'खं नाभिश्चरणौ क्षितिः' इति भवतः पदो भुवः ।

'पदाद्याश्रयणाद्विष्णोः पृथिव्यादि पदादिकम् ।
तज्जत्वाद्वाथ सादृश्याद्यथानुर्भूमिगं पदम्' ।। इति ब्रह्मतर्के ।।३९।।

न तेऽभवस्येश भवस्य कारणं
विना विनोदं बत तर्कयामहे ।
भवो निरोधः स्थितिरप्यविद्ययाऽऽ-
कृता यतस्त्वय्यभवाश्रयात्मनि ।। ४० ।।

'अज्ञानादेव मन्यन्ते विष्णोर्जनिमृती नराः ।
स्थितिरूपस्य चान्यस्मात्स्थितिं मोक्षाश्रयस्य हि ।
स्वेच्छया हि जनिं भङ्गं स्थितिं चासौ करोत्यजः ।
सर्वस्य जगतो यस्मात्तज्जन्मादिः कुतो भवेत्' ।। इति च ।।४०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे तृतीयोऽध्यायः ।।



## चतुर्थोऽध्यायः

स एव स्वप्रकृत्येदं सृष्ट्वाऽग्रे त्रिगुणात्मकम् ।
तदनु त्वं ह्यप्रविष्टः प्रविष्टः इव भाव्यसे ।। १५ ।।

'बहिश्च विद्यमानत्वादप्रविष्टो जगद्धरिः ।
प्रविष्टवच्च तत्रैव पूर्णरूपत्वतो विभुः ।
अप्रवेशः प्रवेशश्च प्रविष्टोपमता तथा ।
बहिरन्तर्गतस्य स्यादित्याहुः शब्दवेदिनः' ।। इति च ।। १५ ।।

य एतेऽविकृता भावाः सप्त ते विकृतैः सह ।
नानावीर्याः पृथग्भूता विराजं शयनं तव ।। १६ ।।

सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव ।
प्रागेव विद्यमानत्वान्न तेषामिह सम्भवः ।। १७ ।।

'महदादिस्त्वविकृत ईषद्विकृतरूपतः' । इति च ।।

**अनुगता इव** प्रविष्टा इव । पूर्वोक्तवद्बहिरपि विद्यमानत्वात् । अन्तश्च देवतानामविभक्तशक्तित्वात्पूर्वोत्पन्नत्वात्तत्त्वानामण्डप्रवेशमात्रम् । व्यक्तिविशेषादुत्पत्तिरित्युपचर्यते । अण्डजो ब्रह्मेत्यादि ।

'महद्रूपादिना ब्रह्मा देवाश्चैव प्रजज्ञिरे ।
अण्डे त्वेषामभिव्यक्तिर्जनिरित्यभिधीयते' ।। इति च ।।१६,१७।।

एवं भवान् बुद्ध्यनुमेयलक्षणो
ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः ।

अनावृतत्वाद् बहिरन्तरं न ते
सर्वस्य सर्वात्मन आत्मवस्तुनः ।। १८ ।।

ग्राह्यगुणविषयबुध्यनुमेयलक्षणः । ग्राह्यगुणेष्वस्वातन्त्र्यात्तज्ज्ञापकोऽन्योऽस्तीति ज्ञायते ।

'ज्ञाताऽपि सर्वभावानां ज्ञायते ज्ञानलिङ्गतः ।
जिघृक्षोर्ग्रहणाभावादस्वातन्त्र्यप्रतीतितः ।
सर्वत्राव्यवधानेन द्रष्टृत्वात्सर्ववस्तुनः ।
आन्तरं बाह्यमित्येव विशेषो नास्ति कश्चन ।।' इति तन्त्रभागवते ।

जीवस्य ग्रहणशक्तिरपि तस्येत्यपिशब्दः । एवं शरीरमुत्पाद्य ज्ञायसे । **सर्वस्य** सम्पूर्णस्य ।

'सर्वः सम्पूर्णसामर्थ्यात्सर्वात्मा सर्वभक्षणात् ।
अनन्याश्रयतश्चात्मवस्तुत्वमभिधीयते' ।। इति च ।

आत्मन्येव वासादात्मवस्तु ।। १८ ।।

यदात्मनो दृश्यगुणेषु सन्निधे-
र्व्यवस्यसेऽस्वव्यतिरेकतोऽबुधैः ।
विनाऽनुवादं न च तन्मनीषितं
सम्यग् वचो व्यक्तमुपाददत्पुमान् ।। १९ ।।

परमात्मनोऽपि शरीरे सन्निधानादेवाबुधैरस्वव्यतिरेकतो ज्ञायसे । यथानुकूलवादं वेदवचनं विना प्रवर्तमानं न तन्मनीषितम् । सम्यक् ।

'अभी३दमेकमेको अस्मि निष्पाळभीद्वा किमु त्रयः करन्ति ।
खलेन पर्षान्प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः' ।।

इति जीवेशयोर्भेदे व्यक्तं वचः परः पुमानुपाददे ।

'प्रविष्टत्वाच्छरीरेषु जीव एवेति दुर्धियः ।
मन्यन्ते परमात्मानं न तन्मतमनुव्रजेत् ।
वेदवादविरोधित्वादनुयाता तमो विशेत् ।
यतः पर्यङ्कशयन आह विष्णुः सनातनः ।
इदं जगत्सर्वमथेदृशानि भूरीणि वा मामभियान्ति सङ्ख्ये ।
धान्यानि यद्वत्खलगानि मर्त्याः सञ्चूर्णयिष्याम्यहमेक एव' ।।
इति ब्रह्माण्डे ।

चेति फलतोऽपि तमो यान्तीति ।

'ऐकात्म्यज्ञानतो यान्ति तमो भेदात्परं पदम् ।
स्वातन्त्र्यपारतन्त्र्यादिज्ञानं भेददृशिर्भवेत्' ।। इति ब्रह्मवैवर्ते ।।१९।।

त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो
वदन्त्यनीहादगुणादविक्रियात् ।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते
तदाश्रयत्वादुपचर्यसे गुणैः ।। २० ।।

'अनीहोऽक्लिष्टकारित्वात्तथाऽविकृत एव सन् ।
सर्वं करोति तद्युक्तमैश्वर्यात्पूर्णशक्तितः' ।। इति ब्राह्मे ।

अगुणश्चेत्कथं गुणैः सृष्ट्यादिकृदिति तदाश्रयत्वात् ।

'अगुणोऽगुणदेहत्वात्सगुणो गुणधारणात् ।
ऐश्वर्यादिगुणत्वाद्वा वासुदेव इतीर्यते' इत्याग्नेये ।। २० ।।

सत्त्वं त्रिलोकस्थितये स्वमायया
बिभर्षि शुक्लं खलु वर्णमात्मनः ।
सर्गाय रक्तं रजसोपबृंहितं
कृष्णं च वर्णं तमसा जनात्यये ।। २१ ।।

'जगतां वर्धयन्सत्वं यदा रक्षति केशवः ।
हयग्रीवादिरूपेण शुक्लवर्णस्तदा विभुः ।
वर्धयंस्तु रजो येन जगदुत्पादयेद्धरिः ।
तद्रक्तं जामदग्न्यादिरूपं येन विनाशयेत् ।
वर्धयंस्तु तमो लोके तत्कृष्णं यादवादिकम् ।
सर्वत्र सर्वं कुरुते विशेषस्तत्र कीर्तितः ।
ज्ञानदानादिना रक्षा महतां सम्प्रकीर्तिता ।
रागदानेन महतां सृष्टिः सृष्टिरुदीर्यते ।
असतां तु तनोर्वृद्धिं कुर्वन्पातयते यदा ।
सतां विवर्धनार्थाय कृष्णरूपी तदा हरिः ।
ज्ञानाद्युत्पत्तिकृच्चापि रूपं रक्तं विभोः स्मृतम् ।
तमोविनाशकमपि कृष्णं विष्णोरुदाहृतम् ।
आचार्यादिषु रागार्थे शुद्धसत्वात्मकं रजः ।
यतो व्यपेक्षितं नाशे तमसोऽपि ततः परम् ।
तमो द्वेषात्मकं शुद्धं सत्वात्मकमुदीर्यते ।
एवं सृतिगतानां तु रागाद्या न गुणोद्भवाः ।

शुद्धज्ञानात्मकाः सर्वे मुक्तानां नात्र संशयः ।
सर्वत्र सर्वकृच्चापि हयग्रीवादिरूपकः ।
ज्ञानादिरक्षको विष्णुर्जामदग्न्यादिरूपवान् ।
ज्ञानाद्युत्पादको नित्यं कृष्णादिर्दोषनाशकः ।
एकरूपोऽपि भगवान्बहुरूप इवेयते ।
अचिन्त्यैश्वर्यरूपत्वात्पूर्णानन्दैकरूपकः ।।' इति ब्रह्मतर्के ।

'स्वेच्छया तु गुणान्विष्णुर्नानारूपान्करोत्यजः ।
गुणानामाश्रयत्वात्तु भवेत्स गुणबृंहितः' ।। इति तन्त्रभागवते ।। २१ ।।

त्वमस्य लोकस्य विभो रिरक्षिषु-
गृहेऽवतीर्णोऽसि ममाखिलेश्वर ।
राजन्यसंज्ञासुरकोटियूथपै-
र्निर्व्यूह्यमानां निहनिष्यसे चमूम् ।। २२ ।।

'सतां सुखविवृद्ध्यर्थमसतां पीडनं हरेः ।
यावच्चासुरदुःखं स्यात्तावद्देवसुखं भवेत् ।
तत्रापि तारतम्येन ब्रह्मणोऽभ्यधिकं सुखम् ।
यावत्क्षीणं तमस्तावत्प्रकाशस्य तु वर्धनम् ।
सर्वस्माच्च कलेः पीडा ब्रह्मणोऽभ्यधिकं सुखम् ।
तस्मात्सतां रक्षणाय सर्वकर्म हरेः स्मृतम्' ।। इति ब्रह्मतर्के ।।२२।।

देवक्युवाच–

रूपं यत् तत् प्राहुरव्यक्तमाद्यं
ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ।

सत्तामात्रं निर्विशेषं निरीहं
स त्वं साक्षाद् विष्णुरध्यात्मदीपम् ।। २५ ।।

'सर्वाशुभविनिर्मुक्तगुणमात्रो यतो हरिः ।
सत्तामात्रमतः प्राहुर्निर्विशेषोऽखिलोत्तमः ।
अनादरान्निरीहश्च सेहः सर्वकृती यतः' ।। इति तन्त्रभागवते ।।

यस्य तद्रूपं सत्वम् । 'सप्तसु प्रथमा' इति सूत्रात् ।। २५ ।।

नष्टे लोके द्विपरार्धावसाने
महाभूतेष्वादिभूतं गतेषु ।
व्यक्तेऽव्यक्तं कालवेगेन याते
भवानेकः शिष्यतेऽशेषसंज्ञः ।। २६ ।।

**अशेषसंज्ञः** सर्वनामा ।। २६ ।।

योऽयं कालस्तस्य तेऽव्यक्तबन्धो
चेष्टामाहुश्चेष्टते येन विश्वम् ।
निमेषादिर्वत्सरान्तो महीयां-
स्तं त्वेशानं क्षेमधाम प्रपद्ये ।। २७ ।।

चेष्टते अनेनेति चेष्टा ।। २७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे चतुर्थोऽध्यायः ।।

※ ※ ※

## पञ्चमोऽध्यायः

मा शोचेथां महाभागावात्मजान् स्वकृतं भुजः ।
जन्तवो न सदैकत्र दैवाधीनाः सहासते ।। १८ ।।

पूतनाकंसनरकशिशुपालादिषु द्विधा ।
जीवाः सन्तस्त्वसन्तश्च तत्र बन्ध्वादिरूपिणः ।
विष्णोः सन्त इति ज्ञेया असन्तः शत्रुरूपिणः ।
शुभजीवप्रकाशेन कदाचिच्छुभबुद्धयः ।
विपर्ययेऽन्यथा च स्युः शुभास्तत्र हरिं ययुः ।
असुराश्च तमो घोरं यदि तत्रैव मध्यमाः ।
मध्यमां गतिमेवापुरेकदेहगता अपि ।। इति गारुडे ।। १८ ।।

भुवि भौमानि भूतानि यथाऽऽयान्त्यपयान्ति च ।
नायमात्मा तथैतेषु विपर्येति यथैव भूः ।। १९ ।।

यतोऽनेकविधोऽभेदो यत आत्मविपर्ययः ।
देहयोगवियोगश्च संसृतिर्न निवर्तते ।। २० ।।

तस्माद् भद्रे स्वतनयान् मया व्यापादितानपि ।
माऽनुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः ।। २१ ।।

**अयमात्मा** परमात्मा ।।

यतः परमात्मनो नैकविधमैक्यं, विपरीतज्ञानेन यतश्च संसृतिर्न निवर्तते । स एव न विपर्येति । पुत्रादिकं तु विपर्येति ।। तस्मात्तस्मिन्नेव स्थितिं कृत्वा माऽनुशोच ।।

'अहं ब्रह्मास्मि देवोऽस्मि नास्मि केवलमानुषः ।
जातोऽस्मि वर्धे धनवान्म्रिय इत्यादिका सदा ।
देहादिषु च देवेषु परे ब्रह्मणि चाभिदा ।
मोहाद्यन्मायया नित्यं दृश्यतेऽधममध्यमे ।
स ईशो न विपर्येति सर्वेशत्वात्कदाचन ।
पुत्रादिकं विपर्येति पित्रादिश्च यतो भवेत्' ।। इति ब्राह्मे ।।

'तल्लक्षणैर्विहीनः सन्ब्रह्मदेवोऽस्मि चेति तु ।
असुराः प्रतिपद्यन्ते जन्मादीन्मानुषा जनाः' ।। इति च ।।

'परं ब्रह्मण एकस्य ब्रह्मास्मीति विचिन्तनम् ।
परब्रह्मेति रामादिलक्षणैरवधारयेत् ।
देवोऽस्मीति च देवानां तच्च ज्ञेयं स्वलक्षणैः ।
मर्त्यानां मानुषोऽस्मीति प्रतिपत्तिर्विधीयते ।
अन्यथाप्रतिपत्त्या तु तमो यान्ति विनिश्चयात् ।
अन्यथा प्रतिपद्यन्ते आसुरा नियतं जनाः ।
घोरं तमश्च ते यान्ति तथा ज्ञानात्परं सुराः' ।। इति च ।।१९-२१।।

एवमेतन्महाराज यथा वदसि देहिनाम् ।
अज्ञानप्रभवा हन्ति स्वपरेति भिदा यतः ।। २६ ।।

देहिनामज्ञानप्रभवा यातनाः स्वपरेति भिदा हन्ति ।

'देवोऽहं मानुषो वेति विशेषं तत्र चापि तु ।
तथैव परमात्मानं विशेषं ब्रह्मजीवयोः ।
सम्यग्भेदेन यः पश्येत्स हन्त्यज्ञानसम्भवाः ।
यातनाः परमात्मानं तत्प्रसादाच्च गच्छति' ।। इति ब्रह्माण्डे ।।२६।।

शोकहर्षभयद्वेषलोभमोहमदान्विताः ।
मिथो घ्नन्तो न पश्यन्ति भावैर्भावान् पृथग्दृशः ।। २७ ।।

‘भगवद्दर्शनाद्यस्य विरोधाद्दर्शनं पृथक् ।
पृथग्दृष्टिः स विज्ञेयो न तु सद्भेददर्शनः’ ।। इति च भविष्यत्पुराणे ।।

‘स्वरूपभेदो हि परजीवयोर्जीवगो मिथः ।
परस्परेण वस्तूनां विशेषः शास्त्रदर्शितः ।
सद्भेदोऽयं समुद्दिष्टस्त्वसद्भेदं च मे शृणु ।
स्वरूपाणां गुणानां च विष्णोर्भेदः परस्परात् ।
सर्वस्याविष्णुतन्त्रत्वं शत्रुमित्रादिभेदिता ।
यच्चान्यच्छास्त्रविद्विष्टमसद्भेदः स ईरितः ।
सद्भेददर्शनान्मोक्षस्त्वसद्भेदात्तमो व्रजेत् ।
सद्भेदादर्शनाच्चैव तमो मोक्षस्तथेतरात्’ ।। इति च ।। २७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे पञ्चमोऽध्यायः ।।



## एकादशोऽध्यायः

यक्षावूचतुः -

कृष्ण कृष्ण महायोगिन् त्वमाद्यः पुरुषः परः ।
व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ।। ३० ।।

‘रूप्यत्वात्तु जगद्रूपं विष्णोः साक्षात्सुखात्मकम् ।
नित्यपूर्णं समुद्दिष्टं स्वरूपं परमात्मनः’ ।। इति वामने ।। ३० ।।

त्वमेकः सर्वभूतानां देह आत्मेन्द्रियेश्वरः ।
त्वमेव कालो भगवान् विष्णुरव्यय ईश्वरः ।। ३१ ।।

देहे । 'विष्णुः सर्वगुणोद्रेकात्काल इत्यभिधीयते' ।। इति च ।। ३१ ।।

त्वं महान् प्रकृतिः सूक्ष्मा रजस्सत्त्वतमोमयी ।
त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ।। ३२ ।।

'प्रकृत्यादेस्तद्वशत्वात्प्रकृत्यादिरुदीर्यते ।
यथा राजा भृत्यकृतात्स्वयं कर्तेत्युदीर्यते ।
यथा देहं स्वतन्त्रत्वात्स्वयमित्याहुरञ्जसा' ।। इति पाद्मे ।। ३२ ।।

गृह्यमाणस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ।
को न्विहार्हति विज्ञातुं प्राक् सिद्धं गुणसंस्थितेः ।। ३३ ।।

स्वात्मना गृह्यमाणः ।। ३३ ।।

तस्मै तुभ्यं भगवते वासुदेवाय वेधसे ।
आत्मद्योतैर्गुणैश्छन्नमहिम्ने ब्रह्मणे नमः ।। ३४ ।।

यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः ।
तैस्तैरतुल्यातिशयैस्तिर्यग्योनिष्वसङ्गतैः ।। ३५ ।।

'छन्नोऽन्येषां न तु स्वस्य भगवान्पुरुषोत्तमः ।
तस्यावतारा देहस्था अदेहस्था इति द्विधा ।
अन्तर्याम्यादिरूपाणि देहस्थानि विदो विदुः ।
मत्स्यकूर्मादिरूपाणि न देहस्थानि हृत्पतेः ।

अन्यातुल्यैरतिशयैर्मनसो नियमादिभिः ।
ज्ञायन्ते तानि रूपाणि नित्यपूर्णानि सर्वशः' ।।

इति महाकौर्मे ।। ३५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे एकादशोऽध्यायः ।।



## चतुर्दशोऽध्यायः

अनुग्रहोऽयं भवता कृतो हि नो
दण्डोऽसतां ते खलु कल्मषापहः ।
यद् दन्दशूकत्वममुष्य देहिनः
क्रोधोऽपि तेऽनुग्रह एव सम्मतः ।। ३४ ।।

'दण्डोऽपि भगवच्चीर्णो ममैषोऽनुग्रहः स्मृतः ।
इति भक्त्या चिन्तयतां शुभकारी भवत्यलम् ।
तत्रापि कुर्वतां द्वेषं तमः प्राप्त्यै तथा भवेत्' ।। इति च ।। ३४ ।।

न नाकपृष्ठं न च पारमेष्ठ्यं
न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
वाञ्छन्ति त्वत्पादरजःप्रपन्नाः ।। ३७ ।।

'अपुनर्भवमात्रात्तु हरिसामीप्यमुत्तमम् ।
तत्रापि स्पर्शयोग्यत्वं यथा वेदविदो विदुः' ।। इति पाद्मे ।। ३७ ।।

नमस्तुभ्यं भगवते पुरुषाय महात्मने ।
भूतावासाय भूताय पराय परमात्मने ।। ३९ ।।

भूताय सर्वदा विद्यमानाय ।। ३९ ।।

ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये ।
अगुणायाविकाराय नमस्तेऽप्राकृताय च ।। ४० ।।

अप्राकृताय ।। ४० ।।

कालाय कालनाभाय कालावयवसाक्षिणे ।
विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ।। ४१ ।।

कालनाभाय कालाश्रयाय ।

'विश्वस्य तदधीनत्वाद्विश्वं विष्णुरुदीर्यते ।
मूलहेतुत्वतो हेतुः कर्ता प्रातिस्विकं कृतेः' ।। इत्याग्नेये ।। ४१ ।।

नमो गुणप्रदीपाय गुणात्मस्थोदयाय च ।
गुणप्रत्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ।। ४६ ।।

**गुणप्रदीपाय** गुणज्ञापकाय । **गुणात्मस्थोदयाय** गुणात्मिका प्रकृतिः तस्यां स्थित उदयस्वरूपो हरिः ।। ४६ ।।

परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः ।
अविश्वाय च विश्वाय तद्द्रष्ट्रे विश्वहेतवे ।। ४८ ।।

**अविश्वाय** जीवेभ्योऽन्यस्मै ।

'शरीरेषु प्रविष्टत्वाद्विश्वो जीव उदीर्यते ।
जीवस्य तदधीनत्वाद्विश्वो विष्णुरिति स्मृतः ।
तस्योत्पत्त्यादिहेतुत्वाद्विश्वहेतुश्च कीर्त्यते' ।। इति मात्स्ये ।। ४८ ।।

त्वं ह्यस्य जन्मस्थितिसंयमान् विभो
गुणैरनीहोऽकृतकालशक्तिधृक् ।
तस्मात् स्वभावात् प्रतिबोधयस्व नः
समीक्षयाऽमोघविहार ईहसे ।। ४९ ।।

'हरेः स्वरूपशक्तिर्या कालशक्तिरुदीर्यते ।
सदा सर्वगुणात्मत्वाद्दुर्गा वाप्यवरा ततः ।
सर्वसंहारकारित्वाद्वायुः सर्वस्य जीवनात् ।
कालाभिमानिनावेतौ दुर्गा वायुश्च कीर्तितौ' ।।
इति प्रकाशसंहितायाम् ।। ४९ ।।

तस्यैव तेऽमूस्तनवस्त्रिलोक्यां
शान्ता अशान्ता उत मूढयोनयः ।
शान्ताः प्रियास्ते ह्यधुनाऽवितुः सतां
स्थातुश्च ते कर्मपरीप्सयेहतः ।। ५० ।।

'अन्तःप्रियं बहिश्चेति द्विधा प्रियमुदाहृतम् ।
अन्तःप्रिया हरेः सन्तः सर्वं चापि बहिः प्रियम् ।
असन्तश्चापि संहार ईषदन्तःप्रिया इव ।
तदपेक्षया तथा सन्तो विशेषान्तःप्रिया स्थिता' ।। इति षाड्गुण्ये ।

'सुखान्तं प्राप्नुयुर्यस्माद्देवाः शान्ता उदाहृताः ।
अशान्ता मानुषाः प्रोक्ता विमूढा आसुरा मताः ।।'
इति प्रकाशसंहितायाम् ।

**कर्मपरीप्सया** कर्मप्रवर्तनार्थम् । सर्वशरीरेषु स्थातुः । **ईहतः** प्राणस्य सकाशात् । प्राणसकाशाद्धि कर्म प्रवर्तनमिच्छति भगवान् ।

'वायोः सकाशाज्जगतः प्रवृत्तिं कारयत्यजः ।
प्राणप्राणमतः प्राहुर्विष्णुं वायोरपि प्रभुम्' ।। इति च ।। ५० ।।

त्वया सृष्टमिदं विश्वं धातुर्गुणविसर्जनम् ।
नानास्वभाववीर्योजोयोनिबीजाशयाकृति ।। ५७ ।।

धातुर्गुणविसर्जनम् । हिरण्यगर्भसकाशाद्गुणभूता सृष्टिरस्य जगतः । प्राधान्येन विष्णोरेव ।

'विष्णुः प्रधानतः स्रष्टा गुणस्रष्टा चतुर्मुखः' । इति नारदीये ।।५७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे चतुर्दशोऽध्यायः ।।



## पञ्चदशोऽध्यायः

अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति ।
सद्यः प्राणैर्वियुज्येत सत्यमेतद् ब्रवीम्यहम् ।। ११ ।।

तत् कालियः परं वेद नान्यः कश्चित् स लेलिहा ।
अवात्सीद् गरुडाद् भीतः कृष्णेन च विवासितः ।। १२ ।।

'विष्णुना विष्णुभक्तैश्च ब्रह्मशापोऽनुवर्त्यते ।
ब्राह्मणानामपीडायै बलिभिः क्षत्रियादिभिः ।
विष्णोश्च विष्णुभक्तानां शापाद् व्यैति तपोऽखिलम् ।
तथापि चासुरावेशाच्छपेयुर्हरिमप्यहो ।
अतस्तु सौभरेः शापं नात्यवर्तत्खगेश्वरः ।
अन्यथा तूत्तमानां हि नाधमैः शाप इष्यते ।
वरोऽपि दत्तस्त्वधिकैर्नाधमाधिक्यकारणम् ।
विष्णोरपि वरस्तस्मान्नाधिक्यं सम्प्रयच्छति ।
क्रमशः श्रीविरिश्चादेः कथश्चित्केनचित्कचित् ।
न च दद्याद्धरिस्तादृग्दद्याद्वा बाह्यमेव तु' ।। इति ब्रह्माण्डे ।।११।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे पश्चदशोऽध्यायः ।।



## षोडशोऽध्यायः

उवाह कृष्णो भगवान् श्रीदामानं पराजितः ।
वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् ।। २३ ।।

**श्रीदामा** कृष्णमुवाह । हरिवंशादिवचनात् ।

'बहुमानविरोधे तु व्यत्यासः शब्दतोऽर्थतः ।
कार्योऽनिरुक्तदेवानां गुणसिध्यै न चान्यथा ।

विष्णुर्ब्रह्मा तथा वायुरनिरुक्ताः प्रकीर्तिताः ।
तत्पत्न्यश्चेतरगुणा व्यत्यस्यास्तेष्वसंशयः' ।। इति ब्रह्मतर्के ।।२३।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे षोडशोऽध्यायः ।।



## एकोनविंशोऽध्यायः

इति वेणुरवं राजन् सर्वभूतमनोहरम् ।
श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेमिरे ।। ७ ।।

गोप्यः किमाचरदयं कुशलं स्म वेणुः
दामोदराधरसुधासरसाम्रगेयम् ।
भुङ्क्ते स्वयं यदवशिष्टरसौघमार्गे
हृष्टत्वचोऽश्रु मुमुचुस्तरवः सदर्भाः ।। १० ।।

'श्रीदेवी वेणुमाविश्य रेमे कृष्णमुखाम्बुजे ।
पपौ च तद्गतं गीतं सुरा इतरभाण्डगाः' ।। इति तन्त्रभागवते ।।७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे एकोनविंशोऽध्यायः ।।



## द्वाविंशोऽध्यायः

अस्ति चेदीश्वरः कश्चित् फलरूपः स कर्मणः ।
कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ।। १४ ।।

फलरूपः स कर्मण इत्याद्यवान्तरेश्वरविषयम् ।। १४ ।।

किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम् ।
अनीशेनान्यथाकर्तुं स्वभावविहितं नृणाम् ।। १५ ।।

स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते ।
स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ।। १६ ।।

देहानुच्चावचान् जन्तुः प्राप्योत्सृजति कर्मणा ।
शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ।। १७ ।।

तस्मात् सु(सं)पूजयेत् कर्म स्वभावस्थः स्वकर्मकृत् ।
अञ्जसा येन वर्तेत तदेवास्य हि दैवतम् ।। १८ ।।

सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ।
रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् ।। २१ ।।

रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः ।
प्रजास्तैरेव सिध्यन्ति महेन्द्रः किं करिष्यति ।। २२ ।।

तस्माद् गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः ।
य इन्द्रयागसम्भारास्तैरयं साध्यतां मखः ।। २५ ।।

'स्वभावे कर्मणि च यः सत्वादिषु गुणेषु च ।
स्थितो विष्णुः सर्वकर्ता पृथक्संस्थश्च सर्वगः ।
गुणकर्मस्वभावादिशब्दवाच्यश्च केशवः ।
तेन जातं फलं यस्मात्कर्मणः फलमीर्यते ।
न चासौ कर्मफलवान्नास्य किञ्चिन्न शक्यते ।
तदन्यावान्तरेशानां तद्वशत्वं यतः सदा ।
कर्मणः फलरूपत्वमतस्तेषामुदीर्यते ।
नान्यकर्मवशत्वं तु तेषां विष्णुं विना क्वचित् ।
स च ब्राह्मणगिर्यादिनामा विष्णुरजः परः ।
एतस्मात्कारणात्कृष्णः शक्रस्य विमदाय तु ।
गिर्यादिस्थितमात्मानं पूजयामास बल्लवैः ।। १५-२५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे द्वाविंशोऽध्यायः ।।



## त्रयोविंशोऽध्यायः

वाचालं मानिनं मत्तमज्ञं पण्डितमानिनम् ।
कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम् ।। ५ ।।

'अत्यल्पस्त्वसुरावेशो देवानां च भविष्यति ।
प्राणमेकं विनाऽसौ हि आखणाश्मसमः स्मृतः ।
तस्मिन्नप्यसुरावेशे गते प्रकृतिरेव तु' ।। इति तन्त्रभागवते ।। ५ ।।

।। इति श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे त्रयोविंशोऽध्यायः ।।

## पञ्चविंशोऽध्यायः

इन्द्र उवाच–

विशुद्धसत्त्वं तव धाम शान्तं
तपोमयं ध्वस्तरजस्तमस्कम् ।
मायामयोऽयं गुणसम्प्रवाहो
न विद्यते तेऽग्रहणानुबन्धः ।। ४ ।।

**विशुद्धसत्वं** विगतशुद्धसत्वम् । यस्मात्त्रिगुणसम्बन्धस्त्वयि न विद्यते । यत्राग्रहणमनुवद्धम् । **तपोमयं** ज्ञानात्मकम् ।। ४ ।।

कुतो नु तद्धेतव ईश मन्युलोभादयो येऽबुधलिङ्गभावाः ।
अथापि दण्डं भगवान् बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ।। ५ ।।

पुनर्गुणसंप्रवाहस्य कारणत्वात्तद्धेतवः ।। ५ ।।

पिता गुरुस्त्वं जगतामधीशो
दुरत्ययः काल उपात्तदण्डः ।
हिताय चेच्छातनुभिः समीहसे
मानं विधुन्वन् जगदीशमानिनाम् ।। ६ ।।

येऽस्मद्विधाः स्युर्जगदीशमानिन-
स्त्वां वीक्ष्य कालेऽभयमाशु तं मदम् ।
हित्वाऽऽर्यमार्गं प्रभजन्त्यपस्मया-
ईहा खलानामपि तेऽनुशासनम् ।। ७ ।।

'असतां च सतां चैव हरिरेवानुशासकः ।
सतां तु श्रेयसे सैव ह्यनुशास्तिर्भविष्यति ।
असतां विपरीताय लङ्घयित्वाऽनुशासनम्' ।। इत्याग्नेये ।। ६-७ ।।

स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये ।
सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ।। ११ ।।

'आवेशो वसुदेवादौ देहादानं हरेः स्मृतम् ।
देहादानं तदन्येषां जन्मेति कवयो विदुः ।
तथाप्यसुरमोहाय ग्रन्थेषु बहुधैव तु' ।। इति पाद्मे ।। ११ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे पञ्चविंशोऽध्यायः ।।



## सप्तविंशोऽध्यायः

दुस्सहप्रेष्ठविरहतीव्रतापधुताशुभाः ।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ।। १० ।।

तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः ।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ।। ११ ।।

राजोवाच–

कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने ।
गुणप्रवाहोपरमस्तासां गुणधियां कथम् ।। १२ ।।

श्रीशुक उवाच–

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ।। १३ ।।

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।
अव्यक्तस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ।। १४ ।।

कामं क्रोधं भयं स्नेहं मैत्रीं सौहृदमेव च ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ।। १५ ।।

'कृष्णकामास्तदा गोप्यस्त्यक्त्वा देहं दिवं गताः ।
सम्यक्कृष्णं परं ब्रह्म ज्ञात्वा कालात्परं ययुः ।
पूर्वं च ज्ञानसंयुक्तास्तत्रापि प्रायशस्तथा ।
अतस्तासां परं ब्रह्म गतिरासीन्न कामतः ।
न तु ज्ञानमृते मोक्षो नान्यः पन्थेति हि श्रुतिः ।
कामयुक्ता तदा भक्तिर्ज्ञानं चातो विमुक्तिगाः ।
अतो मोक्षेऽपि तासां च कामो भक्त्याऽनुवर्तते ।
अतोदकत्वेन सदा द्वेषिणामधरं तमः ।
मुक्तिशब्दोदितं चैद्यप्रभृतौ द्वेषभागिनः ।
भक्तिभागी पृथङ्मुक्तिमगाद्विष्णुप्रसादतः ।
कामस्त्वशुभकृच्चापि भक्त्या विष्णोः प्रसादकृत् ।
द्वेषिजीवयुतं चापि भक्तं विष्णुर्विमोचयेत् ।
अहोऽतिकरुणा विष्णोः शिशुपालस्य मोक्षणात्' ।। इति स्कान्दे ।।

जगत्प्रपितामहे जारबुद्धिर्न युक्ता तथापि ।।

ब्रह्मतया न सम्यक् ।

'प्रेष्ठो भवांस्तनुभृतां सुहृदन्तरात्मा' ।

'रमाया दत्तक्षणम्' इत्यादिवचनात् ।।

कामिनः कामित्वं क्रोधिनः क्रोधित्वमेव सर्वदा भवतीति तन्मयता ।

'विमुक्तावपि कामिन्यो विष्णुकामा व्रजस्त्रियः ।
द्वेषिणश्च हरौ नित्यं द्वेषेण तमसि स्थिताः' ।। इति च ।

'भक्त्या हि नित्यकामित्वं न तु मुक्तिं विना भवेत् ।
अतः कामितया वाऽपि मुक्तिर्भक्तिमतां हरौ ।
स्नेहभक्ताः सदा देवाः कामित्वेनाप्सरस्त्रियः ।
काश्चित्काश्चिन्न कामेन भक्त्या केवलयैव तु ।
मोक्षमायान्ति नान्येन भक्तिं योग्यां विना क्वचित्' ।। इति पाद्मे ।

'भक्त्या वा कामभक्त्या वा मोक्षो नान्येन केनचित् ।
कामभक्त्याऽप्सरस्त्रीणामन्येषां नैव कामतः ।
उपास्यः श्वशुरत्वेन देवस्त्रीणां जनार्दनः ।
जारत्वेनाप्सरस्त्रीणां कासांचिदिति योग्यता ।

योग्योपासां विना नैव मोक्षः कस्यापि सेत्स्यति ।
अयोग्योपासनाकर्तुरनर्थश्च भविष्यति ।
तस्मात्तु योग्यतां ज्ञात्वा हरेः कार्यमुपासनम्' ।। इति भद्रिकायाम् ।

'पतित्वेन श्रियोपास्यो ब्रह्मणा मे पितेति च ।
पितामहतयाऽन्येषां त्रिदशानां जनार्दनः ।
प्रपितामहो मे भगवानिति सर्वजनस्य तु ।

गुरुः श्रीब्रह्मणोर्विष्णुः सुराणां च गुरोर्गुरुः ।
मूलभूतो गुरुः सर्वजनानां पुरुषोत्तमः ।
गुरुर्ब्रह्माऽस्य जगतो दैवं विष्णुः सनातनः ।
इत्येवोपासनं कार्यं नान्यथा तु कथञ्चन' ।। इति वाराहे ।।१०-१५।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे सप्तविंशोऽध्यायः ।।



## त्रयस्त्रिंशोऽध्यायः

मदविघूर्णितलोचन ईषन्
मानदः स्वसुहृदां वनमाली ।
बदरपाण्डुवदनो मृदुगण्डं
मण्डयन् कनककुण्डललक्ष्म्या ।। २४ ।।

'मानवो वदरः सिंधुः शशिनस्तु त्रिनामकम् ।
यो वेद मुच्यते रोगैर्विष्णुनाम्नेव संसृतेः' ।। इति स्कान्दे ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे त्रयस्त्रिंशोऽध्यायः ।।



## पञ्चत्रिंशोऽध्यायः

त्वामीश्वरं स्वाश्रयमात्ममायया
विनिर्मिताशेषविशेषकल्पनम् ।
क्रीडार्थमाद्यन्तमनुष्यविग्रहं
नतोऽस्मि धुर्यं यदुवृष्णिसात्त्वताम् ।। २४ ।।

'आदिनो राक्षसाः प्रोक्तास्तदन्तत्वाज्जनार्दनः ।
आद्यन्त इति विज्ञेयः परेशो ब्रह्मणीशनात्' ।। इति ब्राह्मे ।।२४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे पञ्चत्रिंशोऽध्यायः ।।



## षट्त्रिंशोऽध्यायः

य ईक्षिताऽहंरहितोऽप्यसत्सतोः
स्वतेजसाऽपास्ततमोभिदाभ्रमः ।
स्वमाययाऽऽत्मन् रचितेषु तत् सन्
प्राणादिभिर्जन्तुषु भाति चित्रधा ।। ११ ।।

तत्सन् तथैव सन् ।। ११ ।।

यस्याखिलामीवहभिः सुमङ्गलै-
र्वाचो विमिश्रा गुणकर्मजन्मभिः ।
प्राणन्ति शुम्भन्ति पुनन्ति वै जगद्
यास्तद्विरक्ताः स्युरशोभना मताः ।। १२ ।।

**शुम्भन्ति** शोभयन्ति ।

'शुम्भनं शोभनं शुम्भं शुभपर्यायवाचकाः' । इत्यभिधानम् ।।१२।।

प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ।
अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ।। ३० ।।

'वैन्यपार्थबलेशादावाविष्टं पुरुषोत्तमम् ।
अपेक्ष्य तद्गुणाः सर्वे तज्जीवानामभाविनः ।
अप्युच्यन्ते पुराणेषु विशेषात्सन्निधिर्यतः' । इति माहात्म्ये ।।३०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे षट्त्रिंशोऽध्यायः ।।



## अष्टत्रिंशोऽध्यायः

भूस्तोयमग्निः पवनः खमादि-
र्महानजादिर्मन इन्द्रियाणि ।
सर्वेन्द्रियार्था विबुधाश्च सर्वे
ये हेतवस्ते जगतोऽङ्गभूताः ।। ३ ।।

तवाङ्गेभ्यो भूताः ।। ३ ।।

नैते स्वरूपं विदुरात्मनस्ते
अजादयोऽन्यात्मतया गृहीताः ।
अजोऽनुबद्धः स गुणैरजाया
गुणात् परं वेद न ते स्वरूपम् ।। ४ ।।

**अन्यात्मतया गृहीताः ।** मत्तोऽन्ये जीवात्मानः एत इति भगवता गृहीताः ।

'अहं परो हि मद्भिन्ना जीवात्मानोऽल्प(शक्तयः)बुद्धयः ।
मद्वशाः सर्व एवेति ब्रह्मादीन्मन्यते हरिः' ।। इति स्कान्दे ।।

'यथा हरिः स्वमात्मानं वेद तद्वद्रमापि न ।
ब्रह्मा च कुत एवान्ये विदन्त्येव तथापि तु' ।। इति माहात्म्ये ।।४।।

त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् ।
साध्यात्मं साधिभूतं च साधिदैवं च साधवः ।। ५ ।।

'स्थितो ब्रह्मादिदेवेषु खादिभूतेषु चेश्वरः ।
आत्मशब्दोदितनरेष्वपि यस्माज्जनार्दनः ।
साध्यात्मः साधिभूतश्च साधिदैवेति चोच्यते' ।। इति अध्यात्मे ।।५।।

त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्विजाः ।
यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ।। ६ ।।

'सर्वदेवेष्वपि हरिः सर्वदेवनियामकः ।
नामवान् सर्वदेवानां सर्वपूजां तथाऽस्त्यसौ' ।। इति च ।। ६ ।।

तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये
सर्वात्मने सर्वधियां च साक्षिणे ।
गुणप्रवाहोऽयमविद्ययाऽसकृत्
प्रवर्तते देवनृतिर्यगात्मसु ।। १३ ।।

**अविद्यया** भगवदिच्छया ।। १३ ।।

अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं
सूर्यो नभो नाभिरथो दिशः श्रुतिः ।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवः
कुक्षिर्मरुत् प्राणबलं प्रकल्पितम् ।। १४ ।।

रोमाणि वृक्षौषधयः शिरोरुहा
मेघाः परस्यास्थिनखानि तेऽद्रयः ।
निमेषणं रात्र्यहनी प्रजापति-
र्मेढ्रं तु वृष्टिस्तव वीर्यमिष्यते ।। १५ ।।

त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता
लोकाः सपाला बहुजीवसङ्कुलाः ।
यथा जले सञ्जिहते जलौकसोऽ-
प्युदुम्बरे वा मशका मनोमये ।। १६ ।।

त्वयैव प्रकल्पिताः ।

'विष्णोरङ्गसमुद्भूता विष्णोरङ्गानि देवताः ।
उच्यन्ते सर्ववेदेषु स्वरूपा(पे)त् भेदिनोऽपि तु' ।। इति च ।।१४-१६।।

यानि यानीह रूपाणि क्रीडनार्थं विभर्षि हि ।
तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ।। १७ ।।

'भृतामेव विभर्तीशो ह्यवतारतनुं सदा ।
विभर्तीत्युच्यतेऽथापि मोहाय व्यक्त्यपेक्षया' ।।
इति तत्त्वनिर्णये ।। १७ ।।

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ।। २२ ।।

'प्रद्युम्ने चानिरुद्धे च बलदेवे च केशवः ।
सन्निधानं विशेषेण करोति जगतां पतिः ।
तत्र कृष्णः स्वयं विष्णुः परमानन्दलक्षणः ।
पाराशर्यश्च भगवान्स्वयमेव जनार्दनः' ।। इति च ।।

'तत्तद्गतस्यैव हरेस्तत्तन्नामानि चाञ्जसा ।
औपचारिकनामानि तदन्येषामिति स्थितिः' ।।

इति शब्दनिर्णये ।। २२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे अष्टत्रिंशोऽध्यायः ।।



## त्रिचत्वारिंशोऽध्यायः

श्रीशुक उवाच–

पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ।
मा भूदिति निजां मायां ततान जनमोहिनीम् ।। १ ।।

उवाच पितरावेत्य साग्रजः सात्वतर्षभः ।
प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम् ।। २ ।।

नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि ।
बाल्यपौगण्डकैशोराः पुत्राभ्यामगमन् क्वचित् ।। ३ ।।

न लब्धो दैवहतयोर्वासो नौ भवदन्तिके ।
ये बालाः पितृगेहस्था विन्दन्ते लालिता मुदम् ।। ४ ।।

सर्वार्थसम्भवो देहो जनितः पोषितो यतः ।
न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ।। ५ ।।

यस्तयोरात्मजः कल्प आत्मना च धनेन च ।
वृत्तिं न दद्यात् तं प्रेत्य स्वमांसं खादयन्ति हि ।। ६ ।।

मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ।
गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन् मृतः ।। ७ ।।

तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ।
मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः ।। ८ ।।

तत् क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः ।
अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदोर्भृशम् ।। ९ ।।

मयि भृत्य उपासीने भवतो विबुधादयः ।
बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः ।। १४ ।।

'सर्वोत्तमोऽपि भगवान् गुणा(ण)भावं जनार्दनः ।
दर्शयेद्वसुदेवादेरात्मनो जीवतामपि ।
अज्ञाशक्त्यादिभावस्तु कुतस्तस्याखिलेशितुः ।
कुतो दोषा सर्वगुणपूर्णस्यानन्दवारिधेः' ।। इति वामने ।।१-९,१४।।

।। इति श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे त्रिचत्वारिंशोऽध्यायः ।।

## द्विपञ्चाशोऽध्यायः

फलमूलकृताहारं वृतं शिष्यशतैर्मुनिम् ।
दृष्ट्वा परमसन्तुष्टौ रामकृष्णौ जगत्पती ।। २० ।।

प्रणामं चक्रतुर्वीरौ यथान्यायमतन्द्रितौ ।
इदं चोवाच भगवान् कृष्णस्तं मुनिपुङ्गवम् ।। २१ ।।

नमस्ते भार्गव श्रीमन् जामदग्न्य तपोधन ।
रामकृष्णौ स्मृतावावां क्वचित् ते श्रवणं गतौ ।। २२ ।।

'सर्वावताराभिन्नोऽपि समशक्तिरपि स्वयम् ।
पूज्यपूजकनीचोच्चं मोहनाय दुरात्मनाम् ।
अखण्डैकरसो विष्णुर्दर्शयेत्तत्र तत्र हि ।।' इति षाड्गुण्ये ।।२०-२२।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे द्विपञ्चाशोऽध्यायः ।।



## त्रिपञ्चाशोऽध्यायः

एतस्मिन्नेव काले तु क्षीरोदे सागरोत्तमे ।
निवासे देवदेवस्य शङ्खचक्रगदाभृतः ।। ७ ।।

उपासीनो महाबाहुः श्रीमान् वैरोचनो बलिः ।
जहार देवदेवस्य किरीटं रत्नचित्रितम् ।। ८ ।।

इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम् ।
पद्मरागमहानीलमुक्ताफलविराजितम् ।। ९ ।।

पुष्यरागप्रवालाढ्यं दिव्यकाञ्चननिर्मितम् ।
हृतं दानववीरेण विदित्वा पुरपालकः ।
तमन्वधावत् त्वरितं वैनतेयो विहङ्गराट् ।। १० ।।

बहूनि स्थानजातानि कृष्णस्य क्षीरसागरे ।
कानिचिन्मुक्तगम्यानि नामुक्तैस्त्रिदशैरपि ।
गन्तुं शक्यान्यथान्यानि गम्यान्यन्यैरपि क्वचित् ।।
तत्र देवाश्च योगीन्द्रा भक्ताश्चान्ये जनार्दनम् ।
गत्वाऽर्चयन्ति देवेशं बलिस्तत्रागमत्क्वचित् ।
तस्य तत्रासुरावेशात् पापबुद्धिरजायत ।
तद्व्यक्त्यर्थं जगन्नाथः शिश्ये सुप्तवदव्ययः ।
तदा स पापया बुद्ध्या किरीटमहरत्प्रभोः ।।
तं जित्वा गरुडस्तत्तु हृत्वा गोमन्तमाव्रजत् ।
तत्र कृष्णस्य शिरसि किरीटममुचत्प्रभोः ।। इति माहात्मे ।।७-१०।।

हिरण्यगर्भत्वमुपेत्य मूले
सृजस्यशेषं भुवनं स एव ।
नारायणात्मन् परिपासि भूयो
जहार चान्ते भगवन् शिवात्मन् ।। १५ ।।

ब्रह्मस्थो ब्रह्मनामाऽसौ रुद्रस्थो रुद्रनामकः ।
तयोरपि नियन्तैकः स्वयमेव जनार्दनः ।। इति स्कान्दे ।।

।। इति श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे त्रिपञ्चाशोऽध्यायः ।।

## एकसप्ततितमोऽध्यायः

सत्यभामोवाच–

यो मे सनाभिवधतप्तहृदा ततेन
लिप्ताभिशापमपमार्ष्टुमुपाजहार ।
जित्वर्क्षराजमथ रत्नमदात् स तेन
नीतच्छिदादिशत मां प्रभवेऽपि दत्ताम् ।। ९ ।।

नीतच्छित् भगवता प्राप्तभेदः ।। ९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे एकसप्ततितमोऽध्यायः ।।



## द्विसप्ततितमोऽध्यायः

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ।। ११ ।।

अम्मयाद्यभिमानिन्यो देवताः उरुकालेनैव पुनन्ति, गुरूपदेशं प्रापयित्वा ।। ११ ।।

नाग्निर्न सूर्यो न च चन्द्रतारकं
न भूर्जलं खं श्वसनोऽथ वाङ्मनः ।
उपासिता भेदकृतो हरन्त्यघं
विपश्चितो घ्नन्ति मुहूर्तसेवया ।। १२ ।।

यस्यात्मबुद्धिः कुणपे त्रिधातुके
स्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिश्च जले न कर्हिचित्
जनेष्वभिज्ञेषु स एव गोखरः ।। १३ ।।

**भेदकृतः** अन्यथाज्ञानिनः । **विपश्चितस्तु** प्रत्यक्षदर्शनादन्यथाज्ञानमेवापगमयन्ति ।।

प्राकृतैः दृश्यमानन्तु न द्रवं तीर्थमुच्यते ।
देवाश्च न शिलामात्राः किन्तु तत्रान्तरस्थिताः ।।
गुरूपदेशेन(शं तु) विना न ते दृश्याः कथश्चन ।।
न ज्ञायते च तद्रूपं अन्यथाज्ञानिनां च ते ।।
कोपाच्छापं प्रयच्छान्ति तस्माद्गुरुमुपाव्रजेत् ।
तस्मात्तीर्थानि देवाश्च नित्यं विद्वत्सु संस्थिताः ।। इति गारुडे ।।

भिन्नस्याभेदतो दृष्टिरपि भेददृशिर्मता ।
वस्तुयाथात्म्यतस्तस्य भिन्नत्वादिति सूरिभिः ।
अन्यथाज्ञानमेवातो भेदज्ञानं विनिन्दितम् ।
न विद्यमानभेदस्य दर्शनं निन्दितं क्वचित् ।।
शिला देव इति ज्ञानं देवोऽस्मीति तु या दृशिः ।
उत्तमस्याधमत्वेन नीचस्योच्चतया दृशिः ।
असमस्य समत्वेन समस्यासमदर्शनम् ।
द्रवं तीर्थमिति ज्ञानं देहोऽहमिति या मतिः ।
असद्भार्यादिषु स्वीयदर्शनं चैवमादिकम् ।
भेदज्ञानमिति प्रोक्तं या चान्याप्यन्यथामतिः ।।
तस्मात्तदपहानाय संसेव्याः गुरवो वराः ।।

तत्रस्थाः देवताः सर्वाः प्रीयन्ते गुरुपूजया ।
नैवान्यथैषां प्रीतिः स्याद्रूक्तिमपहाय तु ।।
तस्मात्पूजाविशेषेण सतां कार्या नृणां सदा ।।
भक्तिस्तु तारतम्येन विशिष्टेष्वधिका भवेत् ।। इति स्कान्दे ।।

उत्तमा अपि देवेशाः अवरान् विदुषो नृणाम् ।।
पूजायै सम्प्रयच्छन्ति परोक्षत्वप्रिया यतः ।
तेषु स्थित्वा स्वयं पूजां गृह्णन्त्यनुपमां सदा ।।
ज्ञानानि च प्रयच्छन्ति तस्मादेवंविदा सदा ।
पूजिताः स्युः सुरवराः सब्रह्माणः सकेशवाः ।।
इति वामने ।। १२-१३ ।।

ब्रह्म ते हृदयं शुक्लं तपः स्वाध्यायसंयमैः ।
यत्रोपलब्धं सुव्यक्तमव्यक्तं च ततः परम् ।। १९ ।।

हृदयं प्रियं हृद्यनात् ।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे द्विसप्ततितमोऽध्यायः ।।



## पञ्चसप्ततितमोऽध्यायः

रुग्मिण्युवाच–

नन्वेतदेवमरविन्दविलोचनाह
यद् वै भवान् न भवतः सदृशो विभूम्नः ।

क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः
क्वाहं गुणप्रकृतिरन्यगृहीतपादा ।। ३८ ।।

भवानेव भवतः सदृशः ।। ३८ ।।

सत्यं भयादिव गुणेभ्य उरुक्रमान्तः
शेते समुद्र उपलम्भनमात्र आत्मा ।
योऽनित्यकेन्द्रियगणैः कृतविग्रहस्त्वं
त्वत्सेवया नृपपदं विधुतं तमोऽन्धम् ।। ३९ ।।

नृपपदं नृपशब्दवाच्यमात्रम् । न तु मुख्यतो नृपालकम् । अन्धन्तमः प्रति विधुतम् ।।

त्वत्पादपद्ममकरन्दजुषां मुनीनां
वर्त्म स्फुटं नृपशुभिर्ननु दुर्विभाव्यम् ।
यस्मादलौकिकमिवेहितमीश्वरस्य
भूमंस्तवेहितमथो अनु मे भवन्ति ।। ४० ।।

तवेहितमनु मे ईहितानि भवन्ति ।। ४० ।।

निष्किञ्चनो ननु भवान् न यतोऽस्ति किञ्चिद्
यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ।
न त्वा विदन्त्यसुतृपोऽन्तिकमाढ्यतान्धाः
प्रेष्ठः सतां बलिभुजामपि योऽन्तरास्ते ।। ४१ ।।

यतः किञ्चिन्मात्रं नास्ति किन्तु सर्वमेवास्ति ।। ४१ ।।

त्वं वै समस्तपुरुषार्थमयः फलात्मा
यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम् ।
तेषां विभो समुदितो भवतः प्रसाद-
स्त्रय्यां च यश्च रतयोः सुखदुःखिनोर्न ।। ४२ ।।

**फलात्मा** सुखात्मा । अत एव पुरुषैरर्थ्यस्वरूपः ।।

तेषां भवतश्च समुदितः समो गुणो नास्ति । यश्च कोऽपि । त्रय्यां रतयोः, वेदोक्तकर्तृत्वेन सुमतीनां त्रयीरतत्वं प्रतिपाद्यत्वेन भगवतः ।। सुख-दुःखिनोः केवलं परिपूर्णसुखो भवान् । भवज्ज्ञानपर्यन्तं दुःखिनस्ते ।

'अल्पसम्पूर्णशक्तित्वादल्पपूर्णसुखत्वतः ।
अल्पसंपूर्णदर्शित्वान्न साम्यं जीवकृष्णयोः' ।। इति ब्रह्माण्डे ।।

त्रय्यां चेति चशब्दः स्मृतिष्वपीति ।। ४२ ।।

त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव
आत्माऽऽत्मदश्च जगतामिति मे वृतोऽसि ।
मुक्त्वा भवद्भवदुदीरितकालगन्ध-
ध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्यान् ।। ४३ ।।

**अब्जो** ब्रह्मा ।

'सोऽद्भ्य एव पुरुषं समुद्धृत्य अमूर्च्छयत्' इति श्रुतेः ।
'अब्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इति च ।। ४३ ।।

का स्त्री वृणीत तव पादसरोजगन्ध-
माघ्राय सन्मुखरितं जनतापवर्गम् ।
लक्ष्म्यालयं त्वविगणय्य गुणालयाढ्यं
मर्त्याशिषोरुभयमर्थविविक्तदृष्टिः ।।४६।।

**सन्मुखरितं** सद्भिः प्रधानीकृतम् । मर्त्याशिषोरुभयं जनं प्रत्यर्थोऽयमिति विविक्तदृष्टिः ।। कामरूपं त्वामविगणय्य ।। ४६ ।।

तं त्वाऽनुरूपमभजं जगतामधीश-
मात्मानमत्र च परत्र च कामरूपम् ।
स्यान्मे तवाङ्घ्रिशरणं श्रुतिभिर्भ्रमत्या
ये वै भजन्ति त उ यान्त्यनृतापवर्गम् ।। ४७ ।।

भ्रमः तिरन्नं यस्याः सा भ्रमतिः । तस्याः भ्रमत्याः विपरीतज्ञानिभक्षिकाया इत्यर्थः । **श्रुतिभिः** श्रुतिप्रमाणेन ।।

'अभ्रमा भ्रमतामत्री या वेदैरधिगम्यते ।
तस्यै नमोऽस्तु ते देव्यै विष्णुवक्षःस्थलाश्रये' ।। इति नारदीये ।।४७।।

कस्याः स्युरच्युत नृपा भवतोपदिष्टाः
स्त्रीणां गृहेषु खरगोश्वबिडालभृत्याः ।
यत्कर्णमूलमरिकर्शन नोपयायाद्
युष्मत्कथा मृडविरिञ्चसभासु गीता ।। ४८ ।।

खरगोऽश्वविडालवत् स्त्रीणां भृत्याः ।। ४८ ।।

त्वक्श्मश्रुरोमनखकेशपिनद्धमन्त-
र्मांसास्थिरक्तकृमिविड्भरितान्त्रवीतम् ।
जीवच्छवं भजति काममतिर्विमूढा
या ते पदाब्जमकरन्दमजिघ्रती स्त्री ।। ४९ ।।

'आनन्दश्मश्रुरानन्दकेश आपादनखात्सर्व एवानन्दः स एष विष्णु-रजोऽमृतोऽचलो ब्रह्म । य एनमेवं वेद । आनन्द एव स भवत्यानन्दस्य सार्ष्टितां सलोकतां सायुज्यमाप्नोति' इति माध्यन्दिनायनश्रुतेः ।।४९।।

अस्त्यम्बुजाक्ष मम ते चरणानुराग
आत्मन् रतस्य मयि चानतिरिक्तदृष्टेः ।
यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो
मामीक्षसे तदु ह नः परमानुकम्पा ।। ५० ।।

**अनतिरिक्तदृष्टेः** भक्त्यनुसार्यनुग्रहस्य ।।

स एष देवः परोऽजरोऽमरस्तं वा एनमाहुर्भाक्त इति ।। भक्त्या हि सोऽनु-गृह्णाति । भक्त्यैवेदं वृणुते । श्रियं विरिञ्चिं रुद्रं इन्द्रमापिपीलकम् । नाभक्तं वृणुते । नाभक्तमनुगृह्णाति । यावान्वा स भक्तस्तावद्ध्येष वृणुते । तावद्ध्येषोऽनुगृह्णाति । नाधिकं वृणुते, नाधिकमनुगृह्णाति, नावरं वृणुते नावरमनुगृह्णाति ।

अथातो भक्तिमीमांसा भवति । युवा स्यात्साधु युवाऽऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तेन पूर्णा स्यात् । स एको मानुषो भक्तो भवति । ते ये शतं मानुषा भक्ताः । एतावान् मानुषो गन्धर्वः । ते ये शतं मानुषा गन्धर्वाः । एतावान् देवगन्धर्वः ।

ते ये शतं देवगन्धर्वाः । एतावांश्चिरलोकः पैतृकः । ते ये शतं चिरलोका पैतृकाः । एतावांश्चिरलोको दैविकः । ता या शतं चिरलोकाः दैविकाः । एतावत्यतात्त्विकादेवता । ता या शतमतात्त्विक्यो देवताः । एतावती तात्त्विकदेवता । ता या शतं तात्त्विक्यो देवताः । एतावान् वाव पुरुहूतः । ते ये शतं पुरुहूताः । एतावान् वाव रुद्रः । ते ये शतं रुद्राः । एतावान् वाव विरिश्चस्ते ये शतं विरिश्चाः । एतावती श्रीर्भक्त्या भवति । तद्यावती वाव भक्तिस्तावदेव ज्ञानं भवति । यावद्वाव तज्ज्ञानं ताव-दानन्दो मौक्तिकोऽथैष एव परमानन्दो योऽसौ हरिर्विश्वो विनोदोऽपनोदः संस्कारकोऽविकारकोऽधिकारक एतस्यैवानन्दस्य अन्यानि भूतानि मात्रा-मुपजीवन्तीति पौत्रायणश्रुतिः ।।

मिलितौ वा एतौ भवतो यदनुग्रहश्च भक्तिश्च यो वाऽनुग्रही स भक्तो यो भक्तः सोऽनुग्रही । यो वा वाऽनुगृहीतो ब्रह्मणा स भक्तो यो भक्तस्तं वै ब्रह्माऽनुगृह्णाति यावान्वै ब्रह्मणोऽनुग्रहस्तावती भक्तिर्यावती भक्तिस्ता-वान्वै ब्रह्मणोऽनुग्रहः । प्रकृतौ वै ब्रह्मणोऽनुग्रहः परमस्तदवरो वा व महति तदवरोऽथ रुद्रे तदवरः पुरुहूते । अथ देवर्षिपितृषु मनुष्येषु इति घर्मश्रुतिः ।।

तस्यामेव रजस उद्रेचनादुपात्तरजोऽतिमात्रत्वम् ।।

अथ त्रिगुणा ह्येव प्रकृतिरगुणो वा व विष्णुः । स यदा ह्यरजा रजोऽस्या उद्धर्धयत्येषा वाव सृष्टिः । स यदा ह्यसत्वः सत्वमस्या उद्धर्धय-त्येषा वाव स्थितिः । स यदा ह्यतमास्तमोऽस्या उद्धर्धयत्येष वाव लयो नैनमेते गुणा अभ्युपस्पृशन्ति नैष एतान् गुणानभ्युपस्पृशत्यगुणो ह्येष भवति ।। अत्रैष श्लोको भवति ।

'निर्गुणस्य गुणादानं प्रकृतेर्गुणवर्धनम् ।
न कदाचिद्गुणैरेषः स्पृश्यते परमो हि सः' ।। इति चाक्रायणश्रुतिः ।।

नैवालीकं भवत्येव वचस्ते मधुसूदन ।
अम्बाया इव हि प्रायः कन्यावादरतिः क्वचित् ।। ५१ ।।

मातुः कन्याप्रदानवादे रतिर्यथा नालीकं भवति प्रायस्तथा ते वचः क्वचिदपि नालीकं भवत्येव ।। ५१ ।।

मुग्धायाश्चापि पुंश्चल्या मनोऽभ्येति नवं नवम् ।
बुधोऽसतीं न बिभृयात् तां बिभ्रदुभयच्युतः ।। ५२ ।।

तस्याः सुदुःखभयशोकविनष्टबुद्धे-
र्हस्ताच्छ्लथद्वलयतो व्यजनं पपात ।
देहश्च विक्लवधियः सहसैव बिभ्यद्
रम्भेव वातविहता प्रविकीर्य केशान् ।। २८ ।।

यामसतीं बुधो न बिभृयात् । यां च तां बिभ्रत् दृष्टादृष्टच्युतो भवति । तस्या अपि पुंश्चल्याः त्वयि मनो नवंनवमभ्येति ।

'अमुग्धैव तु मुग्धेव त्वदुःखा दुःखितेव च ।
श्रीर्दर्शयेद्धरिश्चैव नैवैतौ मोहदुःखिनौ ।
मिथोऽपि तादृग्वचनं आकारं चैव लीलया ।
दर्शयन्तौ नृणां मोहं कुर्यातां शास्त्रदर्शनात् ।।'

इति कापिलेये ।। ५२,५८ ।।

।। इति श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे पञ्चसप्ततितमोऽध्यायः ।।

## षट्सप्ततितमोऽध्यायः

रामा गृहे विहरतः पुरतः कराभ्यां
बद्धेक्षणाः स्वदयितस्य मुदा हसन्त्यः ।
गात्रान्तराण्यपिदधुर्निजपूरुषस्य
क्लेशावहान्यपि तदङ्गजभङ्गभीताः ।। ६ ।।

गात्रान्तराण्यपिदधुः । पिधातव्येभ्योऽन्यान्यपि । येषां पिधानेन क्लेशो भवत्यात्मनः । निजभर्तुरप्यपिदधुः । निर्लज्जा इत्यकामो भवत्यसाविति भयात् ।। ६ ।।

निहते रुग्मिणि श्याले नाब्रवीत् साध्वसाधु वा ।
रुग्मिणीबलयो राजन् स्नेहभङ्गभयाद् हरिः ।। ५० ।।

'न स्नेहभङ्गो देव्यास्तु न भयं केशवस्य तु ।
स्नेहभीत इवाथाऽपि नोचे रुग्मिवधे हरिः' ।। इति ब्रह्माण्डे ।।५०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे षट्सप्ततितमोऽध्यायः ।।



## द्व्यशीतितमोऽध्यायः

श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः ।
आहोपायं तमेवाद्य उद्धवो यमुवाच ह ।। १५ ।।

**अजितं** जरासन्धं भगवत एव श्रुत्वा । तथा हि सभापर्वणि पश्चा-द्दिग्विजयोक्तेः ।

'पूर्वाः कथाः परं ब्रूयुः पराः पूर्वं तथैव च ।।
मोहनार्थाय दुष्टानां सर्वं व्यत्यासयिष्यते ।
विस्तारे तु यदुक्तं स्यात्तद्ग्राह्यमविरोधतः ।
संक्षेपोक्तविरोधे तु गुणोक्तिश्च सतां यथा' ।। इति शब्दनिर्णये ।।

'जरासन्धं निहत्यैव पाण्डवैस्तु दिशो जिताः ।
प्रसादाद्वासुदेवस्य राजसूयः क्रतुः कृतः' ।। इति मात्स्ये ।। १९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे द्व्यशीतितमोऽध्यायः ।।



## षडशीतितमोऽध्यायः

**ततो मुहूर्तात् प्रकृतावुपस्थित-**
**स्तत्रानुतिष्ठत् स्वजनानुसङ्गतः ।**
**महानुभावस्तदबुद्ध्यतासुरीं**
**मायां स साल्वप्रकृतां मयोदिताम् ।। ३८ ।।**

'जानन् साल्वकृतां मायामजानन्निव केशवः ।
अन्ववर्तत किञ्चित्तु ततस्तामहरद्विभुः ।।
एवमेव तु सर्वत्र परमात्मा सनातनः ।
विद्धश्च रुधिरस्रावी कथञ्चिदजयत्परम् ।

इत्यादि दर्शयेद्विष्णुर्मोहयन्मायया जगत् ।
चिदानन्दघनस्यास्य कुतो वेधादि सद्गतेः' ।। इति ब्रह्माण्डे ।।

'यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु ।
मायेत्साते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से' ।।
(ऋ.१०-५४-२) इत्याद्या च श्रुतिः ।। ३८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे षडशीतितमोऽध्यायः ।।



## षण्णवतितमोऽध्यायः

श्रीभगवानुवाच–

स्वायम्भुवं ब्रह्मसत्रं जनलोकेऽभवत् पुरा ।
तत्रत्यानां मानसानां मुनीनामूर्ध्वरेतसाम् ।। ९ ।।

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तमीश्वरम् ।
ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ।। १० ।।

तत्राप्ययमभूत् प्रश्नस्त्वं मां यदनुपृच्छसि ।
तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ।। ११ ।।

अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ।। १२ ।।

'सनकाद्याः समाः सर्वे तत्र श्रेष्ठः कुमारकः ।
मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः' ।।
इति ऋक्संहितायाम् ।। ९-१२ ।।

सनन्दन उवाच—

स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ।। १३ ।।

यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः ।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ।। १४ ।।

श्रुतय ऊचुः–

जय जय जह्यजामजित दोषगृहीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अज जगदोकसामखिलशक्त्यबोधक ते
क्वचिदजयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगमः ।। १५ ।।

'श्रीर्भूमिरितिरूपाभ्यां प्रकृतिर्विष्णुना सह ।
शेते श्रुतिस्वरूपेण स्तौति ब्रह्मलये हरिम् ।।
एकाऽप्यनन्तरूपा सा वाक्यभेदात्सरस्वती ।
अनादिनिधना नित्या स्तौति नारायणं प्रभुम् ।।
इति ज्योतिःसंहितायाम् ।।

सर्वदा जयतो विष्णोः जयस्तस्य प्रकाशनम् ।
श्रवणं दृष्टिरित्यादि प्रार्थ्यं तज्ज्ञापनं स्मृतम् ।।
शृणोति पश्यति ह्येषः जयतीत्यादिकं स्वतः ।।
जय पश्य शृणुष्वेति तत्तज्ज्ञापनमेव, तु ।। इति विमलसंहितायाम् ।

श्रीर्भूर्दुर्गेति या भिन्ना प्रकृतिः शक्तिरुच्यते ।
विष्णोः स्वरूपशक्तेः सा शक्यत्वाच्छक्तिरुच्यते ।

इत्यादि दर्शयेद्विष्णुर्मोहयन्मायया जगत् ।
चिदानन्दघनस्यास्य कुतो वेधादि सद्गतेः' ।। इति ब्रह्माण्डे ।।

'यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु ।
मायेत्साते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से' ।।
(ऋ.१०-५४-२) इत्याद्या च श्रुतिः ।। ३८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे षडशीतितमोऽध्यायः ।।



## षण्णवतितमोऽध्यायः

श्रीभगवानुवाच–

स्वायम्भुवं ब्रह्मसत्रं जनलोकेऽभवत् पुरा ।
तत्रत्यानां मानसानां मुनीनामूर्ध्वरेतसाम् ।। ९ ।।

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तमीश्वरम् ।
ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ।। १० ।।

तत्राप्ययमभूत् प्रश्नस्त्वं मां यदनुपृच्छसि ।
तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ।। ११ ।।

अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ।। १२ ।।

'सनकाद्याः समाः सर्वे तत्र श्रेष्ठः कुमारकः ।
मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः' ।।
इति ऋक्संहितायाम् ।। ९-१२ ।।

सनन्दन उवाच—

स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ।। १३ ।।

यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः ।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ।। १४ ।।

श्रुतय ऊचुः—

जय जय जह्यजामजित दोषगृहीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अज जगदोकसामखिलशक्त्यबोधक ते
क्वचिदजयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगमः ।। १५ ।।

'श्रीर्भूमिरितिरूपाभ्यां प्रकृतिर्विष्णुना सह ।
शेते श्रुतिस्वरूपेण स्तौति ब्रह्मलये हरिम् ।।
एकाऽप्यनन्तरूपा सा वाक्यभेदात्सरस्वती ।
अनादिनिधना नित्या स्तौति नारायणं प्रभुम् ।।
इति ज्योतिःसंहितायाम् ।।

सर्वदा जयतो विष्णोः जयस्तस्य प्रकाशनम् ।
श्रवणं दृष्टिरित्यादि प्रार्थ्यं तज्ज्ञापनं स्मृतम् ।।
श्रुणोति पश्यति ह्येषः जयतीत्यादिकं स्वतः ।।
जय पश्य श्रुणुष्वेति तत्तज्ज्ञापनमेव, तु ।। इति विमलसंहितायाम् ।

श्रीर्भूर्दुर्गेति या भिन्ना प्रकृतिः शक्तिरुच्यते ।
विष्णोः स्वरूपशक्तेः सा शक्यत्वाच्छक्तिरुच्यते ।

नित्याव्यवहितत्वात् तु विशेषाच्छक्तिनामिका ।
यथैव पङ्कजं ब्रह्म रुद्र इत्यादिकं पदम् ।
ताभिः शयानं पुरुषं सैव तु श्रुतिरूपिणी ।
अस्तौत् प्रकाशयात्मानं प्रकृतिं जीवबन्धनम् (नाम्) ।
जहि दोषैर्यया सर्वे गुणा जीवस्य संवृताः ।। इति तन्त्रभागवते ।।

श्रीः परा प्रकृतिः प्रोक्ता ब्रह्माणी त्ववरा ततः ।
उमाशचीमुखास्तस्या अवराः सम्प्रकीर्तिताः ।।
अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते ।
स्वगुणाच्छादिका त्वेका परमाच्छादिकाऽपरा ।
स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः ।
व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तमः ।।
अजे द्वे अपि ते प्रोक्ते अनन्ताच्छादिनी हरेः ।
न विष्णुं छादयत्येषा तज्ज्ञानं छादयेत्परम् ।
जीवस्यैव न तत्रापि ब्रह्मादेरस्ति सा क्वचित् ।।
सर्वावरे ते प्रकृती सततं दुःखितेऽपि च ।
पिशाचवत्समुद्दिष्टे पुरुषस्याधिकारिणः ।
प्रेरकास्तु तयोर्देव्यः इन्दिराद्याः सुखात्मिकाः ।। इति महातत्त्वविवेके ।

राजवज्जयशब्दाद्याः नित्यबुद्धस्य बोधनम् ।
विडम्बमात्रं चैवास्य निद्रा विद्यापतेर्हरेः ।। इति कापिलेये ।।

दोषैर्दुःखाद्यैर्जीवगुणाः आनन्दाद्याः आवृताः यया सा दोषगृहीतगुणा ।। त्वमसि यदात्मना समवरुद्धसमस्तभगः । यस्मात्त्वं स्वत एवानपगत-पूर्णैश्वर्यादिगुणोऽसि । अतस्त्वदाभासस्य जीवस्य प्रकृतिगृहीतत्वादेव नैश्वर्याद्याः गुणाः अवभासन्ते ।। जगदोकसां श्रीब्रह्मादीनामप्यखिल-

शक्त्यवबोधक । क्वचित्सृष्टिकाले आत्मना जीवेन प्रकृत्या च प्रवर्ततस्ते अनुचरेद्वेदो विधिनिषेधरूपेण । अन्यदा स्तुतिमात्रो न तु जीवानां प्रयोजकः ।। तस्मात्सृष्टिं कृत्वा वेदैर्जीवान् बोधयित्वा तत्स्थामजां जहि ।।

जय जय हन हन प्रकृतिं द्रावय द्रावय भिन्धि भिन्धि दुःखं तमोऽरतिम् । अजित परम रमेशान वासुदेव वैकुण्ठ नारायण हृषिकेशानया हि जीवगुणा विसंवृताः अधिसंवृताः ।। एष ह्यानन्दोऽजरोऽमरोऽधिशक्तिमांस्त्वदा-भासस्त्वया तथाऽधिसम्भाव्यो यतः परः परमेश्वरः परज्ञानः परानन्दः परशक्तिः परश्रीः परयशाः परप्रवृत्तिः नित्यमेव । त्वं स्वतोऽसि त्वं रमायाः त्वं विरिञ्चिस्य रुद्रेन्द्रसूर्यसोममुखानामदभ्रशक्तिदोऽसि प्रवर्तकोऽसि निवर्तकोऽसि अनो(जो)ऽस्यनन्तोऽसि सृजतो हि ते श्रुतयोऽनुवर्तन्ते नैवासृजतः । कं वा विदधते कं वा निषेधन्ति स्तुतिमात्रा एव ते स्युः प्रभो विभो समास्व व्यास्वोत्तिष्ठ प्रचर विचर सन्धिनु सन्धिनु मा ते क्षणो त्यागान्मते क्षणोत्यृगादिति शाण्डिल्यश्रुतिः ।।

'लयस्य त्वष्टमो भाग सृष्टिकाल उदाहृतः ।
तत्रैव वेदसंचारो ह्यन्यदा स्तुतिमात्रकाः' । इति नारदीये ।।

'सृष्टिकाल एव गुणवृत्तयः । सर्वदा निर्गुणे परमेश्वर एव वर्तन्ते श्रुतयः' इति 'कथं चरन्ति श्रुतयः' इत्यस्य परिहारः ।।

यत्प्राप्त्यर्थं यन्नियमाद्विधिनिषेधा वर्तन्ते । स त्वमित्यादिविधिनिषेधानां स्तुतिपरत्वम् ।

'विध्यादीनां नियन्ताऽयं पूज्यः प्राप्यश्च तद्व्रताम् ।
इत्यादिस्तुतिरूपेण विध्यादिश्रुतयोऽपि तु ।
हरिं वदन्ति सर्वेषां तन्नामत्वादथापि च' ।। इति श्रुतिनिर्णये ।।

पृथक्श्रुतित्वान्न पूर्वापरमसम्बन्धः । उपलक्षणत्वादनन्तत्वात् श्रुतीनां सर्वश्रुत्यर्थोपबृंहितत्वाच्चैतेषां श्लोकानां न सर्वश्रुतीनां पृथगुक्तिः ।।

'सर्वश्रुत्यर्थसंपन्नान् श्लोकान् सत्यवतीसुतः ।
एकैकशाखास्तुत्यर्थान् जगौ सर्वोपलक्षणान् ।
बबन्ध तान् भागवते प्रतिश्लोकं पृथक् (श्रुतीन्) श्रुतीः' ।।
इति तन्त्रभागवते ।। १३-१५.१ ।।

बृहदुपलब्धमेतदवशेषतया
यत उदगास्तमस्यविकृतेऽविकृतः ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ।। १६ ।।

अविकृततमोविषये त्वमुदगाः । मूलप्रकृतेरपि त्वमधिको यतः । अतो बृहत्त्वेन ते स्वरूपमुपलब्धम् । इत इदमधिकमितोऽपीदमधिकमिति सर्वाधिकत्वेन ततोऽधिकाभावेनावशेषितत्वेन ।।

'द्वितीयार्थे तृतीयार्थे चतुर्थ्यर्थे च सप्तमी ।
पञ्चम्यर्थे च प्रोक्ता या विषयेति च तां विदुः' ।। इति महाव्याकरणे ।।

तमसोऽधिको अभवः इत्यर्थः ।। अतस्त्वं सर्वोत्तम इत्येवम्पराणि त्वयि मनोवचनाचरितानि दधतां नायथा तानि भवति ।। यथा भूमौ पदं निक्षिपामीति प्रवर्ततो भूमेर्नान्यत्र भवन्ति । उदकवृक्षादेर्भूम्यन्तर्भावात् ।

'आधारशक्तियुक्तत्वाद्भूरुदं च प्रकीर्ततम् ।
साऽपि वाय्वन्तरङ्गैव स ह्याधारोऽखिलस्य च' ।।
इति महासंहितायाम् ।।

अत इति हेत्वर्थे तथेत्यर्थे च । तस्माद्बृहत्वेनादधुरिति ।

'अतः शब्दस्तु हेत्वर्थे तथेत्यर्थे च वर्तते ।
उभयार्थे च भवति यथा शब्दविदो विदुः' ।। इति शब्दनिर्णये ।।

उपलब्धं वेदेषु ।।

बृहद्धि दृष्टमवशेषितं यत्स्वरूपमीशस्य तमोधिकस्य ।

'सर्वाधिकत्वेन तमो हि दुर्गा ततस्तथैनं विबुधाः यथाऽगुः' ।।
इत्यौद्दालकायनश्रुतिः ।।

अनिर्देश्यमप्येकदेशेन निर्दिष्टं भवतीत्युक्तं कथमयथाभवन्तीत्यनेन । यथा सर्वां भूमिमसञ्चरन्नप्येकदेशसञ्चारेण भूसञ्चारी भवति तथेति ।

'निरपेक्षबृहत्त्वस्य ज्ञानाज्ज्ञातं भवेत्परम् ।
बृहत्वमेव तु गुणैः सर्वैरुद्दिश्यते यतः' ।।
इति मान्यसंहितायाम् ।। १६ ।। २ ।।

इति सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपणं तव कथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ।। १७ ।।

अनन्याश्रयत्वात्स्वधामा परमः । तेन विधुताः दुःखाद्याः आशयगुणाः उत्पत्त्याद्याः कालगुणाश्च येषां ते मुक्तास्तापान् जहुरिति किं पुनः । कथामृताब्धिमवगाह्यापि जहुरिति यदिति हेत्वर्थे इति शब्दः ।।

'त्यजन्ति तापं य उक्ते भवत्कथा इति स्म मुक्ताः किमु ते स्वरूपगाः ।
परावरेशेश पदं भजन्तः परं परानन्दमनारतं ते' ।।
इति इन्द्रद्युम्नश्रुतिः ।। १७.३ ।।

दृतय इवोच्छ्वसन्त्यसुहृदो यदि ते
महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधान्वयोऽत्र चरमोत्तममध्यमादिषु
यस्तव सदसतः परं प्रथयेदविशेषमृतम् ।। १८ ।।

चरमोत्तममध्यमादिषु पुरुषेषु यस्तव स्वरूपं प्रथयेत् । स पुरुषविधं त्वामन्वेति ।।

'ब्रह्मैव मुक्तिगेष्वादिः सुरास्तदवरोत्तमाः ।
मध्यमा ऋषिगन्धर्वाश्चरमा मानुषोत्तमाः' ।। इति प्रभावल्याम् ।।

'असक्तो देहपुर्येष जीववद्देहगोऽपि यत् ।
अथवा पुंविधातृत्वात् पुंविधः पुरुषोत्तमः' ।। इति पुरुषोत्तमतन्त्रे ।।

अनिशमुच्छ्वसन्त्यसुखोद्धरितास्तव रिपवो दृतिवत्तमसि प्रविष्टाः ।

'तव गुणप्रथनाः परिहाय तमः परियाति ।
ते पदमजस्रमनन्तसुखम् ।।' इति पैङ्गिश्रुतिः ।। १८-४ ।।

उदरमुपासते यर्हि वर्त्मनि सूक्ष्मदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगाच्च नन्दनपथाऽथ शिरः
परमं पुनरिह यत् समेत्य न पतन्ति कृतान्तमुखे ।। १९ ।।

यर्हि यस्मात् ब्रह्मवर्त्मनि । सूक्ष्मदृक्त्वाच्छार्कराक्ष्य(क्ष)नामानः । प्राणं प्रत्युरुगृणीहीति वचनादुदरनामकं ब्रह्मोपासते । यस्माच्चारुणयो हृद्ययना-द्धृदयनामकं तस्मादेव तत्समुपेत्य कृतान्तमुखे न पतन्ति । इतरेऽपि । परिसरः प्राणः पद्धतिः मार्गो यस्य सः परिसरपद्धतिः ।

'कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि । कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति । स प्राणमसृजत' । इति श्रुतिः ।।

प्राण एवैनमनुप्रविशति प्राणमितरा देवताः न प्राणादपरः परमनु प्रविशति प्राण एवैनमनुभुङ्क्ते प्राणमितरा देवताः न प्राणादपरः परमनुभुङ्क्ते प्राण एवैनमन्वानन्दी भवति । प्राणमितरा देवताः न प्राणादपरः परमन्वानन्दी भवति तस्मादाहुः प्राणः पद्धतिः । इति हिरण्यनाभश्रुतिः ।

अतः परिसरस्य पद्धतिरिति वा । ततो हृदः । नन्दनपथा ब्रह्मनाडीद्वारा शिर उदगात् यत् परमं ब्रह्म तत्समुपेत्य । पुनरिहैव हृदादिषु स्थितं यत् ।।

'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे तस्मात्प्रपदे इत्याचक्षते । शफाः खुरा इत्यन्येषां पशूनाम् । तदूर्ध्वमुदसर्पत्ता ऊरू अभवतामुरु गृणीहीत्यब्रवीत्तदुदरमभवदुर्वेव मे कुर्वित्यब्रवीत्तदुरोऽभवदुदरं ब्रह्मेति शार्कराक्ष्या उपासते । हृदयं ब्रह्मे-त्यारुणयो ब्रह्मा हैव ता ई । ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत्तच्छिरसः शिरस्त्वं ता एता शिर्षञ्छ्रियः श्रिताः चक्षुः श्रोत्रं मनो वाक् प्राणः श्रयन्तेऽस्मिन् श्रियो य एवमेतच्छिरसः शिरस्त्वं वेद' । इत्याद्या श्रुतिः ।। १९-५ ।।

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
भरतमतश्चकास्स्यनलवत् स्वकृतानुकृतिः ।

अपि वितथास्वमूष्ववितथोरुविधं मनसि
निकटधियो नयन्त्यभिविपत्य तव ।। २० ।।

विचित्रयोनिषु विशन् जीवः तद्वदज्ञानां चकास्सि ।। अनलो यथा स्वकृतं दार्वादि तदपनयने गच्छन् तत्स्थापने तिष्ठन्ननुवर्तते ।। एवमेव स्वकृत-शरीराद्यनुवर्तसे तद्गतः सन् ।।

भरतमतो वायुज्ञातः । अन्यथाभवन्तीष्वपि योनिषु अनन्यथाभूत्वैव बहुविधं तिष्ठन्तं भवन्तं त्वत्समीपस्थबुद्धयो महान्तस्तवाभिपत्य मनसाऽधिगम्य मनसि त्वां नयन्ति ।।

'रतत्वाद्भात्मके विष्णावथवाऽपि जगद्भृतेः ।
भरतो वायुरुद्दिष्टो भारती तत्सरस्वती' ।। इति नामसंहितायाम् ।।

'योनिवेश्याह्वयो जीवस्त्वज्ञानां तद्वदेव तु । प्रकाशते परो देवस्तेन यान्त्यधरं तमः । सर्वहेतुतयैवेशं प्राणो जानाति तत्त्वतः । तेन चासौ परो देवस्तत्परं याति केशवम् । इन्धनानयने त्वग्निर्यथैवानीयते सह । एवं देहगतो विष्णुः सह गच्छेन्निजेच्छया ।

'अशाश्वतेषु देहेषु शाश्वतं बहुधा स्थितम् ।
निचाय्य मनसा सन्तो जानन्ति निकटेच्छवः' ।। इति तन्त्रभागवते ।।

'यो जीववद्योनिषु भात्यनन्तो मूढैस्तमोगैर्भरताधिगम्यः ।
निचाय्य तं शाश्वतमात्मसंस्थं तदिच्छवो त्मन् न्यदधुर्महान्तम्' ।।
इति कमठश्रुतिः ।। २०-६ ।।

प्रक्रमवत् स्वसत्कृतं पुरुषेषु धीषु तु बहिरन्तरसञ्चरणे ।
तव पुरुष वदन्त्यखिलशक्तिधृतः स्वकृतम् ।। २१ ।।

सर्वपुरुषेषु सर्वधीषु च स्थित्वा श्रीब्रह्मादिषु प्रकर्षेण क्रमेण स्वात्मनैव सत्कृतम् ।। अण्डाद्यन्तर्बहिश्च । असच्चरणे पापाचारे स्थित्वा पापाचारमपि स्वात्मनः पूजात्वेनैव कारयन्तं त्वां वदन्ति ।। तस्याधोगत्यर्थम् । तस्मात्सर्वं तव स्वकृतमेव वदन्ति ।।

'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत् क्रियते किं च नारे महामर्कं मघवन् चित्रमर्च' ।।
इत्याद्या श्रुतिः ।।

'श्रीब्रह्मरुद्रपूर्वेषु क्रमात्स्थित्वा जनार्दनः ।
स्वात्मानमर्चयत्यद्धा बहिरन्तरसत्सु च ।
असतामधमाचारो हरिदृष्ट्याऽऽत्मपूजनम् ।
तस्याधोगमनायेति श्रुतिराहाखिलक्रियम्' ।। इति तन्त्रभागवते ।।

स्वकृतमित्यनन्यापेक्षया ।। २१-७ ।।

इति विमृशन्ति कवयो निगमावपनं
य(भ)जन्त उपासते भवमध्यविनिश्वसिताः ।
दुरवगमात्मतत्वनिगमायतवाङ्मनसश्चरित-
महामृताब्धिपरिवर्तपरिश्रमणाः।। २२ ।।

भवमध्यविनिःश्वसिताः इति यतः । अतो विमृशन्ति कवयो निगमावपनं त्वाम् ।। चरितमहामृताब्धिपरिवर्तपरिश्रमणाः इति यत् । अतो भवमध्यविनिश्वसिताः । मुक्ताः निगमानामावपनं स्थानं त्वां विमृश्य यज्ञादिभिर्भजन्त उपासते ।। निगमविषये आयतवाङ्मनसः । निगमानां ततो व्यक्तेस्तत एव फलप्रदत्वात्तद्विषयत्वाच्च निगमावपनम् । परिवर्तो मथनम् ।।

'विमथ्य वेदाब्धिमतिश्रमेण ज्ञात्वा परेशं मुनयो विमुक्ताः ।
मृशन्ति यज्ञैश्च यजन्ति नित्यं उपासते वेदफलप्रदं तम्' ।।
इति कुशिकश्रुतिः ।। २२-८ ।।

न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ।
त्वदनुपथं कुलायमिदमात्मसुहृत् प्रियवच्चरन्ति
तथोन्मुखास्त्वयि हि ते (हिते) प्रिय आत्मनि च ।।२३।।

त्वत्प्राप्त्यनुसारित्वाच्छरीरं प्रियवत् पश्यन्ति । सर्वप्रियतमे सर्वादानादि-कर्तरि च त्वयि । तथा हि तेऽभिमुखाः ।।

'न किञ्चिदभिवाञ्छन्ति यतयः सुसदाश्रयाः ।
प्रेष्ठस्य परमस्याप्त्यै प्रियवद्देहदृष्टयः' ।। इति विमदश्रुतिः ।।२३-९।।

न च रमन्त्यहो असदुपासनयाऽऽत्महनो
यदनुशया भ्रमन्त्यभवाः कुशरीरभृतः ।
निभृतमोक्षहृदययोगयुजो हृदयं मुनय
उपासते तदरयोऽपि ययुः ।। २४ ।।

अन्यथोपासनयाऽऽत्महनोऽसुर्यान्नाम लोकान्नित्यनिरतिशयदुःखान्निरस्त-समस्तसुखान् प्राप्नुवन्ति । तदेतन्न च रमन्ति अनुभवन्ति च । नित्यदुःख-मिति चशब्देनोक्तम् । असुर्यशब्देन च श्रुतौ । सुष्ठ्वरमणरूपत्वादसुर-प्राप्यत्वाच्च । यत्रानुशयनं कुर्वन्तस्तमस्येव भ्रमन्ति । अभवा जन्म-वर्जिताः ।।

आत्महन इत्येषशब्दो भगवद्भक्तद्वेषिणामपि सम इति दर्शयति ।। निभृतमोक्षहृदययोगयुज इत्यादिना । ये मुनयो हृद्ययनं भगवन्तं निभृतमोक्षहृदयेन वायुना योगेन युक्ताः नियमिताः सन्तः उपासते तेषामरयोऽपि तदेव तमो ययुः । परिपूर्णमोक्षार्थं ज्ञानं यस्य सः निभृतमोक्षहृदयः ।

'असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' ।। इति श्रुतिः ।

'नित्यदुःखसुसम्पूर्णं निरस्तानन्दमव्ययम् ।
तमो यान्त्यन्यथाज्ञानाद्द्वेषाद्वा हरिसंश्रये' ।। इति प्राणसंहितायाम् ।।

'निभृतो मोक्षवित्प्राणस्तद्योगात्तत्प्रसादतः ।
जानन्ति परमं देवं नान्यथा तु कथञ्चन' ।।
इति भागवतसंहितायाम् ।। २४-१० ।।

स्मरणात् स्वनुराग तद् भवान्
उरगेन्द्रभोगदण्डविषक्तधियो
वयमपि ते समासमदृशोऽङ्घ्रिसरोजसुधाम् ।
क इह नु वेद वक्तुमपेतजन्मलयो
यत उदगाद् ऋषिरनु देवगणा उभये ।। २५ ।।

हे स्मरणादेव स्वनुरक्त ! तत्ते स्वरूपं भवानेव वेद । उरगेन्द्रभोगदण्डे विषक्तबुद्धेस्तेऽङ्घ्रिसरोजसुधां वयमपि समासमदृशः । सर्वमाहात्म्यस्य वेदैरपि वक्तुमशक्यत्वादसमदृशः वेदागम्यमाहात्म्यस्यापि वेदैरेव गम्यत्वात्समदृशः ।। अतः कोऽन्यो वक्तुं वेद । को ह्यस्मांस्त्वां चर्तेऽपेतजन्मलयः यतः उदगादुत्पत्तिमानेव ऋषिर्ब्रह्मा । प्राप्तपदा अप्राप्तपदाश्च देवगणाः ।

'त्वं वेत्थ नापरस्ते स्वरूपं न
नित्यवाङ्नागभोगप्रियस्य ।
कुतो ब्रह्मा प्राप्तलोकाश्च देवास्तथाऽप्राप्ता
जनिमन्तो यतोऽस्मात् ।। इति सङ्गतिश्रुतिः ।

'महिम्नः सर्वशोऽनुक्तेर्वेदाश्चासमदर्शिनः ।
तस्यापि वेदगम्यत्वात्तथैव समदर्शिनः' ।।
इति तन्त्रभागवते ।। २५-११ ।।

तर्हि न सन्न चासदुभयं न च कालजवः
किमपि न तत्र शास्त्रमपकृष्य शयीत यदा ।
जनिमसतः सतो मृतिमजात्मनि ये च भिदां
विपणमृते स्मरन्त्युपविश ध्वनिमारुवतः ।। २६ ।।

शास्त्रमपकृष्य प्रलये शास्त्रस्य प्रवृत्त्यभावात् । असतः सूक्ष्मरूपात्सतः स्थूलरूपस्य परमेश्वरपर्यन्तं यथाक्रमं जन्म मृतिं च सर्वस्मात्परमात्मनि भेदं च विपणं फलापेक्षामृते ये स्मरन्ति तेषां ध्वनिमुपविश । आरुवतो वायोः प्रसादात्तथा स्मरन्ति ।।

'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्' ।।
इत्यादिश्रुतिः ।।

'सूक्ष्माणि महदादीनि स्थूलान्यण्डादिकानि च ।
उभयं त्वग्निरापश्च न किञ्चित्प्रलयेऽभवत्' ।। इति प्रकाशसंहितायाम् ।।

'सर्ववेदादिरूपेण प्राणस्यारुवतः सदा ।
प्रसादाद्ये विजानन्ति सूक्ष्मात् स्थूलजनिं क्रमात् ।
मृतिं च सर्वजीवादेरीशस्य व्यतिरिक्तताम् ।
जानन्ति ये निराकाङ्क्षाः तेषां वाचि जनार्दनः' ।।
इति तन्त्रभागवते ।। २६-१२ ।।

**त्रिगुणमयः पुमानिति यदबोधकृता**
**त्वयि न तु भवेत् तदवबोधरसे ।**
**सदिव मनस्त्रिवृत् त्वयि भवत्यसतां मनुजा-**
**दयो विमृशन्त्यशेषमिदमार्ततयाऽऽत्मविदः ।। २७ ।।**

**अबोधकृता** त्रिगुणबद्धता । यस्माज्जीवस्यापि तस्मात्तदवबोधरसे त्वयि सा न विद्यते । त्रिगुणात्मकं मनस्तवापि विद्यते इत्यसतां पक्षः । मनुजानामादयो देवास्त्रिगुणातीतत्वाद्भवतो भवानेव परमानन्दः । त्वदन्यत्सर्वं जीवजातमार्तमित्येव विमृशन्ति ।

'सत्वादिजं देहमथो मनश्च सत्वादिबद्धं च वदन्त्यसन्तः ।
परं पुमांसं न सुरास्तु तैर्हि जीवाः सुदृष्टा परमार्तरूपाः' ।।
इति सूकरायणश्रुतिः ।।

'त्रैगुण्यदेहेन्द्रियकमासुरा जानते हरिम् ।
त्रिगुणातीतमीशेशमतः पूर्णसुखं सुराः ।।
जानन्ति गुणबद्धत्वाज्जीवानार्तांश्च कृत्स्नशः ।
अनार्तस्य प्रसादेन तेषामार्तिविनाशनम्' ।।
इति चैतन्यविवेके ।। २७-१३ ।।

न हि विकृतं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्ट इदमात्मतया रसितम् ।
तव ये परिचरन्त्यखिलतत्त्वनिकेततया
ननु ते पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः ॥ २८ ॥

यथा कनकस्य विविधकृतं कुण्डलादिकं कनकं विना परित्यक्तुं न शक्यते तथा स्वकृतं जगदनुप्रविष्टो भगवान् मूलरूपं विना परित्यक्तुं न शक्यः । आत्मतया एकरूपत्वात् । रसितं आत्मना प्रकाशितं जगत्प्रविष्टस्तस्मात्सर्वगतो विष्णुरिति ज्ञातव्य इत्यर्थः । इत्थं ये ज्ञात्वा परिचरन्ति तव स्वरूपं ते ऋतात्मकब्रह्मप्राप्तिविरुद्धत्वान्निर्ऋत्याख्यसंसारस्य शिरः स्फुटं पदाऽऽक्रमन्ति ।

'सर्वगं ये प्रपश्यन्ति ब्रह्मानन्दमजाक्षरम् ।
एकमेवाद्वयं नित्यं निर्ऋतेस्ते शिरो गताः' ॥ इति सौकरायणश्रुतिः ॥

'यथैव कुण्डलं त्यक्त्वा नादातुं कनकं शकम् ।
तस्यैव तदवस्थत्वात्केवलाभेदतः स्पुटम् ।
एवं सुरासुरनरेष्वास्थितो भगवान् हरिः ।
नैव भेदेन मन्तव्यो जीवभेदे तु सत्यपि ।
ये तथाऽभिन्नमीशेशं पश्यन्ति परमर्षयः ।
ऋतप्राप्तिविरुद्धत्वात्संसारनिर्ऋतेः शिरः ।
अगणय्य पदाक्रम्य वैष्णवं निलयं ययुः' ॥ इति गारुडे ॥२८-१४॥

परिवयसे पशूनिव गिरा विबुधानपि तां-
स्त्वयि दृढसौहृदा ननु पुनन्ति न ते विमुखाः ।

त्वमेकः स्वराडखिलकारकशक्तिधर-
स्तव बलिमुद्वहन्ति समदन्ति च येऽनिमिषाः ।। २९ ।।

वयति गा इव यः सुरादिकांस्तन्मनसो जगदपुनन् शुचयो न परे ।

'स एकः ईशः परिपूर्णशक्तिर्बलिं हरा इतरे स्युः सुराः सुखिनः' ।।
इत्यारुणिश्रुतिः ।।

'विष्णुना देवता बद्धाः विष्णवे च बलिप्रदाः ।
विष्णुरासां पतिर्नित्यं न विष्णोर्बन्धकः क्वचित्' ।।
इति वामने ।। २९-१९ ।।

वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः ।
स्थिरचरजातयः स्युरज ये त्वनिमित्तयुजो
विरह उदीक्षयेत् यदि परस्य विमुक्तसतः ।। ३० ।।

स्थिरचरजातयो ये तेऽनिमित्तयुजः स्युः । भगवन्नियमादेव संसारयुजः स्युः । विरहे मुक्तौ । यदि परस्य सकाशान्मुक्तिरेवेत्युदीक्षयेत्स परः । विमुक्ताः सन्तो येन परेण तस्य विमुक्तसतः । 'नान्यः पन्था अयनाय विद्यते' इति श्रुतिः । मुक्तिस्तस्मादेवेत्यङ्गीकर्तव्यम् । अतो बन्धोऽपि तत एवेत्यर्थः ।

'सतां विमुक्तिदाद्विष्णोर्मुक्तिर्यद्यभ्युपेयते ।
बन्धोऽपि तत एव स्याद्यस्मादेकस्तयोः पतिः' ।। इति स्कान्दे ।।

'आत्मानं मुक्तिदं विष्णुः यदि पुंस उदीक्षयेत् ।
सुप्रसन्नस्तदा बन्धस्तत एवेति सेत्स्यति' ।। इति ब्राह्मे ।।

खण्डाधीशाः सार्वभौमस्य यद्वद्ब्रह्मेशाद्याः कुर्वते तेऽनुशास्तिम् ।
त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो ।।
इत्युदारशाण्डिल्यश्रुतिः ।। ३०-१६ ।।

न हि परमस्य कश्चिदपरोऽनपरस्य भवेत्
व्ययत इवात्र यस्य च शून्यतुल सन्दधतः ।
अपरिमिता ध्रुवास्तनुभृतो यदि सर्व ततो
न हि न शास्यतेति नियमो ब्रुवते च तथा ।। ३१ ।।

**यस्य** परमस्य ते कश्चिदपरः स्वतन्त्रो नास्ति । अनपरस्य प्राणोत्तमस्य । अत्र जीवसमुदाये । व्ययतः विशेषेणायतः सर्वज्ञस्य यथा प्राणस्य नापरः स्वतन्त्रः तद्वत्प्राणः श्रीरन्यो वा त्वां विना स्वतन्त्रो नास्ति ।। हे शून्यतुल समानवर्जित । सर्वं संदधतस्ते ।। यदि त्वत्तः प्राणात्तनुभृतो जीवा ध्रुवास्तर्ह्यपरिमिताः सन्ति । हे सर्व पूर्ण । 'एकमेवाद्वितीयम्' । 'एकं परंज्योतिरन्यन्यमद्वयम्' इत्यादिनियमो जीवानां शास्यता नेत्यत्र नहि । किन्तु स्वगतभेदस्य ईश्वरान्तरस्य अतत्तन्त्रस्य निषेधे । 'अतोऽन्य-दार्तम्' ।। 'नेह नानास्ति किञ्चन' । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादि तथा ब्रुवते च ।।

'तव स्वतन्त्रो नापरो तद्वदत्र प्राणान्नान्यस्तुल्यशून्यस्य सन्धिन् ।
प्राणाधीना अमिता जीवसङ्घाः प्राणो वशे ते प्रकृतिश्च भूमन् ।।'
-इति महाशालीनश्रुतिः ।

'स्वतन्त्रो नापरः कश्चिद्विष्णोः प्राणपतेः प्रभोः ।
यथा प्राणात् परो नास्ति स्वतन्त्रो जगति क्वचित् ।

तथा प्राणो रमा चैव न विष्णोः पृथगीश्वरौ ।
यद्युच्यन्ते प्राणतन्त्राः बहवः पुरुषा इति ।
सत्यमेव ह्यसङ्ख्याताः न नियम्यनिषेधकाः ।
एकाद्वितीयश्रुतयः किन्त्वीशान्तरवारकाः ।
तथा स्वगतभेदस्य तदतन्त्रनिषेधकाः ।। इति ब्रह्माण्डे ।।

'स्वरूपमस्मरत्कृष्ण एकं स्वस्मिन्नभेदतः ।
अतत्तन्त्रस्य राहित्यादनन्यं सदृशोज्झितेः ।
अद्वयं नित्यनिर्वृत्या भावनिर्वृतिमीश्वरम्' ।। इति तन्त्रभागवते ।।

'अधिकस्य समस्यापि स्वतन्त्रस्य च वर्जनात् ।
एक एवाद्वितीयोऽसौ न शास्यजनवर्जनात् ।।
इति कौर्मे ।। ३१-१७ ।।

अजन परिमुच्यतेऽत्र भवात् सततात्
सममनुजानता ततमनन्तमदुष्टतया ।
न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजोर्भवन्त्यसुभृतो जलबुद्बुदवत् ।। ३२ ।।

अनन्तमदुष्टतयाऽनुजानताऽऽचार्येण सन्तताद्भवात्परिमुच्यते ।। अबद्धश्च प्रकृतिपरेशौ विनाऽन्यो न विद्यते । यतस्तयोरेवोद्भवो न घटते । ततस्तयोरजयोरसुभृत उद्भवन्ति ।। देशतः कालतश्च यत्र परमस्तत्र प्रकृतिर्यत्र प्रकृतिस्तत्र परम इत्युभययुजोः ।

'मुच्यते तत्वसम्बद्धादाचार्यात्पुरुषो भवात् ।
एतावेव स्वतोऽबद्धौ परमः प्रकृतिस्तथा ।।' इति कलापश्रुतिः ।।

'सम्यग्ज्ञानवदाचार्यान्मुच्यते पुरुषो भवात् ।
द्वावेव नित्यमुक्तौ तु प्रकृतिः परमस्तथा' ।। इति वामने ।।

'देशतः कालतश्चैव समव्याप्तावुभावजौ ।
ताभ्यामुभययोगाभ्यां जायन्ते पुरुषाः परे' ।।
इति कौण्ठरव्यश्रुतिः ।। ३२-१८ ।।

त्वयि त इमे ततो विबुधनामगुणाः परमे
अमृत इवार्णवे मधु निलिल्युरशेषरसाः ।
नृषु तव मायया स्वगतया कुशलं
त्वयि सुधियोऽङ्ग भेदमनुविधातुमनु प्रभवः ।
कथमनुवर्तिनां भवभयं तव भ्रुकुटी सृजति मुहुर्नृणाम् ।।३३।।

हे तत ओ । त इमे विबुधनामार्थभूता गुणास्त्वयि निलिल्युः । परमेऽमृतार्णवे मधुन्यशेषरसा इव । अतः पूर्णगुणत्वाद्भवतो नृणां मध्ये सुधियः । तव मायया त्वदिच्छयैव । त्वयि कुशलं विधातुं प्रभवः । तत्र कुशलं भेद एव । सर्वस्मादन्यो विशिष्टगुणः पर इति दर्शनम् ।। स्वगतया सुष्ठु अन्यैरनवगतया । तथा त्वत्प्रसादादनुवर्तिनां कथं मुहुर्भवभयं तव भ्रुकुटी सृजति ।।

'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या' ।।

'त आऽयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि' ।
इत्यादिश्रुतिः ।।

'ब्रह्मेशेन्द्रादिसन्नाम्नां येऽर्थभूता गुणा मताः ।
पूर्तीशीतृत्वद्रष्टृत्वप्रमुखास्ते हरेः सदा ।
अतस्तु सर्वनामाऽसौ सर्वकर्ता च केशवः' ।। इति पाद्मे ।।

'आनन्दत्वादनामासावुत्कृष्टत्वादुनामकः ।
एतन्नामद्वयं विष्णोर्ज्ञात्वा पापैः प्रमुच्यते' ।। इति स्कान्दे ।।

'अन्याविज्ञातया विष्णोः शक्त्यैव कुशलं जनाः ।
कुर्वन्ति कुशलेषूच्चं भेददर्शनमेव च ।
पूर्णानन्दादिसम्पत्तिं विष्णोर्ज्ञात्वेतरेषु च ।
तदपेक्ष्य विप्लुण्मात्रत्वज्ञानं तद्भेददर्शनम् ।
अनाद्यनन्तभेदोऽयं स्वभावः परजीवयोः ।
स्वतो वा परतो वापि न कदाचित्प्रणश्यति ।
एवं ज्ञानवतां विष्णुर्बहुजन्म न दास्यति ।
अनुवृत्तिर्यद्यनल्पा स हि सर्वेश्वरः प्रभुः' ।। इति प्रमाणसंहितायाम् ।।

'यः पिता जनिता चैव कल्पको नित्यपोषकः ।
प्रापकः सर्वदेवानां पदानां पुरुषोत्तमः ।
सर्वदेवाभिधावाच्यो भूतभव्यभवत्प्रभुः ।
विचार्य सर्ववेदैश्च ब्रह्माद्याश्च यजन्ति च ।
त्रिगुणात्मकस्य स्रष्टारः तथाऽपि न यजन्ति तम् ।
यतः पूर्णेशशक्त्यैव तेषां यजनमिष्यते ।
अतः सर्वेश्वरो विष्णुरेक एव महागुणः' ।।
इति महासंहितायाम् ।। ३३-१९ ।।

इह भवच्चरणेषु सुजातभुवो
जितहृषीकवायुभिरुदात्तमहत्तुरगैः ।
य इह यतन्त्यमतिलोलमुपायविदो
व्यसनशताब्धितारमपहाय गुरोश्चरणम् ।। ३४ ।।

वणिज इवोच्छ्वसन्त्यकृतकर्णधरा जलधौ
स्वजनसुतात्मदारधनधामधराः ।
सुखशान्तिमति त्वयि हि सन्ति न तानि नृणां
विभव उद्यति श्रयत आत्मनि सर्वरसे ।। ३५ ।।

भवच्चरणेषु सुष्ठु जातस्थानाः उत्तमयोग्यतायुक्ताः । हृषीकाण्येव महत्तुरगाः । वायुरेवोदात्तः ।

'रथोपरि स्वीकरणादुदात्तः सारथिर्मतः' ।। इति व्यासनिरुक्ते ।।

'जयो विष्णोश्च वायोश्च भक्त्या तत्प्रीतिसाधनम् ।
जगदीशयोः कुतो ह्येनोः सर्वशक्त्योर्बलाज्जयः' ।। इति पवनविजये ।।

तेषां तानि साधनानि सुखस्यापि शान्तिमति पूर्णसुखे त्वयि न सन्ति ।। गुर्वभावात् ।।

विभवे जीवन्मुक्ते गुरावुद्यति उपदिशति सति सर्वरसे परमात्मनि श्रयत एव ।।

'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' । इति श्वेताश्वतरश्रुतिः ।।

'देवा अपि सुयोगाढ्याः यतन्तः सर्वसाधनैः ।
पुत्रदारादिभिस्सार्धं नोच्छ्वसंतीह (नाऽश्वसन्तीह) संसृतौ ।

गुरोरनुग्रहमृते साधनं न हरेः प्रियम् ।
गुरूपदेशात्तु परं प्राप्नोत्येव न संशयः ।।
षण्णवत्यङ्गुलो यस्तु तालास्यो दशतालकः ।
दशप्रादेशकः सप्तपादो हस्तचतुष्टयः ।
कलमत्रयाङ्गुलश्चैव वाग्मी सन्देहवर्जितः ।
वासुदेवैकशरणो गुरुरित्युच्यते बुधैः ।
गुरुलक्षणसम्पूर्णः साक्षादेव चतुर्मुखः ।
ततः शेषेन्द्रवह्न्याद्याः क्रमेणैव प्रकीर्तिताः' । इत्यादि गुरुविवेके ।।

'देवा योग्यतया जाताः विष्णुपादाम्बुजाश्रयाः ।
तथाऽपि साधनैस्तेषां तत्प्राप्तिर्गुर्वनुग्रहात् ।।'
इति तत्वोद्योगे ।। ३४,३५ २०-२१ ।।

इति सदजानतां मिथुनतो रतये चरतां
सुखयति को न्विहाद्य विजने स्वनिरस्तभगे ।
भुवि पुण्यतीर्थसदना ह्यृषयो
निविशन्त्यतस्तु भवतः पदाम्बुजं हृदाऽघभिदम् ।
दधति सकृन्मनस्त्वयि चिदात्मनि नित्यसुखे
न पुनरुपासते पुरुषसार हरावसथम् ।। ३६ ।।

इति लोके परिदृश्यमानप्रकारेण । चरतां, विजने मोक्षविषये कः सुखयति । सुष्ठ्वनिरस्तभगे । अतस्त्वामेव सन्तं ज्ञात्वा भवतः पदांबुजं हृदा निविशन्ति । हरावसथमहङ्कारं न कुर्वन्ति ।।

'ब्रह्माज्ञात्वेति लोकप्रवृत्तिं प्रवर्ततां को नु मोक्षं ददाति ।
अतो ब्रह्मोपासते साधु धीरा नाहम्भावस्तेषु रुद्राधिवासः' ।।
इति महारवश्रुतिः ।।

'महाभाग्यं तु कैवल्यमज्ञानां कः प्रदास्यति ।
अतः सन्तो विजानन्ति हरिं ते त्वनहङ्कृताः ।।'
इति स्कान्दे ।। ३६-२२ ।।

इदमप्यथो वदन्ति चे-
न्ननु तर्का व्यभिचरन्ति क्वचित् क्वचिन्मृषा च ।
ततो भयदृग्व्यवहितये विकल्प उषितोऽन्वहमन्धपरम्परया
भ्रमति भारती च तवोरुवृत्तिभिरूढजवा ।। ३७ ।।

न यदिदमग्र आस न भविष्यदतो निधना-
दनिमित्तकमन्तरा त्वयि विभाति मृषैकरसे ।
अत उपगीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमिदमित्यवयन्ति बुधाः ।। ३८ ।।

इदं अपि अपालकं ईश्वरवर्जितम् । न मत्तोऽन्य ईश्वरश्चेतनत्वादित्यादितर्कैः वदन्ति चेत् । अथो इत्यनेन तदपि वचनं भगवत्प्रेरणयैव इत्युक्तम् । ''तस्मादथो अथेत्येतद्धेत्वर्थं समुदीरितम्'' इति शब्दनिर्णये । ''असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्'' इति च । वेदोक्तो जीवव्यतिरिक्तेश्वरो न तर्कैरपनेतुं शक्यः । यतस्तर्का व्यभिचारिणः । मृषैव क्वचित्तर्कः । इष्टसाधनादितर्कस्तु व्यभिचारी । शरीरसम्मित आत्मा इत्यादि दर्शनपरिकल्पितस्तु मृषैव ।

ततो भयबुद्धीनां बुद्धिव्यवहितये भवन्ति । न तु धीराणाम् । विकल्पः वेदविरुद्धकल्पना । अन्धपरम्परयैवान्वहमुषितः । यस्माद्धारत्यपि भ्रमति वहुधा वदति ।।

'बहूक्तिरन्यथाज्ञप्तिः परिवृत्तिश्च कथ्यते ।
भ्रम इत्येव विद्वद्भिः तथा चङ्क्रमणं क्वचित्' ।। इति शब्दनिर्णये ।।

उरुवृत्तिभिरूढजवा अनन्तगुणकर्मत्वाद्भगवतः बहुगुणकर्माणि वक्तुं वेगवती वेदवाक् । अतो वेदेऽपि बहुधा वचनात्तदर्थनिर्णयाभावाद्विरुद्ध-कल्पना युक्ताऽसुराणाम् ।

यस्माद्गर्भस्थस्य जीवस्येश्वरत्वं नास्ति । अतो निधनानन्तरं च नरकादि-गमनान्न विद्यते । अनिमित्तकं भगवन्निमित्तमेव तस्यान्तरा भाति मृषा त्वयि जीवे । न तु वस्तुतस्त्वं जीवः । एकरसे प्रधानसारे । न च जीवो वस्तुतः सर्वोत्तमसारः । मृषैव तथा मन्यन्ते ।

अतो भ्रान्त्या द्रविणवानभिजन्मवानित्यादिविरुद्धकल्पनापथैरुपगीयते । यतो भवानेव द्रविणवान्यतश्च तपोदमाद्या अभिजन्मकारणभूता गुणाश्च भवत एव । अतो मिथ्यामनोविलासं जीवेश्वरत्वं बुधा अवयन्ति ।।

'गुणा एवाभिजात्याख्यास्तद्वानेवाभिजातिमान् ।
अतोऽभिजात्यवान् विष्णुस्तदन्ये तूपचारतः' ।। इति शब्द निर्णये ।।

'ये जीवमीशं प्रवदन्ति तर्कैस्तत्त्वेश्वरो वचनं सन्दधाति ।
नासीदादौ मरणे नोऽभविष्यन्मृषा ततो ह्रीशितृत्वं स्वपेषु' ।।
इति विपरीतश्रुतिः ।।

'ये जगत्प्रवदन्त्यज्ञाः जीवादन्येशवर्जितम् ।
तेषामपि तु तां वाचमीश एव ददात्यजः ।
न च तर्कैर्भवेदीशो जीवो वेदविरोधतः ।
व्यभिचारिणो यतस्तर्का इष्टसाधनगा अपि ।

क्वचित् क्वचिन्मृषा तर्काः कणादादिप्रदर्शिताः ।
तत्वनिर्णयभीरूणां व्यवधानकरास्ततः ।
नै व तु स्थिरबद्धीनां कुर्युस्ते बुद्धिचालनम् ।
पारम्पर्येण चाज्ञानामुक्त्या लोकेषु विस्तृतम् ।
पठ्यते चाप्यहरहर्न तु विद्वन्मुखोद्गतम् ।
अनन्तगुणकर्मत्वादीशस्योक्तौ सुवेगिता ।
वक्त्यभेदमिवाज्ञानां नाभेदं कुत्रचिच्छ्रुतिः ।
एक आत्माद्वयेत्यादिपदानामर्थनिर्णये ।
न वर्तते श्रुतिर्यस्माद्गुणान्तरकुतूहलात् ।
अथवा मोहनार्थाय सुरारीणामनर्हतः ।
कुत्रचिन्निर्णयवचः सुराणामर्थसिद्धये ।
न हीशितृत्वं गर्भस्थे नाप्यसौ निरयोपगे ।
मृषा तदीश्वराभेदः सर्वोत्कर्षश्च जीवगः ।
धनवत्वं च कर्तृत्वं बलवत्त्वं च विष्णवि ।
अतो जीवेश्वराभेदं मिथ्येति कवयो विदुः' ।। इति तन्त्रभागवते ।

'जीवस्य जगतश्चैव यदीशाभेदतो वचः ।
अतात्विकं जगच्चेति विष्ण्वधीनत्ववाचकम् ।
अभेदस्तु कुतस्तस्य परमस्यावरेण तु ।
मिथ्यात्वं च कुतस्तस्य जगतो नित्यवर्तनात्' ।।
इति वाराहे ।। ३७,३८ ।। २३,२४ ।।

उदगात् पुमाननुगीतगुणांश्च जुषन्
भजति सरूपतां तदनु त्वमुत जहासि जिहासि ताम् ।

अहिरिव त्वचं त्वमुत परमात्तभगां
महसि महीयसेऽष्टगुणोऽपरिमेयभगः ।। ३९ ।।

श्रुतिषु तवानुगीतान् गुणान् जुषन् पुमानुदगादस्मात्संसारात्तव सरूपतां च भजति । तदनु गुणस्मरणमनु गुणांश्च जुषन्निति, चशब्दः कर्माणि चेत्यस्मिन्नर्थे ।। यश्चायं पुमानात्तभगां त्वयाऽपहृतभगां प्रातिस्विकीं पूर्वोक्तां द्विविधां कष्टां प्रकृतिं जहाति जिहाति हन्ति च तदपि त्वमेव जहासि जिहासि च । उतेति त्यागवधयोः समुच्चयार्थे ।।

'जिहाति रावणं सङ्ख्ये राघवः परमास्त्रवित्' ।। इति स्कान्दे ।।

'स्वातन्त्र्यात्प्रकृतित्यागकर्ता नारायणः परः ।
यद्यप्येषा जीवसंस्था हन्ता च भगवान्प्रभुः' ।। इति गारुडे ।।

महसि महीयसे पूजयसि पूज्यसे चात्मनैव ।।

'स्मरन् ब्रह्मगुणान्नित्यं मुक्तो ब्रह्मस्वरूपताम् ।
दुर्भगां प्रकृतिं त्यक्त्वा हत्वा चान्यां दुरन्वयाम् ।
याति तच्च परेशानात्स हि पूज्योऽथ पूजकः ।
तस्यैकस्य स्वतन्त्रत्वात्स चानन्तगुणो विभुः' ।।
इति कौशिकश्रुतिः ।। ३९-२५ ।।

यदि न समु(त्स)चरन्ति यतयोऽपि हृदि कामजडाः
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।
अनुतृप्तयोगिनामभयो भगवन्
अनवगतान्तकादनधिरूढपदाद् भवतः ।। ४० ।।

अज्ञानामनवगतान्तकादनधिरूढब्रह्मपदात् ।।

'स यथाकामो भवति । तत्क्रतुर्भवति । यत्क्रतुर्भवति तत्कर्म कुरुते । यत्कर्म कुरुते तदभिसम्पद्यते इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकामः आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतिः ।।

'निषिद्धकामयुक्तानामसतां तु विशेषतः ।
दुर्ज्ञेयो भगवान्विष्णुः हृदिस्थोऽस्मृतहारवत् ।
अकामत्वेन भजतां ददात्यभयमन्तकात् ।
पूर्णानन्दादि तेऽश्नन्ति पूर्णानन्दादिकाः स्वतः ।
ब्रह्मणो ब्रह्मसम्पत्तिमत आह श्रुतिः स्फुटम् ।
न परब्रह्मतावाप्तिर्न ते विष्णविति श्रुतेः ।
परमब्रह्मता चैषां ब्रह्मलोकात्परा गतिः ।
न परब्रह्मरूपत्वमेतमेवेति च श्रुतेः ।।
अन्येषां म्रियमाणानां प्राणा भागत एव तु ।
देवतास्वेकतां यान्ति भागतोऽनुव्रजन्ति तम् ।
ज्ञानिनां मुच्यमानानां नैव यान्ति स्वदेवताः ।
तेनैव सह संयान्ति ततोऽनुत्क्रमणश्रुतिः' ।। इति ब्रह्मतर्के ।।

'देवाश्च ऋषयश्चैव सुभक्त्या कामिनोऽपि तु ।
मुच्यन्ते नियामादेव पश्यन्ति च हरिं न न' ।।
इति स्कान्दे ।। ४० ।। २६ ।।

तदवगमार्थसितासितयो-
र्गुणविगुणयोर्न हि देहभृतां सगिरः ।

अनुययुरत्र हंसकुलगीतपरम्परया ।
न तुषावरणा इव रजांसि
वान्ति वयसा सह यच्छ्रुतय-
स्त्वयि सफलं पतन्ति न पतन्ति बन्धनाः ।। ४१ ।।

परमेश्वरस्यावगमात्तदवगमा श्रीः । तया च गम्यत्वादर्थः परमस्तेन बद्धत्वात्सिता श्रीर्गुणात्मिका च ।। सगिरः वाक्पूर्वकाणीन्द्रियाणि श्रियो विष्णोश्च नानुकूल्येन ययुः । अनुययुश्च हंसकुलगीतपरम्परया ।

यथा तुषावृतानां तण्डुलानां रजस्पृष्टिर्नास्ति । एवं रजोरूपान्मनुष्यान्न यान्ति श्रुतयः । वयसा सह महता कालेनापि । अतस्त्वयि सफलं पतन्ति न पतन्ति च विधिनिषेधरूपेण बन्धनात्मिकाः ।।

'जानाति प्रकृतिर्विष्णुं ज्ञेयो विष्णुस्तु निर्गुणः ।।
तावुभौ न विजानन्ति ऋते ब्रह्मपरम्पराम्' ।। इति महोपनिषदि ।।

'अन्ये सर्वे श्रिया बद्धाः श्रीर्बद्धा विष्णुनैव तु ।
बन्धश्च विष्णुतन्त्रत्वं मुक्तानां च श्रियस्तथा ।।
अमुक्तानां तु बद्धत्वं जन्ममृत्यादिदुःखिता ।।
हेयो बन्धश्च सैव स्यान्न तु स्वोच्चवशे स्थितिः ।।
गुणात्मिका च सा देवी निर्गुणः (विगुणः) पुरुषोत्तमः ।
सैव विष्णुं विजानाति ज्ञेयो ज्ञाता च केशवः ।
न तावन्ये विजानन्ति विना हंसपरम्पराम् ।
तथाऽपि नैव जानन्ति मानुषा असुरास्तथा ।
निष्फलैवासुरे तस्माच्छ्रुतिर्बन्धाय केवला ।।

निषेधविध्युत्क्रमणात्तमस्येव विनिक्षिपेत् ।
निष्फला सफला चैव मानुषाणान्तु मध्यतः ।
सफलैव तु देवानां नियतं मुक्तिदायिनी' ।।

श्रीगरुड उवाच–

के हंसाः कः परो हंसः के च पारावताः गणाः ।
के च तित्तिरयस्तत्र के शुकाः के च वायसाः ।।

श्रीभगवानुवाच–

परो हंसोऽहमेवैको हंसाः ब्रह्माण एव तु ।
पारावता देवतास्तु मुनयस्तित्तिराः स्मृताः ।
मानुषास्तु शुकाः प्रोक्ताः आसुराश्चैव वायसाः ।
प्राप्यं प्राप्तं यतो नित्यं पूर्णं सर्वोत्तमं मया ।
अतः परमहंसोऽहं मदनन्तरमेव तु ।
यतः प्राप्तमिवाशेषं सर्वजीवोत्तमं शुभम् ।
अतो ब्रह्मपदे योग्याः जीवाः हंसाः प्रकीर्तिताः ।
तेषां परम्पराप्राप्तं यैर्ज्ञानं नियमेन तु ।
ते मुच्यन्ते नैव चान्ये गुरुर्ब्रह्मा यतो नृणाम् ।
दैवतं त्वहमेवैको मामवित्त्वा न मुच्यते ।
परं प्रति यतो नीचाः ब्रह्माणः सर्वदेवताः ।
पारावतास्ततः प्रोक्ताः तैस्तीर्णा संसृतिर्यतः ।
तित्तिरा मुनयस्तस्मात्कासुखत्वात्तु मानुषाः ।
शुका इति समुदिष्टा वयोमात्रसुखत्वतः ।
वयसोऽन्ते तु दुःखित्वादसुराः वायसाः स्मृताः ।

एवं पञ्चविधा जीवा षष्ठोऽहं परमेश्वरः ।
न मत्समोऽधिको वापि कश्चिदस्ति द्विजोत्तम' ॥
इति गारुडे ॥ ४१ ॥ २७ ॥

इत्यशेषसमाम्नायपुराणोपनिषद्रसः ।
समुद्धृतः पूर्वजैस्तैर्व्योमायनमहात्मभिः ॥ ४३ ॥

व्योमायनमहात्मभिः ब्रह्माश्रयेषूत्तमैः ॥ ४३ ॥

एवं स गुरुणाऽऽदिष्टो गृहीत्वा श्रद्धयाऽऽत्मवान् ।
पूर्णः सद्यस्ततो राजन् प्राह वीरव्रतो गुरुम् ॥ ४५ ॥

नारद उवाच–

नमस्तस्मै भगवते कृष्णायामलमूर्तये ।
यो धाता सर्वभूतानामभयो यस्य ते कलाः ॥ ४६ ॥

श्रीशुक उवाच–

इत्याद्यमृषिमामन्त्र्य तच्छिष्यांश्चामलात्मकान् ।
ततोऽगादाश्रमं साक्षात् पितुर्द्वैपायनस्य मे ॥ ४७ ॥

सभाजितो भगवता कृतासनपरिग्रहः ।
तस्मै तद् वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४८ ॥

'कथाः कथयतीशस्य व्यासस्यान्ते स नारदः ।
स्तुत्यर्थं तस्य देवस्य ज्ञापनाय न तु क्वचित् ।
पूर्णज्ञानामृतस्यास्य न तु ज्ञप्तिः पराद्भवेत् ।

ऋषिरूपी यतो विष्णुः स्वयमेव जनैः श्रुतः' ।।
इति ब्राह्मे ।। ४५-४८ ।।

यो ह्यात्मा जगदादिमध्यनिधनो योऽव्यक्तजीवेश्वरो
यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे पुनः संहिताम् ।
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ।। ५० ।।

**ऋषिणा** ऋषिरूपेण ।। ५० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये दशमस्कन्धे षण्णवतितमोऽध्यायः ।।

## ।। दशमः स्कन्धः समाप्तः ।।



# एकादशस्कन्धः

## द्वितीयोऽध्यायः

भूतानां देवचरितं दुःखाय च सुखाय च ।
सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ।। ५ ।।

वसुदेव उवाच–

भजन्ति ये यथा देवान् देवा अपि तथैव तान् ।
छायेव कर्मसचिवाः साधवो दीनवत्सलाः ।। ६ ।।

'आत्मनो भजने बुद्धिमुत्पाद्य फलदाः सुराः ।
उत्तमानां जनानां तु निकृष्टानां विपर्ययः ।
शुभाशुभफलानां तु कर्मणां विबुधाः सदा ।
प्रवर्तका यथायोग्यमृषयः करुणाः सदा ।
सुखमिच्छन्ति भूतानां प्रायो दुःखासहा नृणाम् ।
तथापि तेभ्यः प्रवरा देवा एव हरेः प्रियाः' ।

इत्युद्दामसंहितायाम् ।। ५-६ ।।

अविद्यमानोऽप्यवभाति हि द्वयो
ध्यातुर्धिया स्वप्नमनोरथौ यथा ।
तत्कर्म सङ्कल्पविकल्पकं मनो
बुधो निदध्यादभयं ततः स्यात् ।। ३८ ।।

'आत्मनो देहगेहादि द्वयशब्देन भण्यते ।
अविद्यमानं जीवस्य प्रतिभाति तदीयवत् ।

जाग्रद्वत्तु यथा स्वप्नः प्रतिभाति मनोरथः ।
विद्यमानवदेवैतद्देहादीशवशे स्थितम् ।
विभाति स्ववशत्वेन सैषा संसृतिरुच्यते ।
तस्मात्तद्विषयं त्यक्त्वा मनो विष्णौ निवेशयेत्' ।।
इति हरिवंशेषु ।। ३८ ।।

एवंव्रतश्च प्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गाय-
त्युन्मादवन्नृत्यति लोकबाह्यः ।। ४० ।।

खं वायुमग्निं सलिलं महीं च
ज्योतींषि सत्वानि दिशो द्रुमादीन् ।
सरित् समुद्रांश्च हरेः शरीरं
यत् किञ्च भूतं प्रणमेदनन्यम् ।। ४१ ।।

'केचिदुन्मादवद्भक्ता बाह्यलिङ्गप्रदर्शकाः ।
केचिदान्तरभक्ताः स्युः केचिच्चैवोभयात्मकाः ।
मुखप्रसादाद्दार्ढ्याच्च भक्तिर्ज्ञेया न चान्यतः' ।। इति वाराहे ।।

'सर्वं हरेर्वशत्वेन शरीरं तस्य भण्यते ।
अनन्याधिपतित्वाच्च तदनन्यमुदीर्यते ।
न चाप्यभेदो जगता विष्णोः पूर्णगुणस्य तु' ।।
इति हरिवंशेषु ।। ४०,४१ ।।

हरिरुवाच–

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्नेष भागवतोत्तमः ।। ४५ ।।

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ।। ४६ ।।

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ।। ४७ ।।

'पूर्णत्वादात्मशब्दोक्तः कश्चित्सर्वनरोत्तमः ।
स च नारायणो नान्यः स च सर्वेषु संस्थितः ।
तद्वशा इतरे सर्वे श्रीब्रह्मेशपुरःसराः ।
स एव तु स्वभक्तेषु स्थित्वाऽनुग्रहकारकः ।
अज्ञेष्वज्ञानयन्ता च द्विषत्सु द्वेषकारकः ।
तत्प्रेरितास्तदन्ये तु प्रियद्वेषादिकारिणः ।
अतस्तत्प्रेरणादेव प्रेमाद्या मम जज्ञिरे ।
इति पश्यति यो बुध्या स तु भागवतोत्तमः ।
सर्वाधिकं पृथग्विष्णुं क्षीरसागरवासिनम् ।
ज्ञात्वा तत्र प्रेमयुक्तस्तद्भक्तेषु च मैत्रयुक् ।
कृपावांश्च तदज्ञेषु तद्द्वेषीणामुपेक्षकः ।
तद्वशत्वं न जानाति सर्वस्य जगतोऽपि तु ।
तमाहुर्मध्यमं भक्तमर्चायामेव संस्थितम् ।
विष्णुं ज्ञात्वा तदन्यत्र नैव जानाति यः पुमान् ।
तारतम्यं च तद्भक्तेर्न जानाति कथञ्चन ।

अवजानंश्च तद्भक्तानात्मनो भक्तिदर्पितः ।
उपेक्षकोऽपि वा तेषु न स्मरेदथवापि तान् ।
मानुषेषु यथा कश्चित्किञ्चिदुच्चः प्रदृश्यते ।
एवमेवोच्चतां विष्णोरल्पां पश्यति चान्यतः ।
ते तु भक्ताधमाः प्रोक्ताः स्वर्गादिफलभागिनः ।
तैर्विध्निता अधो यान्ति तद्भक्तानामुपेक्षकाः ।
कुर्युर्विष्णावपि द्वेषं देवा देवावमानिनः ।
पूजिता विष्णुभक्तिं च नावज्ञेयास्ततः सुराः ।
उपेक्षकेषु देवानां भक्तिनाशं स्वयं हरिः ।
करोति तेन विभ्रष्टाः संसरन्ति पुनःपुनः ।
अधो वा यान्ति विद्वेषात्पूज्या देवास्ततः सदा ।
यस्तान्द्वेष्टि स तं द्वेष्टि यस्ताननु स चानु तम् ।
ऐकात्म्यमागतं विद्धि देवैस्तद्भक्तिपूरितैः ।
उपेक्षकस्तु देवानां यदैव निरयोपगः ।
तदा तु किमु वक्तव्यमुपेक्षायां जनार्दने ।
विष्णोरुपेक्षकं सर्वे विद्विषन्त्यधिकं सुराः ।
पतत्यवश्यं तमसि हरिणा तैश्च पातितः ।
भुङ्क्ते स्वर्गफलं नित्यं निरयं नैव गच्छति ।
विष्णोस्तु मध्यमो भक्तो जायते मानुषेषु च ।
अस्मरन्देवता यस्तु भजते पुरुषोत्तमम् ।
योग्यः संस्मरते देवानयोग्यो द्वेष्टि केशवम् ।
यस्तूत्तमो भागवतः स मुक्तिं परमां व्रजेत् ।
विष्णुना सर्वदेवैश्च मोदते स हि नित्यदा' । इति च ।।४५-४७।।

गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति ।
विष्णोर्मायामिमां पश्यन् स वै भागवतोत्तमः ।। ४८ ।।

**विष्णोर्मायां** विष्ण्विच्छाधीनाम् ।

'विष्णोरिच्छानुसार्यैतज्ज्ञात्वा योग्यान्न चाधिकम् ।
हृष्यति द्वेष्टि वा यस्तु स वै भागवतोत्तमः' ।। इति ।।

'सतां वृद्धिकरो धर्मस्त्वसतां ह्रासकारकः ।
अयं तु निश्चितो धर्मो ह्यधर्मोऽन्यो विनिश्चितः ।
हर्षः सत्सु तथाऽसत्सु धर्मो धर्मविपर्ययः ।
तेषां वृद्धौ तथा हानौ सर्वं ज्ञेयमशेषतः ।
एतदर्थं च धर्माणां मर्यादा वैदिकादिका ।
मूलधर्मविरुद्धा तु सा न ग्राह्या कथञ्चन' ।। इति च ।। ४८ ।।

देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ।
संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ।। ४९ ।।

'देहेन्द्रियप्राणधियां त्रिधैव त्वभिमानिनः ।
तत्रोत्तमा देवतास्ताः सर्वदोषविवर्जिताः ।
गुणैः सर्वैः सुसम्पन्ना विरिञ्चादोत्तरोत्तरम् ।
मध्यमा गुणदोषेता असुरा अवमा मताः ।
ते सर्वे दोषसंयुक्ता आचित्तादुत्तरोत्तरम् ।
तेभ्योऽन्यो मानुषो जीवस्ताभ्यां देवासुरावपि ।
जीवाभिमानिनश्चैव त्रिविधाः सम्प्रकीर्तिताः ।
जीवमान्युत्तमो ब्रह्मा मध्यमः स्वयमेव तु ।
अधमः कलिरुद्दिष्टस्तत्र मध्यमनीचयोः ।

मृतिजन्मक्षुधादुःखप्रभृत्यखिलमेव तु ।
नोत्तमस्य तु जीवस्य देहादेश्च कथञ्चन ।
जन्मादिकृतदुःखं तु देहमान्यसुरस्य ह ।
सुप्त्याद्यप्ययजं दुःखमसुरेन्द्रियमानिनः ।
क्षुन्निमित्तं तु यद्दुःखं प्राणमान्यसुरस्य तत् ।
भयतर्षादिजं दुःखं मनोमान्यसुरस्य च ।
केवलं त्वान्तरं दुःखं बुद्धिमान्यसुरस्य तत् ।
नीचोऽस्मीति तु यद्दुःखमहंमान्यसुरस्य तत् ।
अतीतादिस्मृतेर्दुःखं चित्तमान्यसुरस्य च ।
जीवमान्यसुरस्य स्यात्सर्वं तत्समुदायतः ।
एवमेव सुखं देवेषूभयं मध्यमेषु च ।
असुराणामधर्मस्य वृध्या सुखमपीष्यते ।
देवानां नैव केनापि दुःखं प्रीतिस्तु धर्मतः ।
अधर्मोऽपि प्रीतये स्यादसुराणामधोगतेः ।
देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ।
तेषां दुःखादिकं किञ्चिदसुरावेशतो भवेत् ।
प्राणस्य नासुरावेश आखणाश्मसमो हि सः ।
सम्पूर्णानुग्रहाद्विष्णोः प्राणः पूर्णगुणो मतः ।
असुराणां सुखाद्याश्च देवावेशादुदीरिताः ।
स्वतस्तु निर्गुणाः सर्वे सर्वदोषात्मका मताः ।
विविच्यैवं जगत्सर्वं स्वात्मानं च पृथक्स्थितम् ।
सर्वतश्च पृथक्सन्तं विष्णुं सर्वोत्तमोत्तमम् ।
जानन्ति ये भागवतास्त उक्ता उत्तमा इति' ।। इति ब्रह्मतर्के ।।

देहेन्द्रिययोर्जन्माप्ययौ ।। ४९ ।।

न यस्य स्वः पर इति चित्ते स्वात्मनि वाऽभिदा ।
सर्वभूतसमः शान्तः स वै भागवतोत्तमः ।। ५२ ।।

चित्ते विद्यमाने । स्वात्मनि केवलात्मभावे मोक्षे च । यस्य जीवपरयोर-भेदो नास्ति ।

'न क्वापि जीवं विष्णुत्वे संसृतौ मोक्ष एव च ।
यः पश्यति सुरादींश्च यथोत्कर्षं प्रपश्यति ।
स सर्वभूतसमदृग्विष्णुं सर्वोत्तमं स्मरन्' ।। इति हरिवंशेषु ।।

'नैवं त्वयाऽनुमन्तव्यं दृष्टो जीवो मयेति ह ।
सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि' ।। इति च मोक्षधर्मेषु ।।

'नैवं त्वयाऽनुमन्तव्यं जीवात्माहमिति क्वचित् ।
सर्वैर्गुणैः सुसम्पन्नं देवं मां ज्ञातुमर्हसि' ।। इति च वाराहे ।।५२।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे द्वितीयोऽध्यायः ।।



## तृतीयोऽध्यायः

अन्तरिक्ष उवाच–

एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ।
ससर्जोच्चावचान्यादौ स्वयमात्मप्रसिद्धये ।। ३ ।।

**आत्मप्रसिद्धये** भूतानां भगवज्ज्ञानार्थम् ।। ३ ।।

एवं सृष्ट्वा स भूतानि स्थविष्ठैः पञ्चधातुभिः ।
एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान् ।। ४ ।।

गुणैर्गुणान् स भुञ्जान आत्मप्रद्योतितैः प्रभुः ।
मन्यमान इदं सृष्टमात्मानमिह सज्जते ।। ५ ।।

कर्माणि कर्मभिः कुर्वन् सनिमित्तानि देहभृत् ।
तत्तत्कर्मफलं गृह्णन् भ्रमतीह सुखेतरम् ।। ६ ।।

एवं गुणान्भुञ्जानो भगवान् । तं सृष्टं मन्यमानो जीव इह सज्जते ।

'शरीरे दोषहानेन गुणभोक्तारमीश्वरम् ।
शरीरस्थतया जीवं मन्यमानः पतत्यधः ।
तत्सृष्टा हि सदा जीवा देहादेर्जनिमत्त्वतः ।
नित्यानन्दैकदेहोऽसौ विष्णुस्तत्कैकताऽनयोः' ।। इति च ।।४-६।।

इत्थं कर्मगतीर्गच्छन् बह्वभद्रावहः पुमान् ।
आभूतसंप्लवात् स्वर्गप्रलयावश्नुतेऽवशः ।। ७ ।।

धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ।
अनादिनिधनः कालो ह्यव्यक्ताय विकर्षति ।। ८ ।।

'आभूतसम्प्लवाज्जन्म जीवेशत्वं विजानतः ।
ततः पतत्यधो यस्मादुत्थानं नैव तु क्वचित्' ।। इति च ।

'कालाख्यः कलनाद्विष्णुर्व्यक्तमव्यक्तगं नयन्' । इति च ।। ८ ।।

ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ।
अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानलः ।। १२ ।।

वारिणा हृतगन्धा भूः सलिलत्वाय कल्पते ।
सलिलं तद् हृतरसं ज्योतिष्ट्वायोपकल्पते ।। १३ ।।

हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ।
हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ।। १४ ।।

अव्यक्तं विशतीत्युक्त्वा तस्य विस्तारो वारिणा हृतगन्धेत्यादि ।

'सङ्क्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः ।
बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात्' ।। इति शब्दनिर्णये ।।

कालात्मना हृतगुणं नभ आत्मनि लीयते ।
इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ।। १५ ।।

प्रविशन्ति ह्यहंकारं स्वगुणैरहमात्मनि ।। १६ ।।

नभ आत्मनि लीयत इत्युक्त्वेन्द्रियाणीत्याद्यपि विस्ताराय ।। आत्मनि बुद्धौ ।। १५,१६ ।।

एषा माया भगवतः सर्गस्थित्यन्तकारिणी ।
त्रिवर्णा वर्णिताऽस्माभिः किं भूयः श्रोतुमिच्छसि ।। १७ ।।

राजोवाच–

यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ।
तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ।। १८ ।।

'त्रिवर्णा वरणादुक्ता त्रिगुणानां हरेर्मतिः ।
गुणात्मकत्वात्प्रकृतिस्त्रिवर्णेति प्रकीर्त्यते ।
तत्र तु प्रकृतिस्तार्या तारिका तु हरेर्मतिः ।
उभयं विष्णुमायोक्तं ज्ञातव्यमुभयं तथा' ।। इति च ।।

'बहूनां सहनिर्देश एकयाऽभिधयैव तु ।
तयैवाभिधया तेषां परामृश्यैकमुच्यते ।
तामेतामान्तरीं रीतिं विदुः शब्दविदो जनाः' ।।
इति च ।। १७,१८ ।।

प्रबुद्ध उवाच–

कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्यासं मिथुनीचारिणां नृणाम् ।। १९ ।।

नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ।। २० ।।

एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
अतुल्यातिशयध्वंसाद् यथा मण्डलवर्तिनाम् ।। २१ ।।

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शा(श)ब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ।। २२ ।।

तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः ।
अमाययाऽनुवृत्त्या च तुष्येदात्माऽऽत्मदो हरिः ।। २३ ।।

**मण्डलवर्तिनः** युद्धरङ्गस्थाः ।।

'देवाः सजाया मुच्यन्ते मानुषा उभयात्मकाः ।
विजाया एव योगेशास्तेषां या यैव योग्यता ।
तथा तथैव मुच्यन्ते नान्यथा तु कथञ्चन' ।। इति संदृश्ये ।।१९-२३।।

सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।
दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ।। २४ ।।

'सन्तस्तु त्रिविधाः प्रोक्ता उत्तमा मध्यमाधमाः ।
उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः ।
अधमा मानुषोत्कृष्टास्ते चापि त्रिविधा मताः ।
तत्राधमेषु येषां तु सङ्गो विघ्नाय वै भवेत् ।
तेषामुत्तमसङ्गस्य तेषां सङ्गं परित्यजेत् ।
आदौ तु तेषामपि च सङ्ग उत्तमसङ्गतेः ।
साधनत्वान्नतु त्याज्यो यदि त्यक्तुं न शक्यते ।
तदा तेऽपि तथा नेया यथा विघ्नो न वै भवेत् ।।
तदुच्चसङ्गतेः क्वापि तदा दोषो न जायते ।
प्रयोजनाय तेषां तु सङ्गः सर्वात्मनेष्यते ।
सर्वथा चैव देवेषु सङ्गो मुनिगणेषु च ।
भाव्यो हि तं विना नैव पुरुषार्थः क्वचिद्भवेत् ।
विशेषतः स्वोत्तमेषु विना सङ्गं न मुच्यते ।
स्वनीचेषु तु देवेषु विना सङ्गं न पूर्यते ।
तस्मात्सत्सूत्तमेष्वेषु सङ्गः कार्यो विशेषतः ।
अनाद्यनन्तकालेषु न च हाप्यः कथञ्चन ।
सतां तदुत्तमेशेशे किमु विष्णौ परात्परे' ।। इति गारुडे ।।

'बह्वपेक्षो हि जिज्ञासुरतो देहादिवृत्तये ।
किञ्चित्सत्स्वपि सङ्गी स्यादशक्ये सति वर्तने ।
कृतकृत्यस्त्यजेत्सङ्गं सदा गुरुसुरादिषु ।
सङ्गी स्यान्न हि तत्सङ्गं विना तु सुखभाग्भवेत् ।
तस्मादनाद्यनन्तैव सक्तिर्गुरुसुरादिषु ।
अन्यत्र कृत्यापेक्षा स्यादिति सङ्गविनिर्णयः' ।।

इति भविष्यत्पर्वणि ।। २४ ।।

श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।
मनोवाक्काय(वाक्कर्म)दण्डं च सत्यं शमदमावपि ।। २७ ।।

'श्रद्धा भागवते तन्त्रे वेदे भारतपञ्चमे ।
विष्णोरव्यवधानेन वक्तृत्वात्सर्वथा भवेत् ।
कलाविद्यास्वनिन्दा च व्यवधानेन केशवे ।
प्रवेशाद्यतिभिः कार्या ह्यन्यथा नरकं व्रजेत् ।
श्रद्धात्वास्तिक्यबुद्धिः स्यात्सा चैव द्विविधा मता ।
अत्रोक्तमस्तीत्येकाऽत्र ममात्रास्ति प्रयोजनम् ।
इत्यन्या तत्र पूर्वा तु यतेः कार्या कलास्वपि ।
द्वितीया न तु कर्तव्या पञ्चरात्रविरोधिषु ।
सदैव निन्दा सर्वैश्च ब्रह्मादिस्थावरान्तकैः ।
सम्यक्कार्या तद्विना च तमो यान्ति विनिश्चयात् ।
कुर्वन्त्येव सुरास्तत्र तदन्येषां तमो भवेत् ।
पञ्चरात्रं च वेदाश्च मूलरामायणं तथा ।
पुराणं भागवतं चैव भारतं च न भिद्यते ।
एतेष्वपि यथा विष्णोराधिक्यप्रतिपादनम् ।

तद्भक्तानां च क्रमशः स एवार्थो न चापरः ।
अन्यथा दृश्यमानं तु मोहायैव विनिर्दिशेत् ।
तस्मात्सर्वेषु शास्त्रेषु विष्णोराधिक्यमेव तु ।
क्रमेण च तदीयानां प्रतिपाद्यं न चापरम्' ।। इति ब्रह्माण्डे ।

'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः' ।। इति च ।

'गृहिणोऽप्यल्पबोधस्य न कलासु प्रयोजनम् ।
आवर्तयेद्वेदतन्त्रं मुख्योक्तो हरिरत्र हि' ।। इति हरिवंशेषु ।।२७।।

एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्यां चोभयत्र महत्सु नृषु साधुषु ।। ३० ।।

कृष्णात्मनाथेषु मनुष्येष्वपि सौहृदं किमु देवेषु महत्सु देवादिषु ।।३०।।

पिप्पलायन उवाच–

स्थित्युद्भवप्रलयहेतुरहेतुरस्य
यः स्वप्नजागरसुषुप्तिषु सन् बहिश्च ।
देहेन्द्रियासुहृदयानि चरन्ति येन
सञ्जीवितानि तदवैहि परं नरेन्द्र ।। ३६ ।।

अहेतुः स्वस्य हेतुरन्यो नास्ति । बहिः प्रलये मुक्तौ च ।। ३६ ।।

नैनं मनो विशति वागुत चक्षुरात्मा
प्राणेन्द्रियाणि च यथाऽनलमर्चिषः स्वाः ।
शब्दोऽप्यबोधकनिषेधतयाऽऽत्ममूल-
मर्थोक्तमाह यदृते न निषेध्यसिद्धिः ।। ३७ ।।

'ब्रह्माद्या यं न जानन्ति करणाद्यभिमानिनः ।
जानन्त्यनुग्रहाच्चास्य प्रधानाग्निं यथाऽर्चिषः ।
अग्निपुत्रा नमस्तस्मै यमाह श्रीश्च न स्फुटम् ।
वेदरूपा परं देवं वैलक्षण्यात्समस्तशः (तः) ।
आनन्दो नेदृशानन्द इत्युक्ते लोकतः परम् ।
प्रतिभाति न चाऽभाति यथावद्दर्शनं विना' ।। इति ब्रह्मतर्के ।

बोधकः परमेश्वरः । ईदृशानन्दो न भवतीति निषेधवचनार्थ एव न सिध्यति विलक्षणानन्दाभाव इत्यर्थतः सिद्धिः ।। ३७ ।।

सत्त्वं रजस्तम इति त्रिवृदेकमादौ
सूत्रं महानहमिति प्रवदन्ति जीवम् ।
ज्ञानक्रियार्थफलरूपतयोरुशक्ति
ब्रह्मैव भाति सदसच्च तयोः परं यत् ।। ३८ ।।

'त्रिगुणात्मकं प्रधानं च रजः सत्वं तमस्तथा ।
प्राणो महानहङ्कारो जीवास्तदभिमानिनः ।
ज्ञानात्मकानीन्द्रियाणि तथा कर्मात्मकानि च ।
शब्दाद्यर्थाः सुखं दुःखमिति प्रोक्तं द्विधा फलम् ।
एतत्सर्वं हरे रूपमित्याहुर्ज्ञानदुर्बलाः ।
स एव बहुशक्तित्वाद्भाति चैषां तथा तथा ।
एवं कारणकार्याख्यं समस्तं हरिमेव तु ।
केचित्पश्यन्ति च व्यस्तं केचिदाहुरपण्डिताः ।
एवं कारणकार्येभ्यः परमानन्दरूपिणम् ।
अज्ञानाद्बहुधा प्राहुरेकं सन्तं सुदुर्जनाः ।

रूप्यत्वात्तद्वशत्वाच्च तद्रूपं चैतदीर्यते ।
न तु तस्य स्वरूपत्वान्निर्दोषानन्दरूपिणः ।
कथं जडाजडैक्यं स्यात्कुतः पूर्णाल्पमोदयोः ।
पूर्णाल्पज्ञानयोश्चैव पूर्णशक्त्यल्पशक्तयोः ।
निर्दुःखदुःखान्वितयोः स्वतन्त्रपरतन्त्रयोः ।
अतः सर्वगुणैर्युक्तं सर्वदोषविवर्जितम् ।
अन्याभेदेन विज्ञाय तम एव प्रपद्यते ।
निष्कृष्टं सर्वतो विष्णुं सर्वतश्च विलक्षणम् ।
ज्ञात्वा पूर्णगुणं यान्ति मुक्तिं नास्त्यत्र संशयः' ।। इति तन्त्रभागवते ।।

'अहं हि जीवसञ्ज्ञो वै मयि जीवः सनातनः ।
मैवं त्वयाऽनुमन्तव्यं दृष्टो जीवो मयेति ह ।
अहं श्रेयो विधास्यामि यथाधीकारमीश्वरः' इति मोक्षधर्मेषु ।।३८।।

नासौ जजान न मरिष्यति नैधतेऽसौ
न क्षीयते स च न विध्यति चारिणा हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं
प्राणो यथेन्द्रियबलेन विकल्पितं सत् ।। ३९ ।।

'यथेन्द्रियगतः प्राणस्तेषां शक्त्या विकल्प्यते ।
दृष्टिदः श्रुतिदश्चेति मतिदो ज्ञानदस्तथा ।
इत्यादिभेदतो वाच्य एक एव महाबलः ।
दृष्ट्यादिशक्तिस्तस्यैव ततो नान्यस्य कस्यचित् ।
एवं सद्रूपकं ब्रह्म तत्तच्छक्त्या विकल्प्यते ।
एकमेव महाशक्ति प्राणस्यापि बलप्रदम्' ।। इति हरिवंशेषु ।।३९।।

अण्डेषु पेशिषु तरुष्ववनिस्थितेषु
प्राणेन जीव उपधावति तत्र तत्र ।
छन्ने मतीन्द्रियगुणे(गणे)ऽहमि च प्रसुप्ते
कूटस्थ आस यमृते तदनुस्मृतिर्न ॥ ४० ॥

'पेशो जरायुरुद्दिष्टः सुवर्णं पेश उच्यते ।
मृदुपिण्डश्च पेशं स्यात्कचिद्धद्रमपीष्यते' ॥ इत्यभिधानम् ।

अवनिस्थितेषु स्वेदजेषु । भूस्वेदेन हि प्रायो जायन्ते । तदा कूटस्थे परमात्मन्यास जीवः । यं परमात्मानमृते सुप्त्यनुस्मृतिरेव न ।

'देहाद्देहान्तरगतौ प्रविशेत्प्राणमेव तु ।
जीवः प्राणः परात्मानमेवं सुप्तावपि स्फुटम् ।
तदन्या देवताः सर्वाः प्राणस्यैव वशे स्थिताः ।

ईषच्च सुप्तवद्यान्ति नैव मानुषजीववत् ॥
स्वर्गस्थानां न तु स्वापः प्रायो देहेऽपि नाज्ञता ।
मृतिसुप्तिप्रबोधादेर्नियन्ता हरिरेकराट् ।
तमृते नैव चावस्था नावस्थावान्न च स्मृतिः ।
ततस्तु देवदेवेशः प्राणः प्राणेश्वरो हरिः ।
न हरेरीशिता त्वन्यः स हि सर्वाधिको मतः' ॥

इति हरिवंशेषु ॥ ४० ॥

राजोवाच–

एवं प्रश्नमृषीन् पूर्वमपृच्छं पितुरन्तिके ।
नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४३ ॥

आविर्होत्र उवाच–

कर्माकर्मविकर्मेति वेदवादो न लौकिकः ।
वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरयः ।। ४४ ।।

'जानन्तोऽपि हि दुर्ज्ञेयः प्रश्नोऽयं ज्ञानिनामपि ।
इति वेदयितुं ब्रह्मपुत्रा नोचुर्निमेः पुरा' ।। इति तन्त्रभागवते ।।

ईश्वरात्मत्वात् ईश्वरविषयत्वात् ।। ४४ ।।

नाऽऽचरेद् यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ।। ४६ ।।

वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्थं फलश्रुतिः ।। ४७ ।।

अज्ञः सन्नाचरन् ना । विकर्मणा मृत्योर्मृत्युमुपैति । स एवेश्वरार्पितं कुर्वाणः सिद्धिं लभते ।

'अज्ञात्वा कुर्वतः कर्म स्खलनात्पापकारणम् ।
तदेवार्पयतो विष्णोर्नैव पापाय तद्भवेत् ।
मनोदोषविहीनस्य न तु दोषवतः क्वचित् ।
सत्सु केशवपूर्वेषु क्रमशो भक्तिहीनता ।
असद्भक्तिस्तथा स्नेहो बहुमानमथापि वा ।
स्वोत्तमानां प्रियत्यागादात्मप्रियचिकी(र्षुता)र्षया ।
अधिकेष्वेव नीचोच्चभक्तिव्यत्यास एव वा ।
स्वोत्तमस्यात्मनश्चैव समस्नेहोऽथवा भवेत् ।
कार्येषु बहुमाने (नो) वा स्वात्मनः समतापि वा ।

आधिक्ये किमु वक्तव्यमात्मनः शक्तिहापनम् ।
शक्तस्याशक्तवत्कर्म मनोदोषा इतीरिताः' ।। इति कर्मतन्त्रे ।।४६।।

लब्ध्वा चाव्यग्रमाचार्यं तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मनः ।। ४९ ।।

अव्यग्रत्वेनाचार्यं लब्ध्वा ।

'परीक्ष्यैव गुरुः शिष्यं शिष्योऽपि गुरुमाव्रजेत् ।
अन्यथा नरकायैव प्रायश्चित्तं गुरोस्तथेऽति च ।। ४९ ।।

अर्चादौ हृदये वापि यथालब्धोपचारकैः ।
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ।। ५१ ।।

'द्रव्यलिङ्गं शिलाद्यं स्यादात्मलिङ्गं मनोमयम् ।
अथवा स्थण्डिलं चैव विष्णोर्लिङ्गं प्रकीर्तितम्' ।। इति च ।।५१।।

आत्मानं तन्मयं ध्यायन् मूर्तिं सम्पूजयेद् हरेः ।
शेषमाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ।। ५५ ।।

**तन्मयं** तत्प्रधानम् ।

'विष्णोर्भृत्योऽहमित्येव सदा स्याद्भगवन्मयः ।
नैवाहं विष्णुरस्मीति विष्णुः सर्वेश्वरो ह्यजः' इति च ।। ५५ ।।

एवमग्न्यर्कतोयादावर्चयेद् हृदये च यः ।
यज्ञेश्वरं स्वमात्मानमचिरान्मुच्यते हि सः ।। ५६ ।।

'स्वादानात्स्वात्मनो व्याप्त्या विष्णुः स्वात्मेति कथ्यते ।
न तु जीवस्वरूपत्वात्स हि जीवेश्वरः प्रभुः' ।।
इति शब्दनिर्णये ।। ५६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे तृतीयोऽध्यायः ।।



## चतुर्थोऽध्यायः

भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।
स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ।।३।।

'विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाण्यतो विदुः ।
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ।
तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यते' ।। इति माहात्म्ये ।।३।।

यत्काय एष भुवनत्रयसन्निवेशो
यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।
ज्ञानांशकेन विशतो बलमोज ईहा
सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ।। ४ ।।

यत्काये ।। ४ ।।

आदावभूच्छतधृती रजसाऽस्य सर्गे
विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ।

आधिक्ये किमु वक्तव्यमात्मनः शक्तिहापनम् ।
शक्तस्याशक्तवत्कर्म मनोदोषा इतीरिताः' ।। इति कर्मतन्त्रे ।।४६।।

लब्ध्वा चाव्यग्रमाचार्यं तेन सन्दर्शितागमः ।
महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मनः ।। ४९ ।।

अव्यग्रत्वेनाचार्यं लब्ध्वा ।

'परीक्ष्यैव गुरुः शिष्यं शिष्योऽपि गुरुमाव्रजेत् ।
अन्यथा नरकायैव प्रायश्चित्तं गुरोस्तथेऽति च ।। ४९ ।।

अर्चादौ हृदये वापि यथालब्धोपचारकैः ।
द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ।। ५१ ।।

'द्रव्यलिङ्गं शिलाद्यं स्यादात्मलिङ्गं मनोमयम् ।
अथवा स्थण्डिलं चैव विष्णोर्लिङ्गं प्रकीर्तितम्' ।। इति च ।।५१।।

आत्मानं तन्मयं ध्यायन् मूर्तिं सम्पूजयेद् हरेः ।
शेषमाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ।। ५५ ।।

तन्मयं तत्प्रधानम् ।

'विष्णोर्भृत्योऽहमित्येव सदा स्याद्भगवन्मयः ।
नैवाहं विष्णुरस्मीति विष्णुः सर्वेश्वरो ह्यजः' इति च ।। ५५ ।।

एवमग्न्यर्कतोयादावर्चयेद् हृदये च यः ।
यज्ञेश्वरं स्वमात्मानमचिरान्मुच्यते हि सः ।। ५६ ।।

'स्वादानात्स्वात्मनो व्यास्या विष्णुः स्वात्मेति कथ्यते ।
न तु जीवस्वरूपत्वात्स हि जीवेश्वरः प्रभुः' ॥
इति शब्दनिर्णये ॥ ५६ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे तृतीयोऽध्यायः ॥



## चतुर्थोऽध्यायः

भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ।
स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥३॥

'विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाण्यतो विदुः ।
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ।
तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यते' ॥ इति माहात्म्ये ॥३॥

यत्काय एष भुवनत्रयसन्निवेशो
यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ।
ज्ञानांशकेन विशतो बलमोज ईहा
सत्त्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥ ४ ॥

यत्काये ॥ ४ ॥

आदावभूच्छतधृती रजसाऽस्य सर्गे
विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ।

रुद्रोऽप्ययाय तमसा पुरुषः स आद्य
इत्युद्भवस्थितिलयाः सततं प्रजासु ।। ५ ।।

'ब्रह्मणिस्थोऽसृजद्विष्णुः स्थित्वा रुद्रे त्वभक्षयत् ।
पृथक्स्थित्वा जगत्पाति तद्ब्रह्माद्याह्वयो हरिः' ।। इति ब्राह्मे ।।

रजसा तमसा च ब्रह्मरुद्रदेहसृष्टेः । रागक्रोधकारणत्वाच्च ।। ५ ।।

धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्या
नारायणो नर इति स्वतपःप्रभावः ।
नैष्कर्म्यलक्षणमुवाच चचार योगं
योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ।। ६ ।।

स्वविषयज्ञानरूपः प्रभावरूपश्च ।। ६ ।।

इन्द्रोऽपि नाक्यसुखमेष जिघृक्षतीति
कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम् ।
गत्वाऽप्सरोगणवसन्तसुमन्दवातैः
स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ।। ७ ।।

'ज्ञानरूपानपि सुरान्विना प्राणं कचित्परे ।
आविशन्ति ह्यतस्तेषामज्ञानादि न तु स्वतः' ।। इति देवतत्त्वे ।

'अथैनमेव नाऽप्रोद्योऽयं मध्यमः प्राणः । एवमेता देवताः पाप्मना विद्धाः तं हासुरा ऋत्वा विदध्वसुर्यथाऽश्मानमाखणमृत्वा विध्वंसेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुः' ।।

'सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैनां मृत्युमत्यवहत सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्' ।। इत्यादिश्रुतिश्च ।। ७ ।।

त्वां सुन्वतां सुरकृता बहवोऽन्तरायाः
कस्तान् विलंघ्य व्रजतात् परमं पदं ते ।
नान्यस्य बर्हिषि बलिं ददतः स्वभागं
धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ।। १० ।।

स्वभागं बलिं ददतो विघ्नमूर्ध्नि यदि भवान्पदं धत्ते । तर्हि नान्यस्य बलिः ।। १० ।।

हंसस्वरूप्यवददच्युत आत्मयोगं
दत्तः कुमार ऋषभो भगवान् पिता नः ।
विष्णुः शिवाय जगतां कलयाऽवतीर्ण-
स्तेनाहृता मधुभिदा श्रुतयो हयास्ये ।। १७ ।।

'कुमारनामा तु हरिर्ब्रह्मचारिवपुः स्वयम् ।
सनत्कुमाराय परं प्रोवाच जगदीश्वरः' इति स्कान्दे ।।

'विष्णोः सनत्कुमाराख्याच्छुश्रुवुर्ज्ञानमुत्तमम् ।
सनत्कुमारप्रमुखा योगेशाः परमेश्वरात्' ।।
इति प्रकाशसंहितायाम् ।। १७ ।।

संस्तुन्वतोऽब्धिपतितांच्छ्रमणान् ऋषींश्च
शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ।
देवस्त्रियोऽसुरगृहे पिहिता अनाथा
जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ।। १९ ।।

'सुपर्णा ऋषयो व्यासं नाथमाना ययुः सदा ।
ध्वान्तं निवारयास्माकं मुमुग्धीति च वादिनः' ।। इति व्यासतन्त्रे ।।

'स्मरणात्तु नृसिंहस्य शक्रो मुक्तो बृहद्वधात् ।
हिरण्यकहताश्चापि तथैवाप्सरसां गणाः' ।। इति भयभञ्जने ।।१९।।

देवासुरे युधि स दैत्यपतीन् सुरार्थे
हत्वाऽन्तरेषु भवनान्यदधात् कलाभिः ।
भूत्वाऽथ वामन इमामहरद् बलेः क्ष्मां
याञ्चाछलेन समदाददितेः सुतेभ्यः ।। २० ।।

'उपेन्द्ररूपी भगवान्प्रतिमन्वन्तरं प्रभुः ।
असुरान् हन्ति नियतं श्राद्धदेवे च वामनः' ।। इति वामने ।।२०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे चतुर्थोऽध्यायः ।।



## पञ्चमोऽध्यायः

वदन्ति तेऽन्योन्यमुपासितश्रियो
गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणा
वृत्त्यै परं घ्नन्ति पशूनतद्विदः ।। ८ ।।

‘ये तु विष्णुमवज्ञाय श्रियमेव ह्युपासते ।
उपेक्ष्य वा हरिं ते तु भूत्वा याज्याः पतन्त्यधः’ ॥
इति प्रवृत्तिसंहितायाम् ॥ ८ ॥

लोके व्यवायामिषमद्यसेवा नित्यास्तु
जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तेषु विहाय यज्ञान्
सुराग्रहैरासुरवृत्तिरिष्टा ॥ ११ ॥

धनं हि धर्मैकफलं यतोऽस्य
ज्ञानं सविज्ञानमनुप्रशान्तिः ।
गृहेषु युञ्जन्ति कलेवरस्य
मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ १२ ॥

यद् घ्राणभक्षो विहितः सुराया-
स्तथा पशोरालभनं न हिंसा ।
एवं व्यवायः प्रजया न रत्यै
इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥

‘व्यवायामिषमद्यानि हरेः पूजार्थमेव तु ।
वामदेव्यो नाम यज्ञो व्यवायो हरिपूजनम् ।
पितृयज्ञो देवयज्ञो मांसेन हरिपूजनम् ।
व्यवाययज्ञे मद्यं तु सोमात्मकतयेष्यते ।
क्षत्रियादेर्न विप्राणां विप्रो दोषेण लिप्यते ।
अरागतः प्रवृत्तिः स्याद्रागो दोषस्य कारणम् ॥

घ्राणभक्षोऽथवा यज्ञे दैवे सर्वस्य चेष्यते ।
पैष्टमद्यस्य माध्व्यादि क्षत्रियस्य न दुष्यति ।
दैवे रत्यैव च प्रीतिर्विष्णोः पुत्रात्तु मानुषे ।
तस्माद्विहितमात्रेषु रागं मुक्त्वा यथाविधि ।
समाहितो हरिं स्मृत्वा वर्तन् याजी हरेर्भवेत्' ।। इति क्रियाविधाने ।

यज्ञान्विहाय न चोदना ।।

'यज्ञेष्वाल(भ)म्भनं प्रोक्तं देवतोद्देशतः पशोः ।
हिंसा नाम तदन्यत्र तस्मात्तां नाचरेद्बुधः ।
यतो यज्ञे मृता ऊर्ध्वं यान्ति दैवे च पैतृके ।
अतो लाभादालभनं स्वर्गस्य न तु मारणम्' ।। इति च ।।११-१३।।

द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ।
मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ।। १५ ।।

**स्वात्मानं** स्वस्मिन्नाप्तं च ।

'आप्तत्वादात्मशब्दोक्तं स्वस्मिन्नपि परेषु च ।
जीवादन्यं न पश्यन्ति श्रुत्वैवं विद्विषन्ति च ।
एतांस्त्वमासुरान्विद्धि लक्षणैः पुरुषाधमान्' ।।
इति हरिवंशेषु ।। १५ ।।

एवं युगानुरूपोऽसौ भगवान् युगवर्तिभिः ।
मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ।। ३५ ।।

'ध्रुवं तयैव मुच्यन्ते यां मूर्तिं प्रदिशेद्गुरुः ।
शिष्याणां योग्यताऽभिज्ञो विघ्नहानिस्तु तद्युगे ।

अवतीर्णहरेर्मूर्त्या तत्पूर्वयुगजेन च ।
नृसिंहमूर्त्या च तथा यां चान्यां प्रदिशेद्गुरुः' ।।
इति स्वाभाव्ये ।। ३५ ।।

देवर्षिभूताप्तनृणां पितॄणां
न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिचर्यया च ।। ४२ ।।

स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथञ्चिद्
धुनोति सर्वं हृदि सन्निविष्टः ।। ४३ ।।

'सर्वात्मना हरेर्भक्ता देवेशा एव केवलम् ।
देवास्तु सर्वथा भक्ता भक्ता एवेतरे स्मृताः ।
हरिभक्तयाऽधिकेष्वेव किङ्करश्चाप्यृणी तथा ।
हरिभक्तो नेतरेषां वासुदेवव्यपाश्रयात् ।
द्विधैव स्वोत्तमर्णानि दातव्यानीतराणि च ।
दातव्येभ्यो विमुच्येत नेतरेभ्यः कथञ्चन ।
कथं देवानुपकृतो मनो मोक्षेऽपि वर्तयेत् ।
बिम्बत्वात्तदधीनं हि स्वरूपं सर्वशो यतः' ।। इति जीवनिर्णये ।।

'उदकैश्च नमस्कारैः स्तुतिभिर्मनसा तथा ।
यतिभिश्चापि सम्पूज्या देवा मोक्षमियासुभिः ।
मध्ये विष्णुमनुस्मृत्य नान्यथा तु कथञ्चन' ।। इति समयाचारे ।।

'प्राधान्येन हरिर्ध्येयस्तत्सम्बन्धात्सुरादयः ।
ध्येया नान्यत्क्वचिध्यायेद्धरावनुपयोगि यत्' ।।
इति हरिसंहितायाम् ।। ४२,४३ ।।

वैरेण यं नृपतयः शिशुपालपौण्ड्र-
साल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतधियः शयनासनादौ
तत्साम्यमापुरनुरक्तधियः पुनः किम् ।। ४९ ।।

'पौण्ड्रकादिषु दैत्येषु सुरांशाः सन्ति सर्वशः ।
बहुमानफलं विष्णोस्ते यान्त्यादाय सद्गतिम् ।
विद्वेषस्य फलं यत्तु तदादायासुरास्तमः ।
यान्त्यतो नैव विद्वेषो विष्णोः कार्यः कथञ्चन' ।।
इत्यंशविवेके ।। ४९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे पञ्चमोऽध्यायः ।।



## षष्ठोऽध्यायः

त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं
व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ।
नैतैर्भवानजित कर्मभिरज्यते वै
यः स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ।। ८ ।।

स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः
क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः ।
यः सात्त्विकैः समविभूतिभिरात्मविद्भि-
र्व्यूह्यार्चितः सवनशः समविक्रमै(र्यः)श्च ।। १० ।।

यः प्रकाशरूपः ।। ८,१० ।।

पर्युष्टया पतितया वनमालयेयं
संस्पर्धिनी भगवती प्रतिपक्षवच्छ्रीः ।
यः सुप्रणीतममुयाऽर्हणमाददानो
भूयात् सदाऽङ्घ्रिरशुभाशयधूमकेतुः ।। १२ ।।

'अस्पर्धिनी स्पर्धिनीव श्रीरास्ते वनमालया ।
न हि स्पर्धादयो दोषाः संविद्रूपां स्पृशन्ति ताम्' ।।
इति वामने ।। १२ ।।

नस्योतगाव इव यस्य वशे भवन्ति
देवाश्च यस्तनुभृदायुषि रज्यमानाः ।
कालस्य ते प्रकृतिपूरुषयोः परस्य
शं नस्तनोतु चरणः पुरुषोत्तमस्य ।। १४ ।।

तनुभृदायुषि सम्बद्धः अश्चेति तनुभृदायुषि रज्यमानाः ।

'ब्रह्मणा संपरित्यक्तो मृत इत्युच्यते नरः' । इति भारते ।। १४ ।।

अस्यासि हेतुरुदयस्थितिसंयमानां
अव्यक्तजीवमहतामपि कालमात्रः ।

सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः
कालो गभीररय उत्तमपूरुषस्त्वम् ।। १५ ।।

**कालमात्रः** कालनिर्माता ज्ञाता च । सृष्टिलयाद्यर्थम् । नित्यत्वेन च । अव्यक्तस्यापि स्रष्टृ(ष्ट)त्वात्काल एवं भूतः तस्मादप्युत्तमस्त्वम् ।

'कालाज्जीवात्तथाऽव्यक्तान्महतश्चोत्तमो यतः ।
उत्तमः पुरुषस्तस्माद्भगवान्विष्णुरच्युतः' ।। इति ।। १५ ।।

त्वत्तः प्रधानमधिकृत्य पुमान् स्ववीर्यं
धत्ते महान्तमिव गर्भममोघवीर्यः ।
सोऽयं त्वयाऽनुगत आत्मन आण्डकोशं
हैमं ससर्ज बहिरावरणैरुपेतम् ।। १६ ।।

'नारायणाख्यः परमः शेते लक्ष्म्याऽन्वितो लये ।
स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः ।
कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् ।
प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः ।
चतुर्मुखः स पुरुषो महत्तत्त्वाभिधं पुनः ।
प्रधाननाम्न्यां गायत्र्यां ससर्जात्मानमेव तु ।
श्रद्धाभिधां च गायत्रीं ताभ्यां शेषोऽन्वजायत' ।।
इत्यादि सृष्टिविक्षेपे ।। १६ ।।

तत् तस्थुषश्च जगतश्च भवानधीशो
यन्माययोत्थगुणविक्रिययोपनीतान् ।

अर्थान् जुषन्नपि हृषीकपते न लिप्तो
येऽन्ये स्वतः परिहृतानपि बिभ्यति स्म ।। १७ ।।

येऽन्ये ज्ञानिनः स्वतः परिहृतान्विषयान् बिभ्यति ।। १७ ।।

बिभ्रत् तवामृतकथोदवहास्त्रिलो(काः)क्याः
पादावनेजसरितः शमलानि हन्तुम् ।
आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गै-
स्तीर्थद्वयं शुचिषदस्तदुपस्पृशन्ति ।। १९ ।।

सर्वं बिभ्रतस्तव ।। १९ ।।

यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ।
शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ।। २५ ।।

वत्सराणां शतं चैव ऋतूनां पञ्चविंशकम् ।
अवतीर्णस्य कृष्णस्य यदा प्रागात्तदा हरिम् ।
स्वस्थानगमनापेक्षी ब्रह्मा तुष्टाव सामरः ।।

'संवत्सरद्वयं चैव पश्चात्स्थित्वा जनार्दनः ।
अभिपेदे परं स्थानं चातुर्मास्याधिकं पुनः' ।।
इति भविष्यत्पुराणे ।। २५ ।।

तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ।
लोकं जिघृक्षत्यूर्ध्वं मे वेलामिव महार्णवः ।। ३० ।।

यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ।
गन्तास्म्यनेन लोकोऽयमुल्बणेन विनंक्ष्यति ।। ३१ ।।

'सतामपि कलौ प्राप्ते विकारो मनसो भवेत् ।
तस्माद्यदूंश्च संजह्रे नैते स्युः पापिनस्त्विति ।
पुनर्लोकविवृद्ध्यर्थमौत्तरेयादिकान्हरिः ।
आविश्य रक्षामकरोज्जगतः पुरुषोत्तमः ।
स्वात्मनः सह यानेन पुरुषार्थोऽधिको भवेत् ।
इत्यनुग्रहबुध्या च संजह्रे स्वकुलं विभुः' ।। इति च ।। ३०,३१ ।।

वाताशना महर्षयः श्रमणा ऊर्ध्वमन्थिनः ।
ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ।।४८।।

वयं त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकै(र्दुस्त्यजं) र्दुस्तरं तमः ।।४९।।

स्मरन्तः कीर्तयन्तस्ते कृतानि गतितानि च ।
गत्युत्स्मितेक्षणोत्केलि यन्नृलोकविडम्बनम् ।। ५० ।।

'आत्मनोऽवमतां ब्रूयुरुत्तमा अपि सर्वशः ।
कदाचिदेव स्वगुणान्स्निग्धेष्वेव हि साधवः' ।। इति नारदीये ।।४८-५०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे षष्ठोऽध्यायः ।।



## सप्तमोऽध्यायः

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायां मनोमयीम् ।। ७ ।।

विद्धि मायां मनोमयीम् । मन्मनःप्रधानप्रकृतिनिर्मि(तम्)ताम् ।

'प्रकृतिः सा परा मह्यं रोदसी लोकधारिणी ।
ऋता सत्याऽमराऽजय्या लोकानामात्मसञ्ज्ञिता' ।।
इति मोक्षधर्मेषु ।। ७ ।।

पुंसोऽयुक्तस्य नानार्थे भ्रमः स गुणदोषकृत् ।
कर्माकर्मविकर्मेति गुणदोषधियो(धिया) भिदा ।। ८ ।।

'स्वर्गाद्याश्च गुणाः सर्वे दोषाः सर्वे तथैव च ।
आत्मनः कर्तृताभ्रान्त्या जायन्ते नात्र संशयः ।
परमात्मानमेवैकं कर्तारं वेत्ति यः पुमान् ।
स मुच्यतेऽस्मात् संसारात्परमात्मानमेति च' ।। इति भारते ।।

इदं मया क्रियते, इदं मया न क्रियते, इदं मया विपरीतं क्रियत इति बुद्धिभेदो रजस्तमोगुणनिमित्तो भ्रमः । सर्वं हि परमेश्वरः करोति ।।८।।

तस्माद् युक्तेन्द्रिय(जयः)ग्रामो युक्तचित्त इदं जगत् ।
आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ।। ९ ।।

'आत्मशब्दोदितो ब्रह्मा परमात्माऽभिधो ह्यहम् ।
सर्वं ब्रह्मणि वीक्षेत मयि ब्रह्माणमेव च' ।।
इति कालसंहितायाम् ।। ९ ।।

ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ।
आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यते ।। १० ।।

'**आत्मभूतः** आत्मवद्भूतः ।

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन' ।। इति वचनात् ।।१०।।

दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ।
गुणबुद्ध्या च विहितं न करोति यथाऽर्भकः ।। ११ ।।

सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चलः ।
पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ।। १२ ।।

'कर्तृत्वमात्मनो यस्माज्ज्ञाननिष्ठो न मन्यते ।
अतोऽकुर्वन्नपि सदा दोषबुध्या न निन्दितम् ।
गुणबुद्ध्या न विहितं किन्त्वीशप्रेरितोऽस्म्यहम् ।
स एव च मयि स्थित्वा निन्द्यानिन्द्ये करोत्यजः ।
न मे दोषो न च गुणः कर्तृत्वाभावतः स्फुटम् ।
स्वतन्त्रत्वान्न चेशस्य येऽज्ञास्तेषु भवेदपि ।
इति मत्वा निवर्तेत निन्द्यात्कुर्याद्गुणानपि' ।। इति बोद्धव्ये ।।

'अनित्या मे गुणा न स्युर्दोषा नैव कथञ्चन ।
इति मत्वा शुभं कुर्यान्निवर्तेदशुभादपि ।
ज्ञानी त्वकर्तृतामानादीशकर्तृत्वनिश्चयात् ।
किन्तु पूर्णगुणायैव न तु दोषापनुत्तये ।
न चाल्पगुणसिद्ध्यर्थं बालवत्कृतनिश्चयः' ।। इति वैशारद्ये ।।

'वैलक्षण्याद्धरेर्भिन्नं तत्तन्त्रत्वात्तदात्मकम् ।
इति विश्वं प्रपश्यन्ति ज्ञाननिष्ठा हरेः प्रियाः' ।।
इति सार्वज्ञ्ये ।। ११,१२ ।।

उद्धव उवाच–

योगेश योगविन्यास योगात्मन् योगसम्भव ।
निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ।। १४ ।।

योगो देवादिषु तेन न्यस्त इति योगविन्यासः ।

'ज्ञानं तु योगशब्दोक्तं युज्यतेऽनेन यत्सुखम् ।
क्वचिद्योग उपायः स्यात्क्वचिच्चित्तनिरोधनम्' ।। इति दत्तात्रेययोगे ।।

अत्र ज्ञानमुपायश्च ।। १४ ।।

सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं
वक्तारमीश विबुधेष्वपि नानुचक्षे ।
सर्वे विमोहितधियस्तव माययेमे
ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ।। १७ ।।

अभगवत्स्वरूपत्वात्तनुभृत्त्वम् । बहिरर्थापेक्षयैव च तेषां मोहः । परमसुखसाधनादन्योऽर्थो बहिरर्थः ।

'अशरीरः सदा विष्णुः पूर्णानन्दत्वतः सदा ।
इच्छा च क्रीडयैवास्य न फलाय यतो विभोः ।
अतो बाह्यार्थकामोऽपि निष्काम इति कथ्यते ।
ब्रह्मा निरभिमान(नि)त्वाच्छरीर्यप्यशरीरवान् ।
नित्यानन्दोपयोग्यन्यकामस्योज्झिततिः सदा ।
बहिरर्थविनिर्मुक्तस्तथापि तनुधारणात् ।
अमूढो मूढ इतिवदुच्यते च सरस्वती ।

रुद्राद्यास्तन्वभीमानाद्बहिरर्थयुजस्तथा ।
सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु ।
अभावस्त्वपरोक्षस्य मोहो ज्ञानस्य भण्यते ।
ब्रह्मणस्त्वंशरूपेषु भारत्या ज्ञानवर्जनम् ।
ब्रह्मगायत्रिभावे तु नांशावतरणं क्वचित् ।
शतजन्मसु पूर्वं तु ज्ञानोदय उदीर्यते ।
आपरोक्ष्येण पारोक्ष्यात्पूर्णज्ञानं सदैव तु ।
शतजन्मगतायाश्च आपरोक्ष्योज्झितिर्भवेत् ।
क्वचित्क्वचित्सरस्वत्यामंशावतरणेष्विति' ।। इति शक्तिविवेके ।।

'अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराणि वा एतानि' ।।
इति च श्रुतिः।

'श्रुतिभिस्तनितत्वात्तु स्तनयित्नुर्हरिः स्मृतः ।
अभ्रं भूतानि भरणाच्छ्रीर्वायुर्भरतः स्मृतः ।
विद्युत्तु भारती प्रोक्ता एत एवाशरीरिणः ।
व्यत्यासेनापि नाम स्यादेतेषां महतां सदा' ।। इत्युभयनिरुक्ते ।।१७।।

तस्माद् भवन्तमनवद्यमनन्तपारं
सर्वज्ञमीश्वरमखण्डविकुण्ठधिष्ण्यम् ।
निर्वेदधीरहरहर्वृजिनाभितप्तो
नारायणं नरसखं शरणं प्रपद्ये ।। १८ ।।

'विष्णोर्वायोरनन्तस्य त्रिभिरंशैर्नरः स्मृतः ।
सेन्द्रैश्चतुर्भिः पार्थस्तु द्वाभ्यां तु बललक्ष्मणौ' ।। इत्यंशविवेके ।।१८।।

श्री भगवानुवाच–

प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ।
समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ।। १९ ।।

लोके तत्त्वे च विचक्षणाः ।

'पारोक्ष्येणैव तत्त्वं तु लोकं चापि विदन्ति ये ।
तेऽपि सत्स्नेहनिर्मुक्तास्तमो यान्ति विनिश्चयात् ।
आपरोक्ष्यान्न च ज्ञानं तेषामुत्पद्यते कचित्' ।। इति षाड्गुण्ये ।।१९।।

त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ।
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ।। ३० ।।

**केवलात्मनः** शरीरमात्रपरिग्रहस्य ।। ३० ।।

शश्वत् परार्थसर्वेहां परार्थैकान्तसम्भवम् ।
साधुः शिक्षेत भूमेश्च अनुशिक्षं व्रतान्तरम् ।। ३८ ।।

**परार्थैकान्तसम्भवम्** । आत्मनो वृद्धिश्च परार्थेति ।

'सज्जनार्थेऽनुमन्येत ऐहिकीं वृद्धिमात्मनः ।
पारत्रिकीमैहिकीं च प्रीतये गुरुदेवयोः ।
देवतानां च सर्वेषां स्वोत्तमानां च सर्वशः' ।। इति च ।।३८।।

अन्तर्बहिश्च स्थिरजङ्गमेषु
ब्रह्मात्मभावेन समन्वयेन ।
व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो
मुनिर्नभोवद् विततस्य भावयेत् ।। ४२ ।।

'जीवान्तर्यामको विष्णुरात्मनामा समीरितः ।
तस्य तु ब्रह्मरूपत्वाद्बहिरन्तस्तथैव च ।
पश्येदाकाशवद्व्याप्तिमसङ्गत्वं च नित्यशः' ॥

इति तन्त्रभागवते ॥ ४२ ॥

तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ।
न स्पृश्यते नभस्तद्वत् कालसृष्टैर्गुणैः पुमान् ॥ ४३ ॥

'गुणान्जीवस्य चेष्टव्यान्सिद्धान्विष्णोर्गुणांस्तथा ।
तत्तद्दृष्ट्या विचिन्वीत पृथगेव सुधीः सदा' ॥ इति लोकतत्त्वे ॥ ४३ ॥

स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थवन्नृणाम् ।
मुनिः पुनात्यघान्मित्रमीक्षणस्पर्शकीर्तनैः ॥ ४४ ॥

'मधुनाम सुखं विन्द्यान्माधुर्यं सुखहेतुता ।
सुखे रतिर्वा सम्प्रोक्ता शब्दतत्त्वविचक्षणैः' ॥ इति शब्दनिर्णये ॥४४॥

तेजस्वी तपसा दीप्तो दुर्धर्षो दूरभाजनः ।
सर्वभक्षोऽपि युक्तात्मा नादत्ते पापमग्निवत् ॥ ४५ ॥

दूरत एव भजनीयः ।

'पराभवो धर्षणं स्यादवज्ञानमथापि वा ।
न तत्सत्सु सदा कुर्यात्सह शय्यासनं (सहासाशयनं) न च'

इति सद्गुणे ॥ ४५ ॥

क्वचिच्छन्नः क्वचित् स्पष्ट उपास्यः श्रेय इच्छताम् ।
भुङ्क्ते सर्वत्र दातॄणां दहन् प्रागुत्तराशुभम् ॥ ४६ ॥

स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ।
प्रविष्ट ईयते तत्तत्स्व(स)रूपोऽग्निरिवैधसि ।। ४७ ।।

'जीवस्य छन्नतां शिक्षेत्प्रविष्टत्वं परात्मनः ।
तत्तद्गुणविडम्बं च वह्नेः सर्वमथापि वा ।
अल्पदारौ यथाऽल्पोऽग्निरेवमल्पशरीरगः ।
दृश्यते परमात्माऽपि स्थूलः स्थूलशरीरगः' ।। इति वैभवे ।।४६,४७।।

कालनद्योघवेगेन भूतानां प्रभवाप्ययौ ।
नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथाऽर्चिषाम् ।। ४९ ।।

'अवयव्यवयवानां च गुणानां गुणिनस्तथा ।
शक्तिशक्तिमतोश्चैव क्रियायास्तद्वतस्तथा ।
स्वरूपांशांशिनोश्चैव नित्याभेदो जनार्दने ।
जीवस्वरूपेषु तथा तथैव प्रकृतावपि ।
चिद्रूपायामतोऽनंशा अगुणा अक्रिया इति ।
हीना अवयवैश्चेति कथ्यन्ते तेऽत्यभेदतः ।
पृथग्गुणाद्यभावाच्च नित्यत्वादुभयोरपि ।
विष्णोरचिन्त्यशक्तेश्च सर्वं सम्भवति ध्रुवम् ।
क्रियादेरपि नित्यत्वं व्यक्तयव्यक्तिविशेषणम् ।
भावाभावविशेषेण व्यवहारश्च तादृशः ।
विशे(ष्य)षस्य विशिष्टस्याप्यभेदस्तद्वदेव तु ।
सर्वं चाचिन्त्यशक्तित्वाद्युज्यते परमेश्वरे ।
तच्छक्त्यैव तु जीवेषु चिद्रूपप्रकृतावपि ।
भेदाभेदौ तदन्यत्र ह्युभयोरपि दर्शनात् ।
कार्यकारणयोश्चापि निमित्तं कारणं विना' ।। इति ब्रह्मतर्के ।

'आत्मनि चैवं विचित्राश्च हि' । 'सर्वोपेता च तद्दर्शनात्' । 'सर्वधर्मोपपत्तेश्च' । 'स्वाभाविकी ज्ञानबलक्रिया च' । 'यत्रा सप्त ऋषीन्पर एकमाहुः' ।। इत्यादेश्च ।।

'विना दोषांच्छ्रुतमद्धाऽवगम्यं तथा स्मृतं परमे सत्यरूपम् ।
नैवासत्यं क्वचिदस्मिन्परेशे सर्वं युक्तं पूर्णशक्तेः सदैव' ।।
इति च विश्वम्भरश्रुतिः ।

तस्मादेकस्मिन्नपि शरीरे भेदाभेदात्प्रभवाप्ययौ युज्येते । न च विरोधः । स्थूलसूक्ष्मवत् । आपेक्षिक(त्व)मत्रापि युज्यते ।। ४९ ।।

**बुद्धिसंस्थेन भेदेन व्यक्तस्थ इव तद्गतः ।**
**लक्ष्यते स्थूलमतिभिरात्मा चाम्बुस्थितार्कवत् ।। ५१ ।।**

'बुद्धिसंस्थस्त्वात्मभेदो व्यक्तस्थो जीव उच्यते ।
तेनैव सह संस्थानात्परात्मा स्थूलबुद्धिभिः ।
जीववल्लक्ष्यते विष्णुर्यथैवाम्बुस्थितार्कवत् ।
परमार्कः (परार्कः) पारिमाण्या(पारिमाण्डिल्या)-
द्वर्तुलत्वादिना तथा ।
अर्कस्वरूपानभिज्ञैः शिरः पादादिवर्जितः ।
अचेतनश्च कल्प्येत तत्तेजोमात्रदर्शिभिः ।
सूर्यदेहादिभिन्नं हि तेजोमण्डलमेव तु ।
दृश्यते स्थूलमतिभिरेवमेव जनार्दनः' ।। इति प्रभासके ।। ५१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे सप्तमोऽध्यायः ।।

## अष्टमोऽध्यायः

दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ।
प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ।। ७ ।।

योषित्सु तल्पाभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ।। ८ ।।

'महतां वनिताकामः पतत्यन्धे तमस्यलम् ।
अन्यत्र निरयं याति दुःखवान्स्याद्विपर्यये' इति धर्मसंहितायाम् ।।

'मोहकारणभूतां तु मायेत्याहुर्मनीषिणः ।
अविद्यमानं मेत्युक्तं तज्ज्ञापयति यत्स्वयम् ।
कुत्रचिज्ज्ञानरूपं सल्लाभरूपं च भण्यते ।
मयं प्राचुर्यमुद्दिष्टं माया स्यात्प्रचुरेत्यपि' ।। इति तन्त्रनिरुक्ते ।।

'स्वतन्त्रं परमार्थाख्यं स्वतन्त्रैका हरेर्मतिः ।
सैव माया समुद्दिष्टा मुख्यतस्तत्स्वरूपिका ।
मतिमन्मतिभेदोऽपि न विष्णोः क्वचिदिष्यते ।
पारमार्थ्येन नास्त्येव तदन्यत्तद्वशं यतः ।
अनाद्यनन्तकालेषु विद्यमानमपि ध्रुवम् ।
अतो मायामयं प्राहुः सर्वं तद्वशगं यतः' ।। इति मायावैभवे ।।

'स्वाधीनं सदिति प्रोक्तं पराधीनमसत्स्मृतम् ।
अविद्यमानमेतस्माज्जगदाहुर्विपश्चितः ।
अनाद्यनन्तकालेषु विद्यमानमपि ध्रुवम् ।
अस्वातन्त्र्यात्तु नास्त्येवेत्येवं वाच्यं जगत्सदा ।

सदा वृत्तेर्विद्यमानमिति ब्रूयाद्यदि कचित् ।
तथापि नाशवद्धीदं प्रवाहाद्ध्यस्य नित्यता ।
अतो निवर्त्यमित्याहुः प्रपञ्चो ह्यस्ति यद्यपि ।
विष्णोरिच्छावशत्वाच्च मायामात्रमिति स्फुटम् ।
परमार्थं त्वेकमेव स्वातन्त्र्याद्विष्णुमव्ययम् ।
यदि कल्पयतीदं स स एव विनिवर्तयेत् ।
विष्णुस्तस्मात्तद्वशत्वान्नास्तीति द्वैतमुच्यते ।
स्वातन्त्र्येण हरौ ज्ञाते पराधीनत्वनिश्चयात् ।
इत्याहुरुपदेष्टार आचार्यास्तत्त्ववेदिनः ।
यथैव राजन्विज्ञाते (राजनि ज्ञाते) नान्योऽस्तीति स्फुटं वचः ।
स्वातन्त्र्यात्पारतन्त्र्याच्च तद्भृत्यादिषु सत्स्वपि ।
यथैकच्छत्रवांश्चैव एकवीर इतीव च ।
तथैव सर्वप्राधान्याददद्वितीयो हरिः स्मृतः ।
एवं मुक्ता विजानन्ति सायुज्यं प्रापिता विभोः ।
अनन्तकालं पश्यन्तो जगदेतच्चराचरम् ।
तस्यैतस्य ह्यविज्ञानात्केवलभ्रान्तिरूपकम् ।
जगदुक्त्वा तमो यान्ति ईशितव्येशशापतः' ।। इति च ।।

'पुत्रा मे यदि विद्यन्ते मरिष्यन्त्येव ते ध्रुवम् ।
यदि राज्यं करोत्येष नश्यत्येतदसंशयम्' ।। इति धृतराष्ट्रवचनवत् ।

'प्रपञ्चो यदि विद्येत' । इत्यादि ।

'यदिशब्दस्त्ववस्तुत्वे चास्वातन्त्र्ये च संशये ।
अवस्तुशब्दश्चाशक्ते ह्यल्पशक्तौ च कीर्त्यते' ।।

इति शब्दनिर्णये ।। ७,८ ।।

सुहृत् प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।
तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ।। ३४ ।।

'भगवद्धार्यतायोग्याः काश्चिदप्सरसःस्त्रियः ।
रमाऽऽवेशात्कदाचित्स्युस्तास्वेका पिङ्गलाऽभवत् ।
तदन्यासां महान्दोषो भगवद्धर्तृतास्मृतौ' ।। इति स्वाभाव्ये ।।३४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे अष्टमोऽध्यायः ।।



## नवमोऽध्यायः

वासो (वासे) बहूनां कलहो भवेद् वार्ता द्वयोरपि ।
एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः ।। १० ।।

'असज्जनैस्तु संवासो न कर्तव्यः कथञ्चन ।
यावद्यावच्च बहुभिः सज्जनैः स तु मुक्तिदः' ।।
इति षाड्गुण्ये (सद्गुणे) ।। १० ।।

यस्मिन् मनो लब्धपदं यदेत-
च्छनैः शनैर्मुञ्चति कर्मरेणून् ।
सत्त्वेन वृद्धेन रजस्तमश्च
विधूय निर्वाणमुपैत्यनिन्धनम् ।। १२ ।।

तदेवमात्मन्यवरुद्धचित्तो
न वेद किञ्चिद् बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्त-
मिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥

'बाह्यं मनो विलीनं स्यान्मुक्तौ चिन्मात्रकं मनः ।
तेनैवानुभवेत्सर्वं स्वात्माभिन्नेन मुक्तिगः' ॥
इति मुक्तितत्त्वे ॥ १२,१३ ॥

एको नारायणो देवः पूर्वसृष्टं स्वमायया ।
संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ।
कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ॥ १७ ॥

सत्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ।
परावराणां परम आस्ते कैवल्यसंज्ञितः ॥ १८ ॥

'कालप्रकृतिजीवादौ लयेऽसत्यप्रवर्तनात् ।
तन्निमित्तस्य कार्यस्य विष्णुरेक इतीर्यते ।
स हि कालादिकं सर्वं वर्तयत्यमितद्युतिः' ॥ इति तत्त्वलये ॥

'प्रकृतिश्च गुणाश्चैव शक्यत्वाच्छक्तयः स्मृताः ।
विष्णोः स्वरूपभूता तु शकनाच्छक्तिरुच्यते' ॥
इति शक्तिविवेके (शक्तितत्त्वे) ॥ १६-१८ ॥

**यत्र यत्र मनो देही धारयेत् सकलं धिया ।**
**स्नेहाद् द्वेषाद् भयाद् वापि याति तत्तत्सरूपताम् ॥ २२ ॥**

**कीटः पेशस्करं (पेशस्कृतं) ध्यायन् कुड्यां तेन प्रवेशितः ।**
**याति तत्साम्यतां राजन् पूर्वरूपमसंत्यजन् (स सन्त्यजन्)**
**॥ २३ ॥**

'भयादपि हरिं भक्त्या चिन्तयंस्तत्स्वरूपताम् ।
पेशस्कारिवदायाति द्विषन् द्वेषसरूपताम् ।
सुखरूपस्य हि द्वेषो दुःखरूप इतीर्यते ।
तस्माद्दुःखं सदा याति द्वेषवान्पुरुषोत्तमे ।
नृसिंहद्वेषतो दुःखं रक्षोरूपेण रावणः ।
अगाच्च रामविद्वेषाच्छिशुपालस्तथैव च ।
ततो भक्त्या परं यातो द्वेषरूपस्त्वधोगतिम् ।
तस्मात्सर्वगुणोद्रेकिविद्वेषात्सर्वदोषवान् ।
भवेदिति सरूपत्वं द्वेषादेः पुरुषस्य हि' ॥ इति भागवततन्त्रे ॥

'तं यथा यथोपासते तदेव भवति' ।

'तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभू(ति)रित्यसुरास्ते ह पराबभूवुः' ॥ इत्यादि च ॥

'सत्यप्यत्यल्पविद्वेषे भोजनं दास्यतीति तु ।
स्नेहबाहुल्यतः कीटः पेशस्कारिसमो भवेत् ।
द्वेषे सर्वात्मना नष्टे स्नेहे चैव विवर्धति ।
सरूपता तदैव स्यात्कीटस्यैवं हरेरपि ।

अत्यल्पोऽपि हरेर्द्वेषः स्नेहस्यानुदयङ्करः ।
सोऽयं विशेषो नान्यस्य फलदाता च केशवः ।
न हि पेशस्कृतः किञ्चित्फलदातृत्वमिष्यते ।
स्वातन्त्र्याद्विद्विषां चैव केशवो न सुखप्रदः' ॥

इति स्वातन्त्र्यविवेके ॥ २२,२३ ॥

देहो गुरुर्मम विरक्तिविवेकहेतु-
र्बिभ्रत् स्म सत्वनिधनं सततात्युदर्कम् ।
तत्वान्यनेन विमृशामि यथा तथापि
पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥

सत्त्वनिधनः सत्त्वं निधीयतेऽस्मिन्परमेश्वर इति । 'सततमतिशये-नोच्चैर(रङ्करूपः)र्करूपः' इति सततात्युदर्को भगवान् ॥ २५ ॥

जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्
पुष्णाति यत्(यः)प्रियचिकीर्षया वितन्वन् ।
सोऽन्ते सुकृच्छ्रमवरुद्धमनाः स्वदेहं
सृष्ट्वा स्वबीजमवसीदति वृक्षधर्मा ॥ २६ ॥

बीजार्थमारो(पणा)हणादिकं कुर्वन्निति ॥ २६ ॥

न ह्येकस्माद् गुरोर्ज्ञानं सुस्थिरं स्यात् सुपुष्कलम् ।
ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥

'एकस्मात्तु गुरोर्ज्ञानं जायते नैव कस्यचित् ।
एकस्मादेव जायेत योग्याद्ब्रह्मपदस्य तु ।

स्वयं चोपदिशेज्ज्ञानं वैरिञ्चिपदयोगिनि ।
अनुग्रहात्तेन चापि ज्ञानं दत्वा विमुक्तिदः ।
ज्ञानं प्राप्य बहुभ्योऽपि नर्ते मुक्तिश्चतुर्मुखात् ।
ज्ञानमप्राप्य तेषां तु ज्ञानदो विष्णुरेव हि' ।। इति गुरुविवेके ।।३१।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे नवमोऽध्यायः ।।



## दशमोऽध्यायः

सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ।
नानात्मकत्वाद् विफलस्तथाऽभेदोऽन्यधीगुणैः
(तथाऽभेदः स्वधीगुणैः) ।। ३ ।।

बुद्धिगुणैः कामक्रोधादिभिरभेदो विफलः ।

'वस्तुस्थितेरन्यथात्वं नानात्वमिति कीर्तितम् ।
ज्ञानस्यैव तु नानात्वान्न स्यात्कामाद्यहंमतिः ।।
कामादिषु स्वधीस्थेषु केवलं जीवसंस्थितिः ।
इति बुद्धिरभेदः स्यात्स न कार्यः कथञ्चन ।।
अदुष्टकामश्चिद्रूपो जीवाभिन्नः स्वरूपतः ।
दुष्टकामो मनोधर्मस्तस्माद्धेयः सदैव सः' ।। इति विवेके ।। ३ ।।

निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ।
जिज्ञासायां सम्प्रवृत्तो नाद्रियेत् कर्मचोदनाम् ।। ४ ।।

'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' ।। इति भारते ।। ४ ।।

यमानभीक्ष्णं सेवेत नियमान् मत्परः क्वचित् ।
मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ।। ५ ।।

'मामेव नित्यं ध्यायेद्यो मदात्मा स प्रकीर्तितः' । इति च ।। ५ ।।

निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान् ।
अनुप्रविष्ट आधत्ते एवं देहगुणान् परः ।। ९ ।।

योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ।
संसारस्तन्निबन्धोऽयं पुंसोऽविद्यास्थितात्मनः ।। १० ।।

'अदेहधर्मवान्विष्णुर्देहधर्मवदीर्यते ।
जीवस्त्वदेहधर्माऽपि परतो देहधर्मवान् ।
स्वयं त्वनभिमानः सन्नज्ञानामेव दर्शयेत् ।
विष्णुर्जीवस्त्वभीमानी यावद्विष्णुपदं व्रजेत्' ।।
इति विष्णुसंहितायाम् ।। ९-१० ।।

तस्माज्जिज्ञासयाऽऽत्मानमात्मस्थं केवलं परम् ।
सङ्गम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम् ।। ११ ।।

अवस्त्वशक्तमुद्दिष्टं शक्तं वस्त्विह भण्यते ।
तस्मादेकं परं ब्रह्म वस्तुशब्दोदितं सदा' ।। इति लक्षणे ।। ११ ।।

वैशारदी साऽति(सा तु)विशुद्धबुद्धि-
र्धुनोति मायां गुणसम्प्रसूतिम् ।

गुणांश्च संदह्य यदात्म्यमेतत्
स्वयं च शाम्यत्यसमिद् यथाऽग्निः ।। १३ ।।

'पिशाचवत्स्थिता माया तू(मु)च्यते जीवगा सदा ।
दह्यन्ते तद्गुणाः सर्वे सा च प्रातिस्विकी नरे' ।। इति वैभाव्ये ।।

एतच्छब्देन दुःखादिरपरोक्षतयोच्यते ।

'क्वचिद्विश्वं क्वचिद्ब्रह्म क्वचिन्निन्द्यमुदीर्यते' ।। इति तन्त्रनिरुक्ते ।

'बाह्यान्तःकरणाज्जन्यं ज्ञानं नश्यति मुक्तिगे ।
स्वरूपज्ञानतो भोगान्मुक्तो भुङ्क्ते यथेष्टतः' ।। इति मुक्तितत्त्वे ।।१३।।

अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः ।
नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ।। १४ ।।

मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी (यथा) तथा ।
तत्तदाकृतिभेदेन जायते भिद्यते च धीः ।। १५ ।।

एवमप्यत्र सर्वेषां देहिनां देहयोगतः ।
कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ।। १६ ।।

'देहापेक्षमनित्यत्वं जीवानां जननं तथा ।
स्वतस्त्वजाश्च नित्याश्च बहवः सुखरूपिणः ।
उत्तमा जीवसङ्घास्तु नीचा वै नित्यदुःखिनः' ।।
इति जीवतत्त्वे ।। १४-१६ ।।

तत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते ।
भोक्तुश्च सुखदुःखानां कोन्वर्थो विवशं भजेत् ।। १७ ।।

'स्वाधिकानां वशत्वात्तु परमं सुखमेव तु ।
तदन्येषां वशे यस्तु किं सुखं तस्य भण्यताम् ।
स्वाधिकानां वशत्वं च तेषु भक्तिमतः सुखम् ।
तदन्येषां तु दुःखाय तस्माद्भक्तोऽधिको भवेत्' ।। इति च ।।१७।।

न देहिनां सुखं किञ्चिद् विद्यते विदुषामपि ।
तथा च दुःखमूढानां वृथाऽहङ्कारिणां परम् ।। १८ ।।

विदुषामपि देहमानिनां यदा न विद्यते सुखं तदा दुःखमूढानामहङ्कारिणां च किम्वित्यर्थः ।

'पुनःशब्दे प्रस्तुतार्थे तथाशब्द उदीर्यते' ।। इति शाब्दे ।।१८।।

यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः ।
तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद् यथा ।। १९ ।।

ये तु विद्वत्त्वेन प्रसिद्धाः प्राकृतानां तेऽप्यद्धा न विदुर्देहाभिमानिनश्चेत् । दुःखमूढा अधीराः । अहङ्कारिणो विशेषतोऽप्यविद्यमानगुणाभिमानिनः ।।१९।।

गुणाः सृजन्ति कर्माणि कालो नु सृजते गुणान् ।
जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ।। ३१ ।।

यावत् स्याद् गुणवैषम्यं तावन्नानात्वमात्मनः ।
नानात्वमात्मनो यावत् पारतन्त्र्यं तदैव हि ।। ३२ ।।

यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ।
य एतत् समुपासीरंस्ते मुह्यन्ति शुचाऽर्पिताः ।। ३३ ।।

यावत्स्याद्गुणवैषम्यमित्यादि य उपासीरंस्ते मुह्यन्ति । गुणसंयुक्तः कर्मफलानि भुङ्क्ते ।। ३१-३३ ।।

काल आत्माऽऽगमो लोकः स्वभावो धर्म एव च ।
इति मां बहुधा प्राहुर्गुणव्यतिकरेऽसति ।। ३४ ।।

असति गुणव्यतिकरे कालादिनामानं मामेवाहुरिति स्वसिद्धान्तः ।

'कालः सर्वगुणोद्रेकादाप्तत्वादात्मनामकः ।
आगमोऽवगतेरस्य लोको ज्ञानस्वरूपतः ।
स्ववशत्वात्स्वभावोऽयं धारणाद्धर्म इत्यपि ।
उपासते सदा मुक्ताः परानन्दैकभागिनः ।
तदेतत्तत्त्वमज्ञात्वा प्राहुर्दुर्मतयः परे ।
यावत्तु गुणवैषम्यं तावन्नानात्वमात्मनः ।
भेदबुद्धिस्तु यावत्स्यात्तावदीश्वरतन्त्रता ।
यावदीश्वरतन्त्रत्वं तावत्तस्माद्भयं भवेत् ।
उपासते य एवं तु नित्यशोके पतन्ति ते ।
महातमस्यनानन्दे तस्मान्नैवं विचिन्तयेत् ।
तस्मान्नित्यं तु नानात्वं जीवानामीशतन्त्रता ।
स्वाधिकानां वशत्वं च मुक्तावपि सदेष्यते ।
एवं ज्ञात्वा विमुच्यन्ते परानन्दं व्रजन्ति च' ।।

इति तन्त्रभागवते ।। ३४ ।।

उद्धव उवाच–

गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः ।
गुणैर्न बध्यतेऽदेही बध्यते वा कथं विभो ।। ३५ ।।

एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर ।
नित्यमुक्तो नित्यबद्ध एक एवेति मे मतिः ।। ३७ ।।

अदेही परमात्मा । बध्यते चेत्कथं बध्यते । नित्यमुक्तो नित्यबद्ध इत्येकजीववादिमतानुसारेण चोदयति ।

'शिष्योऽपि पूर्वपक्षस्थस्तदेवात्ममतं ब्रुवन् ।
नैव दुष्यत्यसत्येन स्थिरत्वार्थं हि तद्वचः' ।। इति विक्षेपे ।

'न मे मोक्षो न वन्धनम्' ।

'एकस्यैव ममांशस्य जीवस्यैवं महामते ।
बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरत् ।
अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते' ।।

इत्यादिपरिहारात् ।। ३७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे दशमोऽध्यायः ।।



## एकादशोऽध्यायः

श्रीभगवानुवाच–

बद्धो मुक्त इति ह्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे बन्धो न मोक्षणम् ।। १ ।।

**मे गुणतः** । मद्वशसत्वादेः ।

'अमायत्वान्निर्गुणोऽहं बन्धमोक्षौ न चापि मे ।
मदधीनस्य जीवस्य बन्धमोक्षौ मदेव तु' ।। इति स्वाभाव्ये ।।१।।

**शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया ।**
**स्वप्ने यथाऽऽत्मनः ख्यातिः संसृतिर्नतु वास्तवी ।। २ ।।**

'स्वप्नोऽयमित्यविज्ञानात्स्वप्ने दुःखमुपाश्नुते ।
निजस्वरूपानुभवराहित्यात्तद्वदेव तु ।
जाग्रदुःखमपि प्रोक्तं विष्णुतत्त्वं न पश्यतः ।
तस्मात्तदस्वभावत्वात्सदप्येतदवास्तवम्' ।।
इति लोकसंहितायाम् ।। २ ।।

**विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ।**
**मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ।। ३ ।।**

'विद्याऽविद्ये मम तनू प्रतिमावत्सदोदिते ।
सदा तद्व्यतिरिक्तस्य नित्यज्ञानसुखात्मनः ।
मदिच्छावशगे नित्यमविद्यानिर्मिता गुणाः ।
सत्वाद्या मदधीनत्वादविद्याया न मे गुणाः ।
अविद्या चैव विद्या च गुणाः सत्वादिका अपि ।
देहोत्पत्तिः सुखं दुःखं सर्वमेतन्मदिच्छया ।
अतोऽहं बन्धमोक्षाभ्यां रहितो नित्यमेव तु ।
मुक्तशब्दोदितो बन्धराहित्यान्न विमोक्षतः' इति कालसंहितायाम् ।

'श्रीस्तु विद्या समुद्दिष्टा दुर्गाऽविद्या प्रकीर्तिता ।
ते त्वनादी हरेरिच्छानियते सर्वदैव तु' ।। इति मायावैभवे ।। ३ ।।

एकस्यैव ममांशस्य जीवस्यैवं(व) महामते ।
बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरत् ।। ४ ।।

'भिन्नांशस्यैव जीवस्य बन्धमोक्षौ न मे क्वचित् ।
अभिन्नांशास्तु मत्स्याद्यास्तेजसः कालवह्निवत् ।
जीवा भिन्नांशकास्तत्र तेजसः प्रतिबिम्बवत्' ।। इति वैलक्षण्ये ।।

'मुक्तस्य तु न मे मोक्षो बन्धाभावात्कथञ्चन ।
मुक्त इत्यपि नामैतद्दीप्यतेऽसौ दिवाकरः ।
इतिवद्बन्धराहित्यान्न तु वृक्षादिदीप्तिवत् ।
कादाचित्कतया वाच्यं बन्धाभावादमोक्षतः ।
जीवस्य वन्धमोक्षस्तु मत्प्रसादात्कदाचन' ।। इति तत्त्वोदये ।।४।।

अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते ।
विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ।। ५ ।।

मुक्तस्य विष्णोः ।

'नित्यशुद्धबुद्धमुक्तसत्यसुखाद्वयप्रत्यगेकपूर्ण इत्यतः पदान्वयात्'
इत्यादिवचनात् ।

बद्धो जीवः ।

'बद्धा जीवा इमे सर्वे पूर्वबन्धसमन्वयात् ।
नित्यमुक्तत्वतो विष्णुर्मुक्तनामा सदोदितः ।
अबद्धत्वादमोक्षोऽपि दीप्यतेऽसौ रविर्यथा' ।।
इति ब्रह्मसंहितायाम् ।। ५ ।।

सुपर्णावेतौ सदृशौ सखायौ
यदृच्छया कृतनीडौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्न-
मन्यो निरन्नोऽपि बलेन भूयान् ।। ६ ।।

'अनत्तृत्वं हरेर्दुःखानत्तृत्वादुच्यते सदा ।
विषयान्विनापि पूर्णत्वात्स्वरूपानन्दभोगिनः ।
शुभमत्त्येव हि सदा सर्वत्रापि स्थितं विभुः ।
स्वादोरदनवद्धयत्ति जीवोऽस्वाद्वपि यत्सदा ।
अनारतं पारवश्यात्स्वाद्वत्तीति ततः श्रुतिः' ।। इति भोगनिर्णये ।।

'अस्वादु स्वादुवद्धयत्ति जीवो नैव जनार्दनः ।
अतो नात्तीतिवचनमश्नतोऽपि सुखं सदा' ।। इति परभोगे ।

'साशनानशनत्वेन नरदेवौ यथोदितौ ।
अत्तिं विनाऽप्यदौर्बल्यात्तथानत्तिर्हरेर्भुजः' ।। इति स्वाभाव्ये ।

तदेव प्रोक्तं निरन्नोऽपि बलेन भूयानिति । स्वयं त्वत्त्येव तथापि नादननिबन्धनं तस्य बलमित्यर्थः ।

'यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाऽभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ।
यस्मिन्वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे ।
तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद' ।।
इत्यादिवाक्यशेषात् ।

वृक्षे स्थित्वा मध्वदः सुपर्णाः यस्मिन्नश्नन्ति निविशन्ते, तदाधारत्वेन सुवते च, तस्यैव सुपर्णस्य स्वादु पिप्पलम् । अन्यस्तु स्वादुवदश्नाति, न स्वादु । यावत्पितरं परमात्मानं न वेदेत्यर्थः ।

'सुपर्णौ द्वौ शरीरस्थौ जीवश्च परमस्तथा ।
पारवश्यादनाज्जीवस्तत्रात्तीति श्रुतौ श्रुतः ।
स्ववशेनादनाद्विष्णुर्नात्तीत्यत्तापि सन् श्रुतः ।
स एव हि शुभस्यात्ता जीवोऽत्तास्यैव वेदनात्' ।।

इति कूर्मसंहितायाम् ।।

'सर्वं वा अत्तीति तददितेरदितित्वम्' ।
'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' ।
'अत्ता चराचरग्रहणात्' ।
'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' ।। इत्यादेश्च ।। ६ ।।

आत्मानमन्यं च स वेद विद्वा-
नपिप्पलादो न तु पिप्पलादः ।
योऽविद्ययाऽन्धः स तु नित्यबद्धो
विद्यामयो यः स तु नित्यमुक्तः ।। ७ ।।

'जीवो मुक्तोऽपि नो जीवान् परमात्मानमेव च ।
वेत्ति सर्वात्मना विष्णुर्वेत्त्येकः पुरुषोत्तमः ।
तस्य प्रसादतः किञ्चिद्ब्रह्माद्या अपि जानते ।
अन्यजीवानपेक्ष्यैको जानाति च चतुर्मुखः ।
सामस्त्येन तदन्ये तु लेशज्ञानाः क्रमात्स्मृताः' ।। इति विनिर्णये ।।

'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप' ।। इत्यादि च ।

'अज्ञा जीवास्तु कथ्यन्ते मुक्ता अप्यल्पवेदनात् ।
ज्ञ इत्येवोच्यते नित्यं सर्ववेत्तृत्वतो हरिः' ।। इति वैशेष्ये ।।

'अनाद्यविद्ययाऽन्धत्वं जीवस्य यदि योग्यता ।
प्रयत्नश्चानुकूलः स्यादन्तवद्भवति ध्रुवम् ।
नित्यमेवान्यथाऽन्धत्वमयोग्या मानुषादयः ।
बद्धत्वं सर्वजीवानां नियमान्नित्यमेव तु ।
बद्धत्वं विष्णवधीनत्वमन्धत्वं तददर्शनम् ।
अतः क्वचिदनित्यत्वमन्धताया भविष्यति ।
मुक्तस्यापि तु बद्धत्वमस्ति यत्स हरेर्वशः ।
मुक्ताख्या दुःखमोक्षात्स्याद्बद्धाख्या हर्यधीनतः ।
नित्यबद्धा अपि ततो मुक्ता दुःखविमोक्षतः ।
नित्यमुक्तस्त्वेक एव हरिर्नारायणः प्रभुः ।
स्वतन्त्रत्वात्स्वतन्त्रत्वं तस्यैकस्य न चापरे' इति मुक्तविवेके ।।

'शतं सहस्राणि चतुर्दशेह परा गतिर्जीवगणस्य दैत्य ।
आरोहणं तत्कृतमेव विद्धि स्थानं तथा निःसरणं च तेषाम्' ।।

'कृष्णो मुक्तैरिज्यते वीतमोहैः' । 'मुक्तानां परमा गतिः' ।।
इति भारते ।।

'कलाः पञ्चदश त्यक्त्वा श्वेतद्वीपनिवासिनाम् ।
मुक्ताख्या विष्णवधीनास्ते स्वाधिकानां वशे स्थिताः ।
न चास्मादधिकं किञ्चित्सुखमस्ति हरेर्विना ।
नित्यमुक्तः स एवैकः स्वतन्त्रः स यतः सदा' ।।
इति माहात्म्ये ।। ७ ।।

देहस्थोऽपि न देहस्थो विद्वान् स्वप्नाद् यथोत्थितः ।
अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग् यथा ।। ८ ।।

'शरीरस्थोऽपि विद्वत्त्वान्न विष्णुर्बध्यते क्वचित् ।
अविद्वत्त्वात्तु तत्रैव देहे जीवस्तु बध्यते ।
स्वप्नदृग्वदिमे जीवा हरिः स्वप्नोत्थितो यथा ।
सदा तमोविहीनोऽपि ज्ञापनार्थमुदीर्यते' ।। इति विवेके ।। ८ ।।

इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ।
गृह्यमाणेष्वहंकुर्यान्न विद्वान् यस्त्वविक्रियः ।। ९ ।।

**गुणैरपि** गुणेषु अप्रधानैर्जीवैरप्रधानेषु विषयेषु ।

'आत्मनो वशगैर्जीवैरात्मनो वशगेषु च ।
दुःखेषु गृह्यमाणेषु मनआदिभिरिन्द्रियैः ।
अहं दुःखीति नैवेशस्त्वहङ्कुर्यात्परः पुमान् ।
जीवगं त्वेव तद्दुःखं विष्णुः पश्यति सर्वदा ।
अतो न दुःखभाग्विष्णुः स्वातन्त्र्यात्पुरुषोत्तमः ।
पारतन्त्र्यादहं दुःखीत्येवं जीवः प्रपश्यति ।
तस्मात्स दुःखभागुक्तो यावदीशः प्रसीदति' ।। इति स्वातन्त्र्ये ।।९।।

दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा ।
वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबध्यते ।। १० ।।

**गुणभाव्येन कर्मणा** गुणभूतः अस्वतन्त्रोऽहमस्मिन्कर्मणीति भावनीयेन ।

'अस्वतन्त्रः स्वतन्त्रोऽस्मीत्येवं जीवः प्रभावयन् ।
बध्यते हीशकोपेन राजभावेन भृत्यवत्' ।। इति च ।। १० ।।

एवं विरक्तः शयन आसनाटनमज्जने ।
दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ।। ११ ।।

न तथा बध्यते विद्वान् तत्र तत्राददन् गुणान् ।
प्रकृतिस्थोऽप्यसंसक्तो यथा खं सविताऽनिलः ।। १२ ।।

**एवं विरक्तः शयने ।** एवमस्वातन्त्रेण नित्यबद्धोऽपि । एवमात्मनोः स्वातन्त्र्यपारतन्त्र्ययोर्विद्वान् जीवोऽप्यविद्वज्जीववन्न बध्यते । एवं विद्वानित्यन्वयः ।

'नित्यबद्धोऽपि जीवो य आत्मनो नित्यबद्धताम् ।
विष्णुना नित्यमुक्तत्वं तस्य वेत्ति स मुच्यते ।।
तदधीनत्वबन्धे तु विद्यमानेऽप्यदुःखभाक् ।
देहस्थोऽपि न दुःखी स्यादन्यवत्किमु मुक्तिगः' ।।

इति प्राथम्ये ।। ११,१२ ।।

वैशारद्येक्षयाऽसङ्गशितया च्छिन्नसंशयः ।
प्रतिबुद्ध इव स्वप्नान्नानात्वाद् विनिवर्तते ।। १३ ।।

'नानात्वमिति वै मिथ्याज्ञानं कुत्रचिदुच्यते ।
वस्तुयाथात्म्यतोऽन्यत्वाज्ज्ञानस्योज्झो विवक्षितः' ।।

इति वाल्लभ्ये ।। १३ ।।

न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ।
वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः ।। १६ ।।

न कुर्यान्न वदेत् किञ्चिन्न ध्यायेत् साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ।। १७ ।।

'दोषश्चैव गुणश्चोभावीशतन्त्रौ न मे वशौ ।
इति जानन्न दोषी (न्न दोषः) स्याद्वर्जितोऽल्पगुणेन च' ।।
इति प्राथम्ये ।। १६,१७ ।।

शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि ।
श्रमस्तत्र भ्रमफलो(स्य) ह्यधेनुमिव रक्षतः ।। १८ ।।

'स्थितिशब्देन नियमः क्वचिज्जीवनमुच्यते ।
उत्थितत्वं क्वचिच्चैव क्वचिद्गतिविरोधिता' ।। इति शब्दनिर्णये ।।१८।।

(इदं तात्पर्यं श्रीनिवासतीर्थीये विंशे श्लोके गृहीतम्)

गां दुग्धदोहामसतीं च भार्यां
देहं पराधीनमसत्प्रजां च ।
वित्तं त्वतीर्थीकृतमङ्ग वाचं
हीनां मया रक्षति दुःखदुःखी ।। १९ ।।

यस्यां न मे पावनमङ्ग कर्म
स्थित्युद्भवत्राणनिरोधमस्य ।
लीलावतारेहितकर्म वा स्याद्
वन्ध्यां गिरं तां बिभृयान्न धीरः ।। २० ।।

'दुग्धदोहां तु गां रक्षेत् क्षीरमात्रप्रयोजनः ।
यथा तद्वद्धरेरन्यवाचोधारणमिष्यते' ।। इति हरिवंशेषु ।।१९,२०।।

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजं मनो मय्यर्प्य सर्वगे ।। २१ ।।

अर्थादन्यथात्वेन मनसः परिवर्तनं नानात्वभ्रमः ।

'जीवस्येशत्वविज्ञानं जीवानामेकता तथा ।
ईशस्य बहुता ज्ञानमीशस्यानीशता तथा ।
जगतोऽसत्यताज्ञानं नानात्वभ्रम उच्यते' ।। इति विवेके ।। २१ ।।

त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ।
अवतीर्णोऽसि भगवन् स्वेच्छोपात्तपृथग्वपुः ।। २८ ।।

**स्वेच्छोपात्तपृथग्वपुः** वसुदेवादिशरीरं स्वेच्छया येन (अनेन) स्वीकृतमिति ।

'नित्यानन्दशरीरोऽपि वसुदेवादिदेहगः ।
प्रदर्शयेज्जनिं स्वस्य नित्यं देहविवर्जितः ।
वसुदेवादिदेहेषु प्रवेशस्तस्य भण्यते ।
देहोपादानमिति तु न ह्यन्यो देह इष्यते ।।
अन्याभिमतदेहेषु प्रविष्टः सर्वदा हरिः ।
नान्यानभिमतो देहो विष्णोरस्ति कदाचन ।।
अतोऽशरीरो भगवान् पुत्रताभिमतिस्तु या ।
वसुदेवादिकानां तु सैव मिथ्यामतिर्भवेत् ।।
अन्याहंभावयुग्देह एवासौ हरिरास्थितः ।
न तदन्येषु देहेषु क्वचित्तस्य प्रवेशनम् ।।
मम पुत्रस्त्वयमिति भ्रामणाय यदा हरेः ।
वसुदेवादिदेहेषु तनूपात्तिस्तु सा गतिः ।।
अनुपात्तशरीरस्य तनूपात्तिरितीष्यते ।
तद्देहं पितृदेहत्वे उपादत्ते यतो हरिः' ।।

इति प्रकाशसंहितायाम् ।। २८ ।।

ज्ञात्वा ज्ञात्वाऽथ ये वै मां यावान् यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ।। ३३ ।।

ज्ञात्वाज्ञात्वेति वीप्सा ।

'ज्ञात्वाऽपि मम माहात्म्यं तत्रोत्सुकतया पुनः ।
विशेषाच्च विशेषेण ज्ञात्वा मामश्नुतेऽधिकम्' ।।
इति विज्ञाने ।। ३३ ।।

वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ।
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ।। ४४ ।।

'सर्वदेवोत्तमो वायुरिति ज्ञानान्न चापरम् ।
प्रियमस्ति हरेः किञ्चित्तथा वायोर्हरेर्विदः ।
भारतीवायुलक्ष्मीणामात्मनश्च यथाक्रमम् ।
आधिक्यज्ञानतो विष्णुः सर्वतः सम्प्रसीदति' ।। इति माहात्म्ये ।।

'वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभूतः ।
अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः' ।।
इति मोक्षधर्मेषु ।।

'तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद' ।।
इति च ।

'पञ्चभूतमनोबुद्धिरुद्राणां प्रतिदेहकम् ।
बाह्यतश्चापि नेतृत्वाद्वायुर्व्यष्टिः समष्टिकः' ।। इति प्रभञ्जने ।।४४।।

स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ।
क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ।। ४५ ।।

'स्वात्मनिस्थो हरिः पूज्य आत्मनामाऽशनादिकैः ।
तत्सम्बन्धादात्मशब्दो जीवे स्यादुपचारतः' ।।
इत्यात्मसंहितायाम् ।। ४५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे एकादशोऽध्यायः ।।



## द्वादशोऽध्यायः

श्रीभगवानुवाच–

न रोधयति मां योगो न साङ्ख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्ते न दक्षिणाः ।। १ ।।

व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः ।
यथाऽवरुन्धेन्मत्सङ्गः सर्वदुःखापहो हि माम् ।। २ ।।

'सङ्गस्तु गुणसम्प्रीतिर्गुणवत्त्वेऽतिनिश्चयात् ।
स चेद्धरौ भवेत्तेन मुच्यते नात्र संशयः ।
अपरोक्षदृशेर्हेतुर्भवेत्स स्याद्यदि क्षमः ।
अन्यथा सुखभागेन यद्दृशिर्मोक्षकारणम्' ।। इति दर्शने ।। १-२ ।।

मत्सङ्गेन तु दैतेया यातुधाना मृगाः खगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ।। ३ ।।

विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ।। ४ ।।

'ज्ञात्वाऽपि हरिविद्वेषी तमो याति न संशयः ।
विशेषरूपस्याज्ञोऽपि गुणवत्त्वेऽतिनिश्चितः ।
गुणसम्प्रीतिमान्नित्यं तं दृष्ट्वा मुक्तिमेष्यति ।
अथवा सुखभागेव स्याद्यावद्दर्शनोपगः' ।। इति व्यक्ते ।।

'हरिसङ्गविहीनस्तु हरेर्दर्शनवानपि ।
न मुच्यतेऽखिलज्ञोऽपि तमो याति च निश्चयात् ।
गुणैरन्यैर्विहीनोऽपि तद्भक्तेष्वपि च क्रमात् ।
सङ्गवान्सुखभागेव स्याद्गुणैर्मुक्तिमेति वा ।
स्वभक्तसङ्गहीनस्य व्युत्क्रमात्सङ्गिनोऽपि वा ।
स्वसङ्गविघ्नकृद्विष्णुस्तत्सज्जेतैषु तत्र च' ।। इति सत्सङ्गे ।। ३-४ ।।

ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रतातप्ततपसो मत्सङ्गान्मामुपागताः ।। ७ ।।

केवलेन हि भावेन गोप्यो गावः खगा मृगाः ।
येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ।। ८ ।।

यं न योगेन सांख्येन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद् यत्नवानपि ।। ९ ।।

मत्कामा रमणं जारं मत्स्वरूपा(जारमस्वरूप)विदोऽबलाः ।
ब्रह्म मां परमं प्रापुः शतशोऽथ सहस्रशः ।। १३ ।।

'गोपिकाद्या दिवं गत्वा हरिं ज्ञात्वा यथातथम् ।
परं पदं ययुः पूर्वसङ्गादेव शुभोचिताः' ।। इति च ।। ७-९,१३ ।।

**तस्मात् त्वमुद्धवोत्सृज्य चोदितां (चोदनां) प्रतिचोदनाम् ।**
**प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ।। १४ ।।**

**मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।**
**याहि सर्वात्मभावेन यस्मिन्नस्त्यकुतोभयम् ।। १५ ।।**

'श्रोतव्यं च श्रुतं चैव वक्तव्यं कार्यमेव च ।
निवर्त्यं च हरेः पूजेत्येवं कुर्यान्न चाक्रमात् ।
एवं कर्ता तु संन्यासी सर्वोत्सर्गाद्धरौ स्मृतः ।
अन्यथा नैव संन्यासी निष्क्रियोऽपि शिला यथा' ।।
इति कर्मविवेके ।।

'नाहं कर्ता तु सर्वस्य कर्तैको विष्णुरव्ययः ।
इति वित्त्वा तु सन्यासी नान्यथा तु कथञ्चन' ।। इति निवृत्ते ।।

'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः' ।। इति च ।।१४-१५।।

उद्धव उवाच–

**संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ।**
**न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ।। १६ ।।**

वायौ मुख्यधियेत्युक्तवा विशेषतो गोपिकाप्रशंसनात्संशयः शृण्वत इति चोदयति ।। १६ ।।

**श्रीभगवानुवाच–**

**य एष जीवो विवरप्रसूतिः**
**प्राणेन घोषेण गुहां प्रविष्टः ।**
**मनोमयं सूक्ष्ममुपैति रूपं**
**मात्रा स्वरो वर्ण इति स्थविष्ठम् ।। १७ ।।**

गोपिका अपि मामापुः किमु वाय्वाद्या इति दर्शयितुं गोपिकाप्रशंसनम् । सर्वैर्गुणैः सर्वोत्तमस्तु वायुरेव । स एव च हिरण्यगर्भ इति दर्शयितुमाह । **य एष जीवो विवरप्रसूतिरित्यादि ।** विशेषेण वराणामहङ्कारादीनामपि प्रसूतिकर्ता । प्राणेन विष्णुना घोषेण वेदात्मिकया प्रकृत्या मनोमात्रादयश्च हिरण्यगर्भस्य देव्याः परमात्मनश्च व्यक्तिस्थानानीत्युक्तम् । 'प्राणेन घोषेण च सह विवरप्रसूतिर्मनोमयं रूपमुपैति' ।।
इत्यादिना ।। १७ ।।

**यथाऽनलः स्वे(खे)ऽनिलबन्धुरूष्मा**
**बलेन दारुण्यधिमथ्यमानः ।**
**अणुः प्रजातो हविषा समिद्ध्यते**
**तथैव मे व्यक्तिरियं हि वाणी ।। १८ ।।**

**एवं गतिः कर्म रतिर्विसर्गो**
**घ्राणो रसो दृक् स्पर्शः श्रुतिश्च ।**
**सङ्कल्पविज्ञानमथाभिमानः सूत्रं**
**रजः सत्वतमोविकारः ।। १९ ।।**

तत्रापि विशेषतो भगवत एव व्यक्तिस्थानमित्याह । **यथाऽनल** इत्यादिना ।। १८,१९ ।।

अयं हि जीवस्त्रिवृदब्जयोनि-
रव्यक्त एको जगतां यथाऽऽद्यः ।
विश्लिष्टशक्तिर्बहुधै(धे)व भाति
बीजानि योनिं प्रतिपद्य यद्वत् ।। २० ।।

यस्मिन्निदं प्रोतमशेषमोतं
पटे यथा तन्तुवितानसंस्था ।
य एष संसारतरुः पुराणः
कर्मात्मकः पुष्पफले प्रसूते ।। २१ ।।

विशेषेण श्लिष्टशक्तिः । अनपगतसामर्थ्यः । यथैकं कलमादिबीजं भूमावुप्तं बह्वङ्कुरं भवति एवं परमात्मानुगृहीतो ब्रह्माऽहङ्कारादिषु बहुधा व्यक्तीभवति ।।

'सुपर्णशेषरुद्रादिप्रसूतिश्च चतुर्मुखः ।
सर्वजीवोत्तमो जीवो गुणैर्ज्ञानसुखादिभिः ।
विष्णुभक्त्यादिभिः सर्वैर्नियमात्सार्वकालिकम् ।
मुक्तावपि न सन्देहः स हि देवेन विष्णुना ।
प्राणप्राणेन जगतामीशेन रमया तथा ।
वेदात्मिक्या च सहितः सूक्ष्मः सन्मनसि स्थितः ।
वीन्द्रादीनां तु सर्वेषां मात्रावर्णस्वरेषु च ।
स्थूलरूपी सदा तिष्ठन्नेवं श्रोत्रादिखेषु च ।
सर्वेषां प्रेरको ह्येको ज्ञानानन्दबलैस्त्रिवृत् ।

नित्यशक्तिः सर्वगः सन्बहु(धेव)धैव प्रतीयते ।
तस्मिन्नोतमिदं सर्वं पटे लक्षणतन्तुवत् ।
स एव वायुरुद्दिष्टो वायुर्हि ब्रह्मतामगात् ।
विशेषतो हरेर्व्यक्तिस्थानान्येतानि सर्वशः ।
मन आदीन्यहङ्कारो ब्रह्मा वेदात्मिका रमा ।
त्रिगुणात्मिका च सैव श्रीः सैवोक्ता संविदात्मिका ।
तस्या अपि नियन्तैको विष्णुः सर्वेश्वरेश्वरः ।
यथा दारुषु सूक्ष्मः सन्मथितोऽग्निः समिध्यते ।
तथा वेदादिषु हरिर्मथितः सम्प्रदृश्यते ।
व्यक्तिस्थानान्यथैतानि वेदादीनि हरेर्विदुः' ।। इति तन्त्रभागवते ।।

'मनसि व्यक्ततां यामि तस्माद्व्यक्तिर्हि मे मनः' ।। इति भारते ।।

'यथैव वस्त्रे दीर्घं च तिर्यक्चापि सुसंस्थिता ।
तन्तुभिः क्रियमाणैव पद्माद्याकारसंस्थितिः ।
यथा जीर्णानि वस्त्राणि तन्त्वाधाराणि वा पुनः ।
कन्थावयवभूतानि तद्वदेतच्चतुर्मुखे ।
सोऽपि तद्वद्धरौ नित्यं संस्थितः श्रीरपि स्फुटम्' ।।
इति प्रातिस्विके ।। २०,२१ ।।

द्वे अस्य बीजे शतमूलस्त्रिनालः
पञ्चस्कन्धः पञ्चरसप्रसूतिः ।
दशैकशाखो द्विसुपर्णनीड-
स्त्रिवल्कलो द्विफलः खं प्रविष्टः ।। २२ ।।

अदन्ति चैकं फलमस्य गृध्रा
ग्रामेचरा एकमरण्यवासाः ।
हंसा य एवं (एतं) बहुरूपमिष्टं
मायामयं वेद स वेद वेदम् ।। २३ ।।

एवं गुरूपासनयैकभक्त्या
विद्याकुठारेण शितेन धीरः ।
विवृश्च्य जीवाशयमप्रमत्तः
सम्पद्य चात्मानमथ त्यजास्त्रम् ।। २४ ।।

'जगद्वृक्षस्य बीजे द्वे ब्रह्मा चैव सरस्वती ।
मूलभूतानि कर्माणि मनो बुद्धिरहङ्कृतिः ।
नालत्वेन समुद्दिष्टाः खमाद्याः स्कन्धसंज्ञिताः ।
एकादशेन्द्रियाण्येव शाखास्तु त्रिगुणास्त्वचः ।
प्रवृत्तं च निवृत्तं च फले अस्य प्रकीर्तिते ।
पुष्पमैहिकमुद्दिष्टं रसाः शब्दादयस्तयोः ।
प्रवृत्ताश्च निवृत्ताश्च पक्षिणस्तत्र संस्थिताः ।
वृक्षस्य पृथिवीवच्छ्रीर्विष्णुराकाशवायुवत् ।
तस्या अपि सदाधार एवं ज्ञात्वा विमुच्यते' ।। इति निवृत्ते ।।

'प्राकृतान्तःकरणजं ज्ञानमस्त्रं सृतिच्छिदम् ।
तदेव तेन संछेद्यं चित्तं प्रकृतिसम्भवम् ।
तेनैव सह संत्याज्यं नैव पूर्वं कथञ्चन ।
ज्ञानं प्रकृतिजं चापि मूलनाशे विनश्यति ।

ततः परं स्वरूपेण ज्ञानेनैव जनार्दनम् ।
वेत्ति मुक्तस्तथाऽऽत्मानं जीवानन्यांश्च सर्वशः' ।। इति माहात्म्ये ।।

'बीजभूतावपि ह्यस्य ब्रह्मा चैव सरस्वती ।
न रिष्यतो जगत्सृष्टौ वटवृक्षादिबीजवत् ।
स्वकार्यतो महान्तौ च गुणतो रूपतस्तथा ।
पृथिव्युदकवत्तस्माद्बीजत्वं न तु बीजवत् ।
व्यञ्जकत्वान्न चाल्पत्वान्महाक्ष्मावद्रमा स्मृता ।
अण्डो महाक्ष्मा सम्प्रोक्तस्ततः पृथ्व्युदकं तथा ।
जायते नित्यशस्तस्माद्भुक्तं भुक्तं न हीयते ।
तत्राप्युदकवद्ब्रह्मा मृद्वच्चापि सरस्वती ।
जलाधारा यतो मृच्च सर्वत्रापि व्यवस्थिता ।
अन्यथा तु रजोभूता नीयते वायुनाऽखिला ।
अथवा सर्वनाशः स्याज्जलाधारा ततः स्मृता ।
वटादिबीजवत्तस्य पुण्यापुण्यमुदीरितम् ।
बाह्योदवच्चाग्निवच्च विष्णुरेव प्रकीर्तितः' ।। इति सत्यसंहितायाम् ।।

श्रियादेरप्याप्यायकत्वाद्बाह्योदवत् । ब्रह्मादेरपि लयकर्तृत्वादग्निवत् ।
आधारत्वात्सुखदत्वाच्च वायुवत् । अवकाशप्रदत्वाद्व्योमवद्विष्णुः ।

'व्रीह्यादिवत्तु मूलत्वं कर्मणां जगतः स्मृतम् ।
उदवत्पृथिवीवच्च ब्रह्मणो वाच एव च ।
मूलभूवच्छ्रियश्चैव मूलभूरण्डमुच्यते ।
बाह्योदाग्नीरखंवत्तु विष्णोर्बीजत्वमिष्यते' ।। इति विश्वसंहितायाम् ।।

देहेन्द्रियमनोवाक्षु स्थितो भक्त्यादिसाधकः ।
सुपर्णशेषरुद्रादेरपि ब्रह्मा चतुर्मुखः ।

अतो भक्त्यादिकाः सर्वे गुणास्तस्यैव सर्वगाः ।
अतिरिक्ताश्च सम्पूर्णाः सुपर्णादेः शताधिकाः ।
सुपर्णादिभिरज्ञातास्तदभीमानवर्जिताः ।
ब्रह्मणस्तु पुनः सन्ति तेषां कर्ता जनार्दनः ।
तस्मात्सर्वाधिको ब्रह्मा गुणैः सर्वैर्न संशयः ।
वर्णस्थो वर्णनामाऽसौ स्वरस्थः स्वरनामकः ।
मनःस्थश्च मनोनामा तन्नामा चक्षुरादिगः ।
तस्य सर्वाणि नामानि मुख्यतः कवयो विदुः ।
तत्स्थानत्वादिन्द्रियादेर्वर्णादेश्चोपचारतः ।
एवमस्योपचारेण विष्णोः साक्षात्तु मुख्यतः' ।। इति शब्दनिर्णये ।।

'कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः ।
महिष्योऽष्टौ विना यास्ताः कथिताः कृष्णवल्लभाः ।
ताभ्यः सहस्रसमिता यशोदा नन्दगेहिनी ।
ततोऽप्यभ्यधिका देवी देवकी भक्तितस्ततः ।
वसुदेवस्ततो जिष्णुस्ततो रामो महाबलः ।
न ततोऽभ्यधिकः कश्चिद्भक्त्यादौ पुरुषोत्तमे ।
विना ब्रह्माणमीशेशं स हि सर्वाधिकः स्मृतः'
इत्यन्तर्यामिसंहितायाम् ।।

'पापद्वेषादिका दोषा अवराणां न संशयः ।
भक्त्यादिगुणपूगस्तु पराणामा विरिञ्चतः ।
स्वातन्त्र्यात्सर्वदेहेषु स्थितानामपि सर्वशः ।
स्पृश्यन्ते नैव दोषैस्ते गुणादानैकतत्पराः' इति विवेके ।।

'यदु किञ्चेमाः प्रजाः । शोचन्त्यमैवासां तद्भवति । पुण्यमेवामुं गच्छति । न ह वै देवान्पापं गच्छति' इति च ।। २२-२४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे द्वादशोऽध्यायः ।।



## त्रयोदशोऽध्यायः

सत्वाद् धर्मो भवेच्छुद्धात् पुंसो मद्भक्तिलक्षणः ।
सात्विकोपात्तया ज्ञानं ततो धर्मः प्रवर्तते ।। २ ।।

धर्मात्पुनः सत्वोद्रेकः । सत्वोद्रिक्तया बुध्या पुनः सत्वोद्रेकात्पुनर्धर्मोद्रेकः ।। २ ।।

वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ।
एवं गुणव्यत्ययजो वेदः शाम्यति तद् यथा ।। ७ ।।

वेदो वृत्तिज्ञानम् ।

'मुक्ताश्चाधीयते वेदान् जडज्ञानबहिष्कृताः ।
स्वरूपभूतज्ञानेन पश्यन्तः सर्वमञ्जसा' ।। इति तात्त्विके ।। ७ ।।

श्रीभगवानुवाच–

एवं पृष्टो महादेवः स्वयम्भूर्भूतभावनः ।
ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ।। १८ ।।

स मामचिन्तयद् देवः प्रश्नपारविनिश्चयम् ।
तस्याहं हंसरूपेण समीपमगमं तदा ।। १९ ।।

प्रश्नो बीजमस्येति प्रश्नबीजं परिहारम् । गुणानां चेतसश्च कर्म कारण-मिति मन्वानः कर्मधीः ।

'ब्रह्मा पृष्टस्तु योगीन्द्रैः सनकाद्यैर्मनोगतेः ।
कारणं विषयेष्वद्धा कर्मेति प्रत्यपद्यत ।
हेतुरन्योऽपि तत्रास्तीत्येवं जानन्नपि प्रभुः ।
विशेषतो मनस्तत्र नाधाज्जानन् हरेः प्रियम् ।
स्वात्मना परिहारोक्तिस्तदा ह्यासीद्धरेः प्रिया ।
अतः स तत्प्रियं जानन्नाकरोत्तद्विचारणम् ।
तमेवाचिन्तयद्देवः प्रश्ननिर्णयकारणात् ।
भ्रमतीव मनः क्वापि ब्रह्मणो विष्णुमायया ।
सर्वज्ञस्यापि तत्रात्मा वक्तुमिच्छेज्जनार्दनः ।
तज्ज्ञात्वा चिन्तितं तस्य चिन्तयत्यमुमेव तु ।
न स्वयं चिन्तयत्यर्थं स हि तद्भाववित्सदा ।
अन्ये त्वज्ञानसंयुक्ता मोहमीयुर्यथाक्रमम् ।
तस्य मध्यन्दिने सूर्ये क्षोभवत्क्षोभमात्रकम् ।
नैवाज्ञानं यथा सूर्ये तमो नास्ति कदाचन' ।।

इति भावविवेके ।। १८ ।।

वस्तुनो यद्यनानात्वमात्मनः प्रश्नः ईदृशः ।
कथं घटेत वो विप्रा वक्तुं वाऽनेक आश्रयः ।। २२ ।।

**आत्मनो वस्तुनः** परमात्मवस्तुन एकत्वं यद्यङ्गीकृतम् । तदा कथं प्रश्नो घटेत ।। न हि परमात्मनोऽन्योऽत्र ब्रह्मणा पूज्यः स्यादभिवन्दनादिना । तस्माद्ब्रह्मणो वन्द्यः परमात्मैव स चैक एव अतः कथं **प्रश्नः** परिहारो वा ।।

पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ।
को भवानिति वः प्रश्नो वाचारम्भो निरर्थकः ।। २३ ।।

वस्तुतः समानेषु हिरण्यगर्भावरत्वात्तद्वन्द्यत्वाभावापेक्षया । तस्माद्ब्रह्मणो वन्दनानन्तरं विचारो न घटते । तस्मात्को भवानिति वाचा प्रारब्धः (आरब्धः) प्रश्नो निरर्थकः ।। २३ ।।

मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ।
अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसा ।। २४ ।।

त(य)स्मान्मन आदिभिर्गृह्यमाणमहं न भवाम्येव । स्वयमपि प्रसादात्कथञ्चिद्गृह्यत इत्यत आह । मत्तोऽन्यदिति । यन्मनआदिभिर्विचार्य मत्तोऽन्यत्वेनैव ज्ञायते । तदहं न भवाम्येवेति बुध्यध्वम् । विचारितस्यापि पुनः संशयकारणं परिकल्प्य संशयो न कर्तव्यः । अतः को भवानिति नारब्धव्यः, गुणेष्वाविशते चेत इत्येव प्रश्न आरब्धव्यः ।

'न युष्माकमपि प्रश्नो घटेतायं कथञ्चन ।
मामृते न हि वन्द्योऽस्ति विरिञ्चेः क्वापि कश्चन ।
अभिवन्दितपादं मां विरिञ्चेन कथं पुनः ।
पृच्छथान्ये समा यस्मादवरत्वे चतुर्मुखात् ।
देवा मनुष्याः पितरो गन्धर्वा असुरास्तथा ।
इति पञ्चात्मकं सर्वं ब्रह्मणस्त्ववरं यतः ।

यन्मदन्यद्विचारेण गृह्यते तन्न चास्म्यहम् ।
इति जानीध्वमद्धैव मत्प्रसादाद्धि मद्दृशिः ।
अन्यत्स्वभावतो दृश्यं मम प्रेरणयैव तु ।
तस्माद्विवक्षितार्थे तु प्रश्नारम्भो न मद्गतः' ।। इति तन्त्रभागवते ।।

'इदं हि विश्वं भगवानिवेतरः' इति च ।

'प्रकृतेर्व्यतिरिक्तो यः पुरुषश्चेति कथ्यते ।
तं विद्यात्परमात्मानं वासुदेवेति यं विदुः' ।। इति भारते ।।

'प्रकृतेः प्राकृताच्चैव व्यतिरिक्तं गुणाधिकम् ।
ये विदुः परमात्मानं ते यान्ति परमं पदम्' ।। इति च ।।

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्' ।। इति च ।। २४ ।।

गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ।
जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ।। २५ ।।

मय्येव मनो यस्य स मदात्मा तस्योभयं देहे दग्धमभवत् ।। २५ ।।

गुणेषु वाऽऽविशेच्चित्तमभीक्ष्णं गुणसेवया ।
गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ।। २६ ।।

मत्स्वरूपे तदुभयं त्यजेत् । मयि स्थिताश्चेतो गुणाश्चेति ।

'विष्णुस्था विषयाः सर्वे विष्णावेव मनो मम ।
इति मय्यर्पयन्सर्वं त्यजेत्तत्तं न बाधते' ।। इति साम्ये ।। २६ ।।

यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तितः ।
मयि तुर्ये स्थितो जह्यात् त्यागस्तु गुणचेतसाम् ।। २८ ।।

**गुणचेतसां त्याग** एव बन्धत्यागः ।। २८ ।।

यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ।
जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ।। ३० ।।

'भिन्नस्य त्वेकभावेन तथैकस्य च भेदतः ।
ज्ञानं नानार्थधीः प्रोक्ता नानात्वादर्थतद्धियोः' ।।

इति ब्रह्मतर्के ।। ३० ।।

असत्त्वादात्मनोऽन्येषां भावानां किंकृताऽभिदा ।
गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ।। ३१ ।।

'अभिधा किङ्कृतैतेषां भावानां परमेश्वरे ।
यतोऽसत्वमशक्तत्वाद्भावानां तस्य शक्तता ।
ततः सत्वं साधुभावः सत्वमित्युच्यते बुधैः ।
साधुभावश्च शक्तस्य ततोऽन्याऽसाधुता ततः ।
अभेदे जगतो विष्णोर्या वाचो ये च हेतवः ।
स्वप्नजाग्रत्कल्पकवत्सर्वे ते भ्रमदर्शिताः' ।।

इति शश्वत्संहितायाम् ।। ३१ ।।

यो जागरे बहुविधान् क्षणधर्मिणोऽर्थान्
भुङ्क्ते समस्तकरणो हृदि तत्सदृक्षान् ।
स्वप्नेऽथ सुप्त उपसंहरते स एकः
स्मृत्यन्वयात् त्रिगुणवृत्तिदृगिन्द्रियेशः ।। ३२ ।।

'दक्षिणाक्षिस्थितो विष्णुर्भुङ्क्तेऽर्थान् जाग्रदास्थितान् ।
कण्ठसंस्थस्तथा स्वप्नान् जीवानन्दं च सुप्तिगः ।
श्रुत्यन्वयात्स्मृतिभ्यश्च स एकः परमेश्वरः ।
अस्वतन्त्रस्य जीवस्य स्वतन्त्रो जाग्रदादिदः ।
स्वयं स्वप्नादिहीनः सन् क्रीडते पुरुषोत्तमः' ।। इति तत्त्वे ।।

'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति' ।।
इत्यादि च ।। ३२ ।।

वीक्षेत विभ्रममिमं मनसो विलासं
दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया
स्वप्ने यथा त्रिगुणसर्गकृतो विकल्पः ।। ३४ ।।

जाग्रदादिषु परमात्मभेदं विभ्रमं वीक्षेत ।

'जाग्रदादिकरो देवः परमात्मैक एव तु ।
इति वीक्षेत सततं मुच्यते संसृतेरतः' ।। इति प्रकाशसंहितायाम् ।

यदा विभ्रमोऽयमिति दृष्टस्तदैव विनष्टः । श्रुतियुक्तिभिर्विचारितेऽतिलोलः । क्षिप्रं विनश्यतीत्यर्थः । अलातस्य चक्राकारत्वभ्रमवत् परमात्मभेदभ्रमः । त्रिगुणैस्तत्कार्यैः पापादिभिश्च बद्धः सन् विज्ञानरूपं परमात्मानं भ्रान्त्या बहुधा पश्यति ।

'देहभेदेष्ववस्थासु प्रादुर्भावेषु चैकलम् ।
ज्ञानानन्दैकसद्रूपं भ्रान्त्या भिन्नं प्रपश्यति ।
सा च भ्रान्तिर्विनश्येत यदा भ्रान्तित्ववेदनम् ।

अतिक्षिप्रं विनश्येच्च न स्थिरं दिग्भ्रमादिवत् ।
त्रिगुणैर्बन्धिता जीवा ज्ञप्तिमात्रं जनार्दनम् ।
पश्यन्ति बहुधा स्वप्ने यथैकं बहुधा क्वचित् ।
अभिन्नोऽपि विभिन्नेषु व्यवहारो यथा भवेत् ।
तथैव व्यवहाराय शक्तत्वान्नैव दूषणम् ।
ईशस्य तु तदन्येषामपि यच्छक्तिदायकः' ।। इति ब्रह्मतर्के ।।

अलातभ्रामको यदा निवर्तते तदैव भ्रमो निवर्तते । तद्वद्यदा भ्रमनिवृत्तिमिच्छति तदैव गुरूपसदनान्निवर्तयितुं शक्यः ।

'अशक्योऽप्यतिशक्योऽयं विनिवर्तयितुं भ्रमः ।
ईशस्थो गुरुसम्पत्त्या यदि शुद्धमनाः पुमान्' ।।
इति सम्यग्ज्ञाने ।। ३४ ।।

दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततर्ष-
स्तूष्णीं भवेन्निजसुखानुभवो निरीहः ।
सन्दृश्यते क्व च यदीदमवस्तुबुद्ध्या
त्यक्तं भ्रमाय न भवेत् स्मृतिरानिपातात् ।। ३५ ।।

निपातमन्धन्तमः । मोक्षमारभ्य तावत्पर्यन्तं स्मृतिर्यस्माज्ज्ञानिनो वर्तते अतो मूढेषु स्थितो भ्रमो यद्यपि संदृश्यते तेन तथापि भ्रमाय न भवति । फलं हि निपातं स्मरति ।। ३५ ।।

देहं च नश्वरमवस्थितमु(त्थि)ज्झितं च
सिद्धो न पश्यति यतोऽध्यगमत् स्वरूपम् ।

दैवादुपेतमथ दैववशादपेतं
वासो यथा परिवृ(कृ)तं मदिरामदान्धः ।। ३६ ।।

त्रिगुणसर्गकृतो विकल्प इत्युक्तम् । ज्ञानिनोऽपि देहवत्त्वेन त्रिगुणित्वाद्विकल्पो भवतीत्यत आह । देहं च नश्वरमिति ।। ३६ ।।

देहोऽपि दैववशगः खलु कर्म यावत्
स्वारम्भकं प्रति समीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः ।। ३७ ।।

'आदरो भजनं भक्तिर्बहुमानं च सेवनम् ।
पर्यायवाचकाः सर्वे स्मृतिस्तज्जन्म(न्य) कर्म च' ।।
इति शब्दनिर्णये ।। ३७ ।।

मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ।
सुहृदं पर(प्रिय)मात्मानं साम्यासङ्गादयो गुणाः ।। ४० ।।

'अपूर्णगुणरूपास्तु सम्पूर्णगुणरूपकम् ।
भजन्ति परमं ब्रह्म देवास्त्रिगुणवर्जितम्' ।।
इति कालसंहितायाम् ।। ४० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे त्रयोदशोऽध्यायः ।।

***

## चतुर्दशोऽध्यायः

तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ।
ततो भृग्वादयोऽगृह्णन् सप्त ब्रह्म महर्षयः ।। ४ ।।

'रुद्रमिन्द्रं कुमारं च विनैवान्याग्रजो मनुः ।
ब्रह्मपुत्रेष्वादिसृष्टावन्यथात्वं पुनर्जनेः' ।। इति स्कान्दे ।।

'पूर्वसृष्टौ पूर्वजा ये तेऽधिकाः सर्वतो गुणैः ।
अनाद्यनन्तकालेषु मुक्तावपि यथाक्रमम्' ।। इति निबन्धे ।। ४ ।।

एवं प्रकृतिवैचित्र्याद् भिद्यन्ते मतयो नृणाम् ।
पारम्पर्येण केषाञ्चित् पाखण्डमतयोऽपरे ।। ८ ।।

अनेन पारम्पर्येण केषाञ्चिदेव देवादीनाम् ।। ८ ।।

मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ।। ९ ।।

धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ।
अन्ये वदन्ति चार्थं वा ऐश्वर्यं त्यागभोजने ।
केचिद् यज्ञं तपो दानं व्रतानि नियमान् यमान् ।। १० ।।

आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः ।
दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचार्पिताः ।। ११ ।।

'मद्भक्तिवर्जितं श्रेयो ये मन्यन्ते दुराशयाः ।
तेषामन्ते तमो घोरमनन्तं प्राप्यते ध्रुवम्' ।।
इति मान्यसंहितायाम् ।। ११ ।।

न तथा मे प्रियतम आत्मयोनिर्न शङ्करः ।
न च सङ्कर्षणो न श्रीर्नैवाऽत्मा च यथा भवान् ।। १५ ।।

'कृपानिमित्ता या प्रीतिर्नीचभक्तेषु साऽधिका ।
आन्तरैव तु या प्रीतिः सा तूच्चेषु यथाक्रमम् ।
यथा कश्चित्स्वमात्मानं प्रियां पुत्रमथापि वा ।
अतिहाय कृपायुक्तो भिक्षवेऽन्नं ददात्यपि ।
कदाचिदेव न पुनः स्वात्मादेः सार्वकालिकम् ।
योगक्षेमवहत्वं च नित्यं स्वात्मादिषु स्फुटम् ।
एवमेव परेशस्य भक्तेषु श्रियजादिषु' ।। इति प्रियविवेके ।।

'यादवेभ्यश्च सर्वेभ्य उद्धवो भगवत्प्रियः ।
उद्धवाच्च प्रियतमः प्रद्युम्नस्तु महारथः ।
तस्मादपि प्रियतमो रामः कृष्णस्य सर्वदा ।
नैव तस्मात्प्रियतमो विनैकं तु चतुर्मुखम् ।
सर्वेऽभ्योऽपि प्रियतमा हरेः श्रीरेव वल्लभा ।
नैव तस्याः प्रियतमो विना स्वात्मानमेव तु' ।।
इति यादवाध्यात्मे ।। १५ ।।

निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।
अनुव्रजाम्यहं नित्यं पूयेय स्वाङ्घ्रिरेणुभिः ।। १६ ।।

स्वाङ्घ्रिरेणुभिस्तं शोधयामीत्यनुव्रजामि ।

'अनुगच्छति विष्णुस्तु स्वभक्तं तस्य शुद्धये ।
तस्याङ्घ्रिरेणुभिर्वातनीतैरग्रेसरः शुचिः ।

अग्रतो गमने विष्णोः पादस्पृष्टं रजो भवेत् ।
अतः स्वभक्तं पूयेयेत्यनुव्रजति केशवः' ।। इति सङ्ख्याने ।।१६।।

कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनाऽऽनन्दाश्रुकलया तुष्येत् भक्त्या विनेश्वरः ।। २३ ।।

वाग्गद्गदा द्रवते यस्य चित्तं
रुदत्यभीक्ष्णं हसति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति ।। २४ ।।

'चित्तद्रवस्तथा स्थैर्यं प्रसादो भक्तिलक्षणम् ।
आधिक्येन तु तत्रापि स्थैर्यमेव विशेषतः ।
दम्भस्य चलभक्तेश्च यस्मादश्र्वादिकं भवेत् ।
दम्भादिपरिहारार्थं निगृह्णीयाच्च धीरधीः ।
अत आध्यात्मिकैः क्लेशैराधिभूताधिदैविकैः ।
वाक्यैश्च वेदतन्त्राद्यैरुपदेशैश्च तादृशैः ।
बलवच्छासनैर्वापि यस्य भक्तिर्न चाल्यते ।
स एव परमो भक्तो विष्णोर्हृदयवल्लभः' ।।
इति भक्तिविवेके ।। २३-२४ ।।

स्त्रीसङ्गसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ।
क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ।। २९ ।।

न तथाऽस्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः ।
योषित्सङ्गाद् यथा पुंसो यथा तत्सङ्गिसङ्गतः ।। ३० ।।

'केशवे त्वन्यथाबुद्धिः सैव स्त्री सम्प्रकीर्तिता ।
त्रिकालदुःखदत्वेन पुंसा सह निवासनात्' ।।

'जुष्टत्वाद्योषिदित्युक्ता वननाद्वनितेति च ।
प्रमादकरणत्वात्तु प्रमदेति च गीयते ।
त्यजेत्तत्सङ्गिनां सङ्गं बुभूषुः पुरुषः सदा ।
न तादृशः कचिद्दोषः पुरुषस्यासुखावहः ।
क्षुद्रपापानि पापानि चोपपातकपातके ।
महापातकनामानि सुमहापातकान्यपि ।
तथा स्वतिमहान्तानि पातकानि विदो विदुः ।
पिपीलिकावधादीनि क्षुद्रपापोदितानि च ।
पापमस्थिमतां हत्या फलचौर्यादिरेव वा ।
परदारादिकं चापि ह्युपपातकसंज्ञितम् ।
पातकं शूद्रहत्यादि ब्रह्महत्यादिकं महत् ।
देवस्वहरणादीनि सुमहान्ति विदो विदुः ।
देवावज्ञा सतां चैव ततोऽपि सुमहत्तरा ।
महन्महत्तरा तस्या अवज्ञा केशवे तु या ।
केशवस्य समोऽस्तीति केशवोऽस्म्यहमित्यपि ।
ब्रह्माद्याः केशवात्मानः श्रीर्वा निर्गुण इत्यपि ।
मुक्तस्य तद्भावमतिररूपत्वमतिस्तथा ।
त्रिगुणात्मकदेहोऽस्याप्यस्तीत्यपि तु या मतिः ।
जन्ममृत्यादिबुद्धिर्वा दुःखाज्ञानादिबोधनम् ।
तस्यापि परतन्त्रत्वविज्ञानं च तदुत्तमः ।
अस्तीति या मतिस्तस्य वशादन्यस्य कस्यचित् ।
अस्तीति भावनेत्याद्या अवज्ञाः सम्प्रकीर्तिताः' ।। इति धर्मविवेके ।।

'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्' ।

'अपि चेत्सुदुराचारो भजते मामनन्यभाक्' ।। इत्यादि च ।।

'बाध्यमानोऽपि मद्भक्तः' । इत्यादि च ।

'परदारदृशिः प्रोक्ता क्षुद्रपातकसंज्ञिता ।
उपपातकं तद्गतिश्च वर्णबाह्येषु पातकम् ।
महापातकसंज्ञं तु पित्रादेर्दारधर्षणम् ।
दारदृष्टिः स्वोत्तमानां मानुषाणां स्वभावतः ।
सुमहापातकं प्रोक्तं तद्गतिः सुमहत् ततः ।
ऋषिदारेषु मनसो गतिरेव ततोऽधिका ।
देवदाराभिकामानां सङ्गिसङ्गस्ततोऽधिकः ।
किमु विष्णोस्ततो योषित्सङ्गस्य व्यत्ययस्थितेः ।
न समं पातकं क्वापि न हि स्वस्त्र्यभिकामतः ।
अवज्ञाता माधवादेस्तस्मात्तं दूरतस्त्यजेत् ।
मानुषेषु तु दुःखित्वं क्षुद्रपापफलं स्मृतम् ।
पापात्तु वर्णबाह्यत्वं तिर्यग्योनिगतिस्तथा ।
सहस्रवर्षनरकं क्षुद्रपातकजं फलम् ।
उपपातकतश्चापि नरकं युगमात्रकम् ।
चतुर्युगावसानं तु पातकस्य फलं स्मृतम् ।
महापातकजन्यं च कल्पावधि समीरितम् ।
सुमहापातकाच्चापि यावद्ब्रह्मलयो भवेत् ।
तत्पराणां पातकानां फलमन्धन्तमः स्मृतम् ।
अधोऽधो दुःखवहुलं विष्णुदाराभिमर्शनात् ।
वधादपि हि दाराणां धर्षणं कोपकारणम् ।

तस्माद्देव्यः सदा वन्द्या अग्निवन्नाभिकामतः' ।।

इति धर्मतत्त्वे ।। २९-३० ।।

**एवं प्रणवसंयुक्तं प्राणसंयममभ्यसेत् ।**
**दशकृत्वस्त्रिषवणं मासादर्वाग् जितानिलः ।। ३५ ।।**

'उपास्य प्राणतोऽनुज्ञां हृदिस्थात्प्राप्य सेवकः (सेवतः) ।
अनुज्ञानन्तरं मासाद्वशे प्राणो भविष्यति ।
प्रसादभाक्त्वं सम्प्रोक्तं प्राणविष्ण्वोर्जयस्त्विति ।।
न हि सर्वविजेतारौ विजेयौ केनचित्कचित् ।
अपेक्षितं फलं येन दीयते तज्जितं त्विति ।
यथा जिता वसुमती यथा मोक्षपदं जितम्' ।। इति प्रभञ्जने ।।३५।।

**तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ।**
**तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ।। ४४ ।।**

'व्योमेति व्याप्तशब्दः स्याद्विशेषादोतता यतः' ।। इति शब्दनिर्णये ।

व्योम्नि धारयेत् सर्वाङ्गेषु धारयेदित्यर्थः । तच्च धारणं त्यक्त्वा स्वत एव मनसस्तत्रैव समाहितत्वादन्यत्किमपि न चिन्तयेत् ।

'यावत्समग्रस्मरणमचलं केशवे भवेत् ।
समग्रं चिन्तयेत्तावद्यदा तु विचलेत्ततः ।
प्रत्यङ्गं धारणं कुर्यान्मनो यावत्समग्रगम् ।
प्रत्यङ्गाभ्यासतो यावत्समग्रे सुस्थिरं मनः ।
तदा पुनः समग्रं तु धारयेद्यत्नतो बुधः ।
यदा तु धारणोऽत्साहं विना तत्राचलं मनः ।

'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्' ।

'अपि चेत्सुदुराचारो भजते मामनन्यभाक्' ।। इत्यादि च ।।

'वाध्यमानोऽपि मद्भक्तः' । इत्यादि च ।

'परदारदृशिः प्रोक्ता क्षुद्रपातकसंज्ञिता ।
उपपातकं तद्गतिश्च वर्णबाह्येषु पातकम् ।
महापातकसंज्ञं तु पित्रादेर्दारधर्षणम् ।
दारदृष्टिः स्वोत्तमानां मानुषाणां स्वभावतः ।
सुमहापातकं प्रोक्तं तद्गतिः सुमहत् ततः ।
ऋषिदारेषु मनसो गतिरेव ततोऽधिका ।
देवदाराभिकामानां सङ्गिसङ्गस्ततोऽधिकः ।
किमु विष्णोस्ततो योषित्सङ्गस्य व्यत्ययस्थितेः ।
न समं पातकं क्वापि न हि स्वस्त्र्यभिकामतः ।
अवज्ञाता माधवादेस्तस्मात्तं दूरतस्त्यजेत् ।
मानुषेषु तु दुःखित्वं क्षुद्रपापफलं स्मृतम् ।
पापात्तु वर्णवाह्यत्वं तिर्यग्योनिगतिस्तथा ।
सहस्रवर्षनरकं क्षुद्रपातकजं फलम् ।
उपपातकतश्चापि नरकं युगमात्रकम् ।
चतुर्युगावसानं तु पातकस्य फलं स्मृतम् ।
महापातकजन्यं च कल्पावधि समीरितम् ।
सुमहापातकाच्चापि यावद्ब्रह्मलयो भवेत् ।
तत्पराणां पातकानां फलमन्धन्तमः स्मृतम् ।
अधोऽधो दुःखबहुलं विष्णुदाराभिमर्शनात् ।
वधादपि हि दाराणां धर्षणं कोपकारणम् ।

तस्माद्देव्यः सदा वन्द्या अग्निवन्नाभिकामतः' ।।

इति धर्मतत्त्वे ।। २९-३० ।।

**एवं प्रणवसंयुक्तं प्राणसंयममभ्यसेत् ।**
**दशकृत्वस्त्रिषवणं मासादर्वाग् जितानिलः ।। ३५ ।।**

'उपास्य प्राणतोऽनुज्ञां हृदिस्थात्प्राप्य सेवकः (सेवतः) ।
अनुज्ञानन्तरं मासाद्वशे प्राणो भविष्यति ।
प्रसादभाक्तवं सम्प्रोक्तं प्राणविष्ण्वोर्जयस्त्विति ।।
न हि सर्वविजेतारौ विजेयौ केनचित्कचित् ।
अपेक्षितं फलं येन दीयते तज्जितं त्विति ।
यथा जिता वसुमती यथा मोक्षपदं जितम्' ।। इति प्रभञ्जने ।।३५।।

**तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ।**
**तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ।। ४४ ।।**

'व्योमेति व्याप्तशब्दः स्याद्विशेषादोतता यतः' ।। इति शब्दनिर्णये ।

व्योम्नि धारयेत् सर्वाङ्गेषु धारयेदित्यर्थः । तच्च धारणं त्यक्त्वा स्वत एव मनसस्तत्रैव समाहितत्वादन्यत्किमपि न चिन्तयेत् ।

'यावत्समग्रस्मरणमचलं केशवे भवेत् ।
समग्रं चिन्तयेत्तावद्यदा तु विचलेत्ततः ।
प्रत्यङ्गं धारणं कुर्यान्मनो यावत्समग्रगम् ।
प्रत्यङ्गाभ्यासतो यावत्समग्रे सुस्थिरं मनः ।
तदा पुनः समग्रं तु धारयेद्यत्नतो बुधः ।
यदा तु धारणोऽत्साहं विना तत्राचलं मनः ।

तिष्ठेत् त्यक्त्वा तदु(मु)द्योगं शङ्खचक्राम्बुजाङ्किते ।
आरूढचेताः परमे शृङ्गाराद्येकधामनि ।
नैवान्यच्चिन्तयेत्तस्मात्पूर्णानन्दाच्चतुर्भुजात् ।
यतोऽन्यस्मरणे तस्मान्मनश्चलति सुस्थिरम् ।
धारणार्थप्रयत्नेन तस्मात्तदुभयं त्यजेत् ।
यावत्स्वारूढचेताः स्याद्विष्णो रूपे चतुर्भुजे' ।।
इति ध्यानयोगे ।। ४४ ।।

एवं समाहितमतिर्मामेवात्मानमात्मनि ।
विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ।। ४५ ।।

**परमात्मानं** मां स्वदेहे पश्यति । जीवज्योतिर्मयि संयुतं प्रपश्यति ।

'समाधियोगे सम्पूर्णे हृदि पश्यति केशवम् ।
जीवं तत्प्रतिबिम्बं च तेनैव सह संस्थितम् ।
तदाधारं तदन्तस्थं तेनैव सदृशं तदा ।
आनन्दज्ञानशक्त्याद्यैः सदा तदवरं गुणैः ।
जीवन्मुक्तौ च मुक्तौ वा सततं तद्वशे स्थितम्' ।। इति ।
'स्वयं प्रकाशरूपत्वाज्जीवोऽपि ज्योतिरुच्यते' ।।
इति च तत्त्वप्रतिपत्तौ ।। ४५ ।।

ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ।
संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः (भ्रमम्) ।।४६।।

द्रव्यज्ञानक्रियाविषये भ्रमरूपं मनो लयं याति ।। ४६ ।।

।। इति श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे चतुर्दशोऽध्यायः ।।

## पञ्चदशोऽध्यायः

श्रीभगवानुवाच–

सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः ।
तासामष्टौ मत्प्रधाना ता एव (अष्टैव) गुणहेतवः ।। ३ ।।

मय्येव प्राधान्येन सन्ति अन्येषूपचारत इति मत्प्रधानाः ।

'सर्वाधिका अणीमाद्या विष्णोर्नान्यस्य कस्यचित् ।
स्वाभाविका विरिञ्चस्य तत्प्रसादात्पराधिकाः' ।। इति स्वाभाव्ये ।।

गुणभूतानामन्यासामपि सिद्धीनां ता एव हेतवः ।
स्व(अ)तस्तास्वेवाष्टस्वन्यासामन्तर्भावात् ।

'निःसीमाष्टगुणाभावात्सिद्धयोऽष्टादश स्मृताः ।
देवेभ्योऽन्यत्र देवानां सिद्धयोऽष्टैव सम्मताः' ।। इति प्राकाश्ये ।।३।।

अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ।। ४ ।।

गुणेष्वसङ्गो वशिता यत्कामस्तदवाप्स्यति ।
एता मे सिद्धयः सौम्याष्टावौत्पत्तिका मताः ।। ५ ।।

शक्तिप्रेरणमेवेशितृत्वम् । असङ्ग एव वशित्वम् ।

'यादृशानन्दकामः स्यात्तादृशानन्दसम्भवः ।
भोगान्विनैव प्राकाम्यमणिमादेः पृथक् ततः' ।। इति च ।।४,५।।

अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम् ।
मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥

स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ।
यथासङ्कल्पसंसिद्धिराज्ञाऽप्रतिहतागतिः ॥ ७ ॥

त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ।
अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भोऽपराजयः ॥ ८ ॥

अनूर्मिमत्त्वं प्राकाम्येऽन्तर्भूतम् । दूरश्रवणदर्शनं त्रिकालज्ञत्वम् । परचित्ताद्यभिज्ञता च प्रकाश्यान्तर्भूतानि । मनोजव इत्यादिषट्कं प्राप्त्यन्तर्भूतम् । अन्यत्सर्वमीशित्वान्तर्भूतमपि परमेशत्वाभावे पृथगित्यष्टादश । अग्न्यर्काम्बुविषादीनामित्यादिशब्दोक्ता । शस्त्रास्त्रनखदन्तताडनशापादिभिरप्रतिहतिः पृथगेव सिद्धिः सप्तदशी (सप्तदशमी) । अप्रतिहता आ समन्ताद्गतिर्यस्या आज्ञायाः साऽप्रतिहतागतिः । अद्वन्द्वमप्रतिहतं त्रिकालज्ञत्वम् । अग्न्यर्काम्बुविषाणां प्रतिस्तम्भाश्चतस्रः सिद्धयः । दूरश्रवणदर्शने द्वे सिद्धी ।

'गरिम्णः सैव हेतुः स्यान्महिमा हेतुधारणा ।
प्रायोऽष्टसिद्धिकथनेष्वथो न पृथगुच्यते' इति च ॥

'प्राप्तिप्राकाश्ययोश्चापि धारणैकापि सम्भवेत् ।
अत ऐक्येन तामुक्त्वा गरिमाणं पृथक् क्वचित्' ॥ इति च ॥

'मूलभूतास्तु सिद्धीनां देवानामष्टसिद्धयः ।
सर्वसिद्धिप्रधानास्तास्तज्ज्ञा अष्टादश स्मृताः ।
अष्टस्वन्तर्गतास्तास्तु तदपेक्षतयाऽल्पकाः' ॥ इति च ॥

कामरूपत्वस्याणिमादित्रयेऽप्यन्तर्भावः । अष्टसिद्धिपक्षे अग्न्यर्कस्तम्भ एकैव सिद्धिः अदाहत्वात् । अग्न्यादिप्रतिस्तम्भस्य वशित्वेऽपि । अनूर्मिमत्त्वाद्यष्टादशपृथक्सिद्धिपक्षेऽग्न्यर्कस्तम्भयोः पृथक्त्वम् । तस्मिन्पक्षे तासां सकाशात्प्रधानाष्टौ मत्प्रधाना इति व्याख्या ।

'अनूर्मिमत्त्वसिद्धिस्तु प्राकाम्यान्तर्गता मता ।
दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेव च ।
परचित्ताद्यभिज्ञानं प्राकाश्यान्तर्गतानि च ।
अणिमादित्रयान्तश्च कामरूपत्वमिष्यते ।
अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भो वशित्वगः ।
मनोजवः कामरूपं परकायप्रवेशनम् ।
स्वच्छन्दमृत्युता देवैः सह क्रीडेष्टसाधनम् ।
प्राप्तावन्तर्गतान्याहुराज्ञाऽप्रतिहतिस्तथा ।
अग्निस्तम्भो रविस्तम्भ उदकस्तम्भ एव च ।
विषस्तम्भस्तथा शस्त्रशापादिस्तम्भ एव च ।
ईशित्वान्तर्गतान्याहुरपराजय एव च ।
एवमष्टादशाष्टभ्यो जायन्ते सिद्धयः क्रमात् ।
अष्टादशभ्यश्चान्यास्तु जायन्ते सिद्धयोऽमिताः ।
अनूर्मिमत्त्वं दुःखस्याभावमात्रमुदाहृतम् ।
यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति कीर्त्यते ।
दुःखाभावोऽपि प्राकाम्ये नेतरे सुखितेष्यते ।
प्राकाश्यं सर्ववेदादिज्ञानमेव विदो विदुः ।
सहस्रयोजनान्तं तु दूरदर्शनमिष्यते ।
दूरश्रवणमप्येवं तस्मिन्नेव युगे स्थिते ।

अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम् ।
मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥

स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ।
यथासङ्कल्पसंसिद्धिराज्ञाऽप्रतिहतागतिः ॥ ७ ॥

त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ।
अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भोऽपराजयः ॥ ८ ॥

अनूर्मिमत्त्वं प्राकाम्येऽन्तर्भूतम् । दूरश्रवणदर्शनं त्रिकालज्ञत्वम् । परचित्ताद्यभिज्ञता च प्रकाश्यान्तर्भूतानि । मनोजव इत्यादिषट्कं प्राप्त्यन्तर्भूतम् । अन्यत्सर्वमीशित्वान्तर्भूतमपि परमेशत्वाभावे पृथगित्यष्टादश । अग्न्यर्काम्बुविषादीनामित्यादिशब्दोक्ता । शस्त्रास्त्रनखदन्तताडनशापादिभिरप्रतिहतिः पृथगेव सिद्धिः सप्तदशी (सप्तदशमी) । अप्रतिहता आ समन्ताद्गतिर्यस्या आज्ञायाः साऽप्रतिहतागतिः । अद्वन्द्वमप्रतिहतं त्रिकालज्ञत्वम् । अग्न्यर्काम्बुविषाणां प्रतिस्तम्भाश्चतस्रः सिद्धयः । दूरश्रवणदर्शने द्वे सिद्धी ।

'गरिम्णः सैव हेतुः स्यान्महिमा हेतुधारणा ।
प्रायोऽष्टसिद्धिकथनेष्वथो न पृथगुच्यते' इति च ॥

'प्राप्तिप्राकाश्ययोश्चापि धारणैकापि सम्भवेत् ।
अत ऐक्येन तामुक्त्वा गरिमाणं पृथक् क्वचित्' ॥ इति च ॥

'मूलभूतास्तु सिद्धीनां देवानामष्टसिद्धयः ।
सर्वसिद्धिप्रधानास्तास्तज्ज्ञा अष्टादश स्मृताः ।
अष्टस्वन्तर्गतास्तास्तु तदपेक्षतयाऽल्पकाः' ॥ इति च ॥

कामरूपत्वस्याणिमादित्रयेऽप्यन्तर्भावः । अष्टसिद्धिपक्षे अग्न्यर्कस्तम्भ एकैव सिद्धिः अदाहत्वात् । अग्न्यादिप्रतिस्तम्भस्य वशित्वेऽपि । अनूर्मिमत्त्वाद्यष्टादशपृथक्सिद्धिपक्षेऽग्न्यर्कस्तम्भयोः पृथक्त्वम् । तस्मिन्पक्षे तासां सकाशात्प्रधानाष्टौ मत्प्रधाना इति व्याख्या ।

'अनूर्मिमत्त्वसिद्धिस्तु प्राकाम्यान्तर्गता मता ।
दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेव च ।
परचित्ताद्यभिज्ञानं प्राकाश्यान्तर्गतानि च ।
अणिमादित्रयान्तश्च कामरूपत्वमिष्यते ।
अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भो वशित्वगः ।
मनोजवः कामरूपं परकायप्रवेशनम् ।
स्वच्छन्दमृत्युता देवैः सह क्रीडेष्टसाधनम् ।
प्राप्तावन्तर्गतान्याहुराज्ञाऽप्रतिहतिस्तथा ।
अग्निस्तम्भो रविस्तम्भ उदकस्तम्भ एव च ।
विषस्तम्भस्तथा शस्त्रशापादिस्तम्भ एव च ।
ईशित्वान्तर्गतान्याहुरपराजय एव च ।
एवमष्टादशाष्टभ्यो जायन्ते सिद्धयः क्रमात् ।
अष्टादशभ्यश्चान्यास्तु जायन्ते सिद्धयोऽमिताः ।
अनूर्मिमत्त्वं दुःखस्याभावमात्रमुदाहृतम् ।
यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति कीर्त्यते ।
दुःखाभावोऽपि प्राकाम्ये नेतरे सुखितेष्यते ।
प्राकाश्यं सर्ववेदादिज्ञानमेव विदो विदुः ।
सहस्रयोजनान्तं तु दूरदर्शनमिष्यते ।
दूरश्रवणमप्येवं तस्मिन्नेव युगे स्थिते ।

वेदादिकं विना प्रोक्ता त्रिकालज्ञानिता बुधैः ।
शरीरस्थं विना देहे परचित्ताद्यभिज्ञता ।
अन्येन्द्रियैर्दर्शनादि यथासङ्कल्पवेगिता ।
प्राप्तिरित्युच्यते सद्भिः स्वमनःसमवेगिता ।
मनोजव इति प्रोक्तः पश्वाद्याकारता तथा ।
कामरूपत्वमुद्दिष्टं स्वदेहत्यागतः परे ।
परकायप्रवेशः स्याद्युगादर्वाक्तना स्मृता ।
स्वच्छन्दमृत्युता देवैः क्रीडा चेन्द्रादिभिर्विना ।
यथासङ्कल्पसिद्धिश्चाप्यन्नपानसुतादिषु ।
चक्षुर्दृश्येष्वणुत्वं तु अणिमा सम्प्रकीर्तिता ।
महिमा चापि सम्प्रोक्ता त्रिलोकान्तरपूरणात् (पूरणा) ।
चक्षुर्दृश्यैर्विवाह्यत्वं लघिमा चापि कीर्तिता ।
त्रिलोकसमभारस्तु गरिमा चापि कीर्तिता ।
पूर्वशक्तेः कोटिगुणशक्त्युद्रेकस्तथेशिता ।
भुविस्थैः प्राणिभिश्चोक्तकरणं चापि कीर्त्यते ।
आज्ञाऽप्रतिहतिर्ब्राह्मादर्वागस्त्रविघातनम् ।
विना महातपस्वींश्च शापप्रतिहतिः स्मृता ।
अपराजयो मनुष्येभ्यो वशित्वं चाप्यलोलता ।
दाहादिसहनं चापि प्रतिस्तम्भ इतीर्यते ।
इति षड्विंशतिः प्रोक्ता गरिम्णा सह सप्त वा ।
विंशतिश्च सुरेभ्योऽन्यद्देवेष्वष्टैव सिद्धयः ।
यतो निःसीमकास्तेषां देवानामष्टसिद्धयः ।
अतोऽष्टादशसिद्धीनां तदन्तर्भाव इष्यते ।

देवेष्विन्द्रेशवायुश्रीविष्णूनामुत्तरोत्तरम् ।
सिद्धयः परिपूर्णास्तु विष्णोरेकस्य नान्यगाः' ।। इत्यैश्वर्ये ।।

'श्रुतेषु तु यथायोगं क्षिप्रग्रहणमेव तु ।
उक्तं प्राकाश्यमन्येषां देवानामश्रुतेष्वपि ।
ऋषीणां मिश्रभावेन भासते किञ्चिदश्रुतम् ।
विषयेभ्योऽधिकसुखव्यक्तिः प्राकाम्यमेव तु ।
इतरेषां सुराणां तु निःसीमानन्दभोजनम् ।
एवमेव तु निःसीमा देवानामष्टसिद्धयः ।
उत्तरोत्तरमत्रापि यावद्विष्णुः सुपूर्णभुक्' ।। इति हरिवंशेषु ।।

'अग्न्यादिशक्तिसंस्तम्भ अग्न्यादिस्तम्भ इष्यते' इति कौर्मे ।। ६-८ ।।

**भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयन् मनः ।**
**अणिमानमवाप्नोति तन्मात्रोपासको मम ।। १० ।।**

'एकस्मात्सिद्धयो विष्णोः स्थानभेदात्पृथग्विधाः ।
एकस्थानगताद्वा स्युः सुस्थिरोपासना यदि' ।। इति भारते ।।

भूतसूक्ष्माणामात्मनि परमाणुस्थितेऽणुरूपे ।

'तन्मात्रावयवे सूक्ष्मे परमाण्वभिधानके ।
प्रत्येकमणुरूपं तु विष्णुं ध्यायन्नणुर्भवेत्' ।। इति कापिलेये ।।

'आकाशवत्सूक्ष्मतां यो व्यापित्वेनैव मन्यते ।
तन्मात्रव्यापिनं विष्णुं चिन्तयन्स तथा भवेत्' ।। इति च ।।१०।।

महत्यात्मन् मयि परे यथासंस्थं मनो दधत् ।
महिमानमवाप्नोति भूतानां च पृथक्पृथक् ।। ११ ।।

**महति** व्याप्ते । महत्तत्त्वस्य पृथगुक्तेः । अस्मात्स्थूलतां प्राप्नवानीत्यपेक्षायां तस्मात्प्राप्नोति । ततोऽन्यस्मादित्यपेक्षायां तस्मादिति पृथक्पृथक् ।। ११ ।।

परमाणुमये चित्तं भूतानां मयि रञ्जयन् ।
कालसूक्ष्मात्मके योगी लघिमानमवाप्नुयात् ।। १२ ।।

परमाणुमये भूतानां सकाशादतिशयेनाणुरूपे । कालसूक्ष्माणामात्मनि ।। १२ ।।

धारयन् मय्यहन्तत्त्वे मनो वैकारिकेऽखिलम् ।
सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ।। १३ ।।

अहंतत्वे स्थिते मयि ।। १३ ।।

महत्यात्मनि यः सूत्रे धारयन् मयि मानसम् ।
प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ।। १४ ।।

सूत्रे स्थिते मयि । गृहे पीठ इतिवत् । अव्यक्तजन्मनः अव्यक्तस्यापि किञ्चित्स्थूलत्वकर्तुः ।

'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' ।। इति मोक्षधर्मेषु ।
'अजरादमरादमूर्तितः शाश्वततमसः' ।। इति च ।
'अव्यक्तस्याजन्मवतो विकारो जनिरुच्यते' ।। इति हरिवंशेषु ।

मे सकाशाद्विन्दते । परमेष्ठिप्रसादादन्येषां भवतीति पारमेष्ठ्यम् । सर्वगुणानां ज्ञानमूलत्वादुपलक्षणत्वेन प्राकाश्यं पारमेष्ठ्यमित्युक्तम् ।

'सर्वे गुणास्तु प्राणस्य परमात्मप्रसादतः ।
प्राणविष्ण्वोः प्रसादेन भारत्याः सम्प्रकीर्तिताः ।
प्रसादात्तु त्रयाणां चाप्यनन्तादेः सदा गुणाः' ।।
इति माहात्म्ये ।। १४ ।।

विष्णौ चाधीश्वरे चित्तं धारयन् कालविग्रहे ।
स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनम् ।। १५ ।।

सर्वत्राधीश्वरत्वादौ विद्यमानेऽपि तत्र तत्रोक्ताधीश्वरत्वादिगुणविशिष्ट-त्वेन तत्र तत्रोपासनमिति विशेषः ।

'तं यथा यथोपासते तदेव भवति' ।। इति च श्रुतेः ।

'उपासतः सत्य इति सत्यसङ्कल्पता भवेत् ।
ईशत्वमीश्वर इति गुणं तं तं यथा हरिम्' ।। इति विशेषे ।। १५ ।।

श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ।
धारयन् श्वेततां याति षडूर्मिरहितोऽमरः ।। १८ ।।

'शुद्धः श्वेतः सुखी श्वेतः श्वेतवर्णः कचिद्भवेत्' ।।
इति शब्दनिर्णये ।। १८ ।।

मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ।
तत्रोपलब्धाभूतानां हंसो वाचः शृणोत्यसौ ।। १९ ।।

आकाशस्यात्मनि । तत्राकाश उपलब्धानां आसमन्तात्स्थितानां भूतानां वाचः । हंसो जीवः ।

'त्यागात्पूर्वशरीराणां नवानां सश्रयेन च ।
जीवं हंस इति प्राहुस्तद्धेतुत्वाद्धरिं परम्' ।। इति भारते ।। १९ ।।

मनो मनसि संयोज्य देहं तदनु वायुना ।
मद्धारणानुभावेन तत्रात्मा यत्र वै मनः ।। २१ ।।

**मनसि** मनस्तत्त्वे । वायुना संयोज्य । मनोऽनुदेहं मनस्तत्त्वे मद्धारणा ।। २१ ।।

यदा मन उपादाय यद्यद् रूपं बुभूषति ।
तत्तद् भजेन्मनोरूपं मद्योगबलमाश्रितः ।। २२ ।।

परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् ।
पिण्डं हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ।। २३ ।।

पाष्ण्याऽऽपीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु ।
आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत् तनुम् ।। २४ ।।

यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ।
न कुतश्चन हन्येत तस्य चाज्ञा यथा मम ।। २७ ।।

मद्भक्त्या शुद्धसत्वस्य योगिनो धारणाविदः ।
तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ।। २८ ।।

अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ।
मद्योगश्रान्तचित्तस्य यादसामुदकैर्यथा ।। २९ ।।

'गजादिरूपमाकाङ्क्षन् गजादिस्थितमीश्वरम् ।
ध्यायन् गजादिरूपः स्यात्परकायस्थितं हरिम् ।
ध्यायन्विशेत्परे काये वायावन्तर्गतः पुमान् ।
प्राणनामा हरिः प्रोक्तस्तस्मिन्वायुः समाश्रितः ।
वायावन्तर्गतो जीवो देहाद्देहं प्रयास्यति ।
षडाधारस्थितं विष्णुं ध्यायन्नायुःक्षयं विना ।
यदि मृत्युमभीप्सेत तथा प्राप्नोत्यसंशयम् ।
त्रिकालप्रेरकं विष्णुं ध्यातुः कालत्रयज्ञता ।
अग्न्यादिषु हरिं ध्यायंस्तत्प्रतिस्तंभको भवेत्' ।। इति हरिसंहितायाम् ।।

आत्मानं परमात्मानं तत्र परकाये भावयेत् । तदा वायौ स्थितः प्राणः परमात्मा तत्र गच्छति । तमनु जीवोऽपि गच्छति । वायौ भूतो वायुभूतः ।।

**प्राणं** परे ब्रह्मणि नीत्वा ।

'प्राणस्थं प्राणनामानं बहिष्ठे ब्रह्मनामके ।
विष्णुं विष्णावनुस्मृत्य विसृजेद्देहमञ्जसा' ।। इति प्रभञ्जने ।।

'अनेयस्य हरेर्नीतिस्तद्गतस्य हरेः स्मृतिः ।
न हि नेयः क्वचित्क्वापि केनचित्स्ववशत्वतः' ।। इति च ।

मम भावना **मद्भावः** ।

'भावो मनश्च भक्तिश्च क्वचिदभ्यास इष्यते' ।।
इति शब्दनिर्णये ।। २२-२४, २७-२९ ।।

**उपासकस्य मामेवं योगधारणया पुनः ।
सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ।। ३१ ।।**

जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः ।
मद्धारणां धारयतः का नु सिद्धिः सुदुर्लभा ।। ३२ ।।

अन्तरायान् वदन्त्येतान् युञ्जतो योगमुत्तमम् ।
मया सम्पद्यमानस्य कालक्षपणहेतवः ।। ३३ ।।

उपासनयाऽऽपरोक्ष्यं कृतवतः, पुनरुपासनं कार्यकाले कुर्वतः कार्यसिद्धिरित्यतो **योगधारणया पुनः** इत्युक्तम् ।।

'उपास्य वायुं प्रथमं वायौ सुष्ठ्वपरोक्षिते ।
अनुज्ञातस्ततस्तद्वं तत्र तत्र हरिं स्मरेत् ।
कृत्वाऽपरोक्षं तं चापि कालेकाले स्मरेत्पुनः ।
अभीष्टकार्यसिद्धिः स्यात्तस्य नास्त्यत्र संशयः ।।
अकामो यदि वायुं च ध्यात्वा दृष्ट्वा हरिं तथा ।
न किञ्चित्कामयेत्पश्चात्स क्षिप्रं मुक्तिमेष्यति ।।
यदि योगैः फलं भुङ्क्ते पुनः काममपास्य तु ।
तेनैव क्रमयोगेन वायुं दृष्ट्वा हरिं तथा ।
एष्टव्या मुक्तिपदवी नान्यथा तु कथञ्चन ।
पूर्वदृष्टिर्हि कामार्थे पश्चान्मोक्षार्थमिष्यते ।
येषां तु जन्मतः सिद्धिस्तेषां दोषो (न तु क्वचित्) न विद्यते' ।।
इति निवृत्ते ।। ३१-३३ ।।

जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ।
योगेनाप्नोति ताः सर्वा यैर्यैर्योगगतिं व्रजेत् ।। ३४ ।।

यैर्यैः कैश्चित्कैश्चिदेव जन्मादिभिः योगगतिं व्रजेत् ।

'जन्मादिभिः कैश्चिदेव प्राप्यते योगजं फलम् ।
योगेन सर्वैः प्राप्येत योगे यत्नं ततः कुरु' ।। इति च ।।

'कश्चिदर्थे च यच्छब्दः प्रश्नार्थे च क्वचिद्भवेत् ।
क्वचित्परामर्शवाची क्वचिदाक्षेपवाचकः' ।। इति तन्त्रनिरुक्ते ।।३४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे पञ्चदशोऽध्यायः ।।



## षोडशोऽध्यायः

अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ।
अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ।। ९ ।।

'सृष्टिस्थित्यादिहेतुत्वाद्भूतानि हरिरुच्यते ।
न तु भूतस्वरूपत्वात्स हि सर्वेश्वरेश्वरः' ।। इति वस्तुतत्त्वे ।।९।।

अहं गतिर्गतिमतां कालः कलयतामहम् ।
गुणानामप्यहं सौम्यं गुणिन्यौत्पत्तिको गुणः ।। १० ।।

गुणिनामप्यहं सूत्रं महतां च महानहम् ।
सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ।। ११ ।।

'स्वस्वजात्युत्तमत्वं तु भवेद्यद्रूपसन्निधेः ।
विभूतिरूपं तत्प्रोक्तमिन्दिरादिषु संस्थितम् ।
तथा बहिः स्थितं रूपं विभूतीत्येव शब्दितम् ।

सर्वसाधारणं रूपमन्तर्यामीति चोच्यते ।
यथा कृष्णात्मना दुष्टहन्ता व्यासात्मना समः ।
असमोऽप्येकरूपोऽपि सामर्थ्यात्पुरुषोत्तमः' ।। इति च ।।

'ब्रह्मरुद्रेन्द्रजीवेभ्यः पृथगेव व्यवस्थितम् ।
विभूतिरूपं विष्णोस्तु तद्गश्रैष्ठ्यैककारणम् ।
तदेव ब्रह्मरुद्रादिनामभिर्वाच्यमञ्जसा ।
तदेव देवेष्विन्द्रोऽस्मि तथा रुद्रेषु शङ्करः ।
इत्यादिनोक्तं कृष्णेन नेन्द्राद्या जीवसञ्श्रयाः' ।। इति गीताकल्पे ।।

गतिः ज्ञानम् ।

'प्रधानो ज्ञानिनां ब्रह्मा ज्ञानमानी हृदि स्थितः ।
स एव कालमानी तु संहर्तॄणां प्रभुः स्मृतः' ।। इति विभूतौ ।।

'आनन्दानुभवस्तूम उत्कृष्टानुभवात्स्मृतः ।
तद्युक्तत्वं तथा सौम्यं गुणानामधिकं हि तत् ।
भक्त्यादिगुणपूगोऽपि दुःखहेतुत्वभावनात् ।
निष्फलो भवति ह्यद्धा प्रीतस्य सफलो भवेत् ।
तस्मादानन्दमानं तु गुणेषूत्कृष्टमुच्यते ।
तस्याभिमानी ब्रह्मैको भक्तिज्ञानादिकस्यः च ।
श्रद्धाभिमानिनी देवी तथैव तु सरस्वती ।
तदन्येषां गुणानां तु तदन्ये विबुधाः स्मृताः ।
गुणानां तु प्रभुर्ब्रह्मा तस्मादेकश्चतुर्मुखः ।
औत्पत्तिकगुणो नाम शुभप्राप्त्यैकयोग्यता ।
तस्याभिमानी प्राणस्तु स हि सर्वगुणाधिकः' ।। इति च ।

गुणिनां मध्ये गुणिनि स्थितमौत्पत्तिकगुणरूपं सूत्रमित्यर्थः ।

'गुणिनां गुणयोग्यत्वं यत्सर्वगुणिषु स्थितम् ।
वायुस्तदभिमान्येकः सर्वगुण्यधिकस्ततः' ।। इति प्रभञ्जने ।

रूपान्तरत्वादेकस्यापि बहुस्थानेषु प्राधान्योक्तिर्नो विरुध्यते । गुणान्तरोक्तेश्च 'रामः शस्त्रभृतां वृष्णीनां वासुदेव' इत्यादिवत् ।। १०,११ ।।

हिरण्यगर्भो देवानां मन्त्राणां प्रणवस्त्रिवृत् ।
अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम् ।। १२ ।।

**पदानि** वाच्यानि छन्दसाम् ।

'स्वयूथानामथाधिक्ये स्वजातीनामथापि वा ।
यत्कारणं विभूत्याख्यं विष्णोस्तद्रूपमुच्यते' ।। इति प्राधान्ये ।।

'वर्णेशानि पदान्याहुः पादाश्चापि तदीश्वराः ।
पादानामीश्वरार्धर्चा तदीशा ऋच एव च ।
ऋचामधीशा वर्गाश्च तेषां सूक्तमधीश्वरम् ।
सूक्ताधीशास्तथाध्यायास्तदधीशास्तथाष्टकाः ।
तदधीशास्तथा शाखा वेदाश्चापि तदीश्वराः ।
वेदानामीश्वरा वाच्या वाच्यानामीश्वरो हरिः ।
न हरेरीश्वरः कश्चित्कदाचित्क्वापि विद्यते' इति च ।।

पद्यन्त इति पदानि वाच्यानि । 'पदं पदसहस्रेण यश्चरन्नापराध्यते' इतिवत् ।

'पदं तु वाचकं प्रोक्तं क्वचिद्वाच्यमपीष्यते' ।। इति शब्दनिर्णये ।।

'सर्ववेदाभिमानिन्यो देव्यो लक्ष्मीस्ततोऽधिका ।
वेदाभिमानिनी साक्षात्सा विष्णोर्दूरतः स्थिता ।
यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता ।
हरिणा रतियोगस्था दक्षिणाख्यापि सैव तु ।
उत्तरोत्तरतः साऽपि विशिष्टा दक्षिणा सुखे ।
एवं वेदाभिमानिभ्यो देवीभ्यः सर्व एव तु ।
तदर्थरूपाः पतयस्तस्यास्तस्यास्तथोत्तमाः ।
शच्या इन्द्रस्ततश्चोमा तस्या रुद्रस्ततस्तथा ।
भारती प्राण एवास्यास्ततः श्रीस्तद्वरो हरिः' ।।

इति वैशेष्ये ।। १२ ।।

इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् ।
आदित्यानामहं विष्णू रुद्राणां नीललोहितः ।। १३ ।।

उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम् ।
यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ।। १८ ।।

'ऋते रुद्रादिकानिन्द्रः सर्वदेवाधिकः स्मृतः ।
ऋते भीमं फाल्गुनश्च पाण्डवेभ्यो वरस्तथा ।
तथा शुक्रः कवीशस्तु वृहस्पत्यादिकानृते ।
यमः संयमतामीशः शङ्करादीन्विनैव तु' ।।

इति गीताकल्पे ।। १३,१८ ।।

नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् ।
आश्रमाणां तुरीयोऽहं (अहं तुर्यो) वर्णानां प्रथमोऽनघ ।।१९।।

'गार्हस्थ्यं च यतित्वं च देवेष्वेकत्वमागतम् ।
प्राधान्योक्तिर्यतित्वस्य गार्हस्थ्यस्य क्वचित्क्वचित्' ।।
इत्याश्रमविवेके ।। १९ ।।

पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ।
स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ।। २२ ।।

'वसिष्ठोऽभ्यधिकस्तेषु मानुषाणां पुरोधसाम्' ।। इति त्रैकाल्ये ।।

योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् ।
आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ।।२४।।

जीवेशादिभेदवादी **विकल्पः । ख्यातिवादिनां** ज्ञानवादिनाम् ।

'जीवेशादिविशेषं यो याथार्थ्येन प्रकल्पयेत् ।
कलिमारभ्य चाविष्णोराधिक्यादुत्तरोत्तरम् ।
नियमेनैव केनापि न हेयः(हेयं) स विकल्पकः ।
सर्वज्ञानिविशेषेभ्यः स ज्ञानी सर्वथाऽधिकः' ।। इति विज्ञाने ।।

'भेददृष्ट्याऽभिमानेन' । इत्युक्तम् । 'विद्याऽऽत्मनि भिदा बोधः' इति च वक्ष्यति ।। २४ ।।

स्त्रीणां तु शतरूपाऽहं पुंसां स्वायम्भुवो मनुः ।
नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ।। २५ ।।

'शतरूपा वरा स्त्रीणां पुंसामभ्यधिको मनुः ।
तयोरप्यधिकौ नित्यमिन्द्राणीन्द्रौ शुभैर्गुणैः' ।। इति वैशेष्ये ।।२५।।

वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ।
किम्पुरुषाणां च हनुमान् विद्याध्राणां सुदर्शनः ।। २९ ।।

'ऐश्वर्यादिगुणैः षड्भिः सामग्र्यात्सर्वदेवताः ।
भगवच्छब्दवाच्याश्च साक्षात्तु भगवान्हरिः ।
निरपेक्षं तु सामग्र्यं तस्य सर्वाधिकं यतः' ।। इति च ।

अतो भगवतां देवानाम् ।

'सर्वभागवताधीश उद्धवो भगवत्प्रियः ।
तस्मादभ्यधिको जिष्णुः प्रियत्वे भक्तितो हरेः ।
तस्मादभ्यधिको रामः कृष्णा त्वभ्यधिका ततः ।
तस्या अभ्यधिको भीमो न तु तत्सदृशः क्वचित्' ।। इति च ।

'यत्किञ्चाऽऽत्मनि कल्याणं सम्भावयसि पाण्डव ।
सहस्रगुणमप्येतत्त्वयि सम्भावयाम्यहम् ।
धर्मो ज्ञानं तथा मोक्षो यशः कीर्तिस्तथैव च ।
त्वय्यायत्तमिदं सर्वं लोकस्यापि न संशयः' ।। इति भारते ।।२९।।

ओजः सहोबलवतां कर्माहं विद्धि सात्वताम् ।
सात्वतां नवमूर्तीनामादिमूर्तिरहं पुरा ।। ३२ ।।

'विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च ।
सुपर्णस्य च सम्प्रोक्ताः प्रत्येकं नवमूर्तयः ।
पूज्याः सात्वततन्त्रेषु तत्राद्या मूर्तयो हरेः ।
प्रधानास्ता हि सर्वासां मूर्तीनां हरिमूर्तयः ।
अभेदादेव मूर्तीनामेकमूर्तिश्च सा स्मृता' ।। इति सहस्रावरणे ।

श्रियादिनवमूर्तीनां मध्ये स्वकीयनवमूर्तिरहमित्यर्थः ।

'स्वरूपतश्च गुणतो न विशेषः कथञ्चन ।
विष्णोस्तु नवमूर्तीनां पूजा च नवधेष्यते' ।। इति च ।

अतो न स्वनवमूर्तीनाम् । अन्येभ्योऽन्यनवमूर्तीनामपि प्राधान्यकारणं सन्निधानमात्मनस्तास्वप्यस्तीति पुरेतिविशेषणम् । प्रथमपूज्यास्ता इत्यर्थः।

'नारायणः परं ब्रह्म वासुदेवादिकास्तथा ।
नरसिंहवराहौ च परञ्ज्योतिर्हरिर्नव ।
इन्दिरा च रमा लक्ष्मीर्हिरण्या गगना तथा ।
रक्ता रक्ततरा भूतिर्विभूतिश्च श्रियो नव ।
ब्रह्मा चतुर्मुखो धाता विधाता विधिरेव च ।
कर्ता विरिञ्चो भूतेशः शतानन्दश्च ता नव ।
धनञ्जयमृते चैव वायोस्तु नवमूर्तयः ।
शेषोऽनन्तो नरश्चैव लक्ष्मणो बल एव च ।
सङ्कर्षणो नीलवासा जगद्रक्षो जलेशयः ।
सुपर्णो गरुडश्चैव वैनतेयो महाशनः ।
नववर्णः पञ्चवर्णः पन्नगाशोऽमृताकरः ।
तथैव सर्ववेदात्मा सुपर्णो नवधा स्मृतः' ।। इति च ।। ३२ ।।

विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् ।
भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ।। ३३ ।।

अपां रसश्च परमस्तेजिष्ठानां विभावसुः ।
प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ।। ३४ ।।

'यस्य यस्य स्वभावो यस्तत्तन्नामा हरिः परः ।
नियामकः स्वभावस्य तत्तच्छब्दादिनामवान् ।
वैशेष्याख्या विभूतिश्च विभूतिश्च स्वभावजा ।
द्विधा विभूतिर्विज्ञेया विष्णोस्तु परमात्मनः' ।। इति च ।।३३,३४।।

पृथिवी वायुराकाश आपो ज्योतिरहं महान् ।
विकारः पुरुषोऽव्यक्तं रजः सत्वं तमः परः ।
अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्वविनिश्चयः ।। ३७ ।।

मयेश्वरेण जीवेन गुणेन गुणिना विना ।
सर्वात्मनापि सर्वेण न भावो विद्यते क्वचित् ।। ३८ ।।

'सत्वादिनाम विष्णोस्तु सत्वादिस्थस्य केवलम् ।
जीवस्थस्य च तन्नाम जीवादेरुपचारतः' ।। इति च ।। ३७,३८ ।।

सङ्ख्यानं परमाणूनां कालेन क्रियते मया ।
न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ।। ३९ ।।

**कालेन** सर्वगुणात्मकेन मया । असङ्ख्यत्वात्तथा न क्रियते । नाविज्ञानात् ।

'अनन्तमिति वेत्तीशस्त्वनन्तं त्वन्तवत्तथा ।
अनन्तस्य हि सङ्ख्याने न तु सर्वज्ञता भवेत् ।
अनन्तमपि वेत्तीशः प्रत्येकं च विशेषतः ।
सर्वज्ञत्वान्न सङ्ख्यानमसङ्ख्यस्य कुतो हि सा' ।। इति च ।। ३९ ।।

एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः ।
मनोविकारा एवैते तथा वाचाऽभिधीयते ।। ४१ ।।

वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च ।
आत्मानमात्मना यच्छ न भूयः कल्प्यसेऽध्वने ।। ४२ ।।

यथा वाचाऽभिधीयते अन्यैः । नामादिकं जीवादीनां ते सर्वे शब्दा मनोविकाराः ।। स्वतो मय्येव सर्वशब्दास्तस्मान्मय्येव वाचं यच्छ । आत्मानं परमात्मानं मय्येव लक्ष्यत्वेन यच्छ ।। ४१,४२ ।।

यो वै वाङ्मनसी सम्यङ् न संयच्छेद् धिया यतिः ।
तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ।। ४३ ।।

तस्माद् वचोमनःप्राणान् नियच्छेन्मत्परायणः ।
मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ।। ४४ ।।

यो मयि न संयच्छति । तस्य ज्ञानं स्रवति ।।

वाङ्मनः प्राणबुध्यादीन्नियच्छेत्केशवे परे ।
सर्वशब्दाभिधेयत्वं तस्य ज्ञात्वा विशेषतः ।
मुख्यवृत्त्याऽभिधेयत्वमन्येषां मनसो भ्रमात् ।
तस्मात्तथा चिन्तयतः स्रवेज्ज्ञानं यथातथम् ।
तस्मान्मनोवचःप्राणान्माधवैकपरायणान् ।
कुर्यात्तद्धि तपो ह्यग्र्यं महाधर्मोत्तमश्च सः' ।। इति धर्मविवेके ।।

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनि' ।। इति च ।।४३,४४।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे षोडशोऽध्यायः ।।

## सप्तदशोऽध्यायः

वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि ।
सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ।। ५ ।।

'विना प्रसादं विष्णोर्न धर्मं ब्रह्माऽभिवक्ष्यति ।
तत्प्रसादेन वक्तुं तु ब्रह्मा शक्ष्यति नापरः' ।। इति प्राधान्ये ।

**कलाः** प्राणाद्याः ।

'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापःपृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ता इमाः षोडश-कलाः पुरुषायणा' इति श्रुतेः ।। ५ ।।

वेदाध्यायी स्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ।
देवर्षिपितृभूतानि (नृदेवपितृभूतानि) मद्रूपाण्यन्वहं यजेत् ।।५०।।

'प्रतिमावद्धरेरूपं तिर्यङ्नरसुरादयः ।
साक्षाद्रूपाणि मत्स्यादीन्यभिन्नान्येव सर्वदा' ।। इति च ।। ५० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे सप्तदशोऽध्यायः ।।



## अष्टादशोऽध्यायः

विप्रस्य वै संन्यसतो देवा दारादिरूपिणः ।
विघ्नं कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात् परम् ।। १४ ।।

'असम्पूज्य न्यसिष्णूंस्तु देवा वै पातयन्त्यधः ।
सुसम्पूज्य न्यसिष्णूंस्तु देवा एवानुजानते ।
अथवा तद्यशोवृध्यै विघ्नन्तीव पुनःपुनः ।
तात्पर्याद्विघ्नितो देवैर्नोत्थातुं शक्नुयात्कचित्' ।। इति देवहार्दे ।।१४।।

यदेतदात्मनि जगन्मनोवाक्प्राणसम्भृतम् ।
सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत् स्मरेत् ।। २७ ।।

'त्रिगुणा प्रकृतिर्माया तज्जत्वाद्विश्वमीदृशम् ।
अनाद्यनन्तकालेषु मायेत्याहुर्विपश्चितः ।
अचेतनत्वान्नैवैतत्प्रयोजकतया स्मरेत् ।
चेतनत्वं स्वतन्त्रत्वं स चैको विष्णुरेव तु ।
आयस्तु फलमुद्दिष्टं प्रोक्तं मायेति निष्फलम् ।
फलाल्पत्वात्तु मायैषा सम्प्रोक्ता त्रिगुणादिका ।
महाफलप्रदत्वात्तु विष्णुराय इतीरितः' ।। इति निवृत्ते ।। २७ ।।

वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ।
शुष्कवादविवादेन कञ्चित्पक्षं न संश्रयेत् ।। ३० ।।

'वेदेन सह वादो यो वेदवाद इतीरितः ।
तर्केण वेदस्यान्यार्थकल्पनं तं विदो विदुः ।
तन्न कुर्यात्कदाचिच्च तत्कुर्वन्वेदहा भवेत्' ।। इति च ।

'योगसाङ्ख्यकणादाक्षपादा वै हेतुवादिनः ।
पञ्चवीशशाक्तबुद्धाद्या पाषण्डा इति कीर्तिता' ।। इति च ।। ३० ।।

एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ।
खं यद्वदुदपात्रेषु भूतान्येकात्मकानि च ।। ३३ ।।

'भूतानामेक एवात्ताऽथैको भूतेषु सन्ततः ।
एको भूतानि चादत्ते तस्मादेकात्मकानि तु' ।। इति भद्रमाने ।।

'घटादिषु महाकाशो निर्विशेषश्च सन्ततः ।
घटावयवरूपस्तु तथैवान्यो घटानुगः ।
घटनाशेऽप्यनाशः सन्मध्यमाकाश इष्यते ।
एकदेशाभिमानित्वादित्याकाशास्त्रयः स्मृताः ।
महाकाशो विघ्नराजो विघ्नास्तत्र तु मध्यमाः ।
क्षुद्रविघ्नास्तदितर एवमात्मा त्रिधा स्मृतः ।
महाखवत्परस्त्वात्मा जीवा मध्यखवत्स्मृताः ।
घटानुगखवत्प्रोक्ता असुरा नित्यदुःखिनः ।
महाकाशवशाः सर्वे आकाशा इतरे स्मृताः ।
परमात्मवशे तद्वज्जीवाः सर्वेऽपि संस्थिताः ।
एवं विष्ण्वात्मकमिदं जगत्पश्येद्यतिः सदा' ।। इति विनिर्णये ।।३३।।

शौचमाचमनं स्नानं न तु चोदनया चरेत् ।
अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ।। ३७ ।।

नहि तस्य विकल्पाख्या क्रिया मद्वीक्षया हता ।
आदेहा(न्तं)न्तात् क्वचित् ख्यातिस्ततः सम्पद्यते मया ।।३८।।

'स्वभावतो धर्मपरो न विधेश्चकितश्चरेत् ।
अल्पं फलं च चकिते स्वभावे फलमुत्तमम्' ।। इति च ।।

वि(विधि)रुद्धत्वेन (विधिविरुद्धत्वेन) कल्पनं विकल्पः ।

'निषिद्धं मनसा कल्प्य भीतो विहितमाचरेत् ।
अज्ञो ज्ञस्य तु सङ्कल्पः स्वभावाद्विहितानुगः ।
शरीरधर्मिणः क्वापि निषिद्धेऽपि मनो व्रजेत् ।
तथापि तस्य नानर्थो मोक्षे नैवान्यथा व्रजेत्' ।।
इति धर्मतत्त्वे ।। ३७,३८ ।।

तावत् परिचरेद् भक्तः श्रद्धावाननसूयकः ।
यावद् ब्रह्म विजानीयान्मामेव गुरुमादृतः ।। ४० ।।

'शुश्रूषेत्सहितस्तावद्यावज्ज्ञानोदयो गुरुम् ।
ततः परं च शुश्रूषेद्यथा तस्य प्रियं भवेत्' ।। इति च ।। ४० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे अष्टादशोऽध्यायः ।।



## एकोनविंशोऽध्यायः

श्रीभगवानुवाच–

यो विद्याश्रुतसम्पन्न आत्मवानानुमानिकः ।
मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि सन्न्यसेत् ।। १ ।।

'त्रिगुणा प्रकृतिर्माया पश्येत्तन्मात्रकं जगत् ।
निर्मिमीते जगत्सर्वमतो मायेति सा स्मृता' ।। इति प्रभवे ।।

'इदं ज्ञानं हरेः पूजा हरेरेवोदितं सदा ।
हर्यधीनं च सर्वत्रेत्येवं न्यासो हरौ स्मृतः' ।। इति च ।। १ ।।

त्वय्युद्भवाऽश्रयति यस्त्रिविधो विकारो
मायाऽन्तराऽऽपतति नाद्यपवर्गयो(र्यः)र्यत् ।
जन्मादयोऽस्य वद मां तव तस्य किं स्यु-
राद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ।। ७ ।।

'अन्यस्थं निर्मितं जीवे जन्मादि हरिणा यतः ।
तस्मान्मायेति तत्प्राहुर्माया निर्माणमुच्यते ।
न हि जीवस्य जन्मादि स्वतो नित्यस्य सम्भवेत् ।
सृष्टेः प्राक् प्रलये चैव यतो जन्मादि नास्य हि ।
तस्मान्मध्येऽपि नास्यास्ति देहादिस्थं तु विष्णुना ।
कर्मभिर्निर्मितं जीवे प्रलये यन्न जीवगम् ।
यन्न विद्येत हि लये यन्न विद्येत मुक्तिगे ।
जीवस्य न स्वभावोऽसौ प्रायेणेति विनिश्चितः' ।। इति प्रकाशिकायाम् ।

'मायेत्युक्तं निर्मितं तु यतो जन्मादि निर्मितम् ।
देहादिगं परेशेन माया जन्मादि तेन तु' ।। इति प्रकृते ।।

मां प्रति वद । तस्य देहादेर्जन्मादयोऽस्य चिदानन्दरूपस्य तव स्युः किम् । अस्वतन्त्रत्वादवस्तुनो जगतः आद्यन्तयोः यज्जीवस्यास्ति तदेव तस्य स्वाभाविकम् । संसारेऽपि । अन्यदभिमाननिमित्तम् । प्रलये विद्यमानस्य कथं जन्मादि स्यादिति भावः ।। तदा नाशाद्देहादेस्तु युज्यते । मुक्तिगमेव जीवस्य स्वाभाविकम् । किमु लयेऽप्यविद्यमानं स्वतः स्यादित्यर्थः ।

'आद्यन्तयोरनुगमादाद्यन्तरहितस्य तु ।
आद्यन्ते भाविनो मध्ये कथमन्यादृशं वपुः' ।। इति ब्रह्मतर्के ।।

'अनित्यत्वात्तु देहस्य तस्य जन्मादिकं भवेत् ।
मुक्तिप्रलयसम्बन्धे कथं जीवे तदिष्यते' ।। इति च ।।

'अनित्यस्य गुणा मध्ये भवेयुः स्वत एव तु ।
न तु स्वतस्तु नित्यस्य कादाचित्कगुणैर्युतिः' ।। इति च ।। ७ ।।

नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ।
ईक्षेतान्वेकमप्येषु तज्ज्ञानं मम निश्चितम् ।। १४ ।।

एतदेव हि विज्ञानं न तथैकेन येन यत् ।
स्थित्युत्पत्त्यप्यया नः स्युर्भावानां त्रिगुणात्मनाम् ।। १५ ।।

आदावन्ते च मध्ये च यज्ज्ं सृज्यं यदन्वियात् ।
पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत् ।। १६ ।।

एतदेव हि विज्ञानम् । तथापि न तथैव ।।

'ज्ञात्वा तत्त्वानि तेष्वीशं सर्वतत्त्वेश्वरं प्रभुम् ।
जानञ्ज्ञानी भवेत्स्वस्य योग्यं ध्यानं विशेषतः ।
पूर्वोक्त एव यो जानन्स विज्ञानी भवत्युत' ।। इति प्रभासे ।।

नः तत्त्वानां मध्ये येन यद्यत्र स्थित्वा च स्युः । तदेव सत् ।

'सत्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे ।
अस्वातन्त्र्यात्तदन्येषामसत्वं विद्धि भारत' ।। इति भारते ।।१४-१६।।

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणेष्वनवस्थानाद् विकल्पात् स विरज्यते ।। १७ ।।

**विकल्पात्** विरुद्धकल्पनात् ।। १७ ।।

धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् ।
गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ।। २७ ।।

'एकः प्रधानमुद्दिष्टो विष्णोः प्राधान्यदर्शनम् ।
ऐकात्म्यदर्शनं प्रोक्तं सर्वज्ञानोत्तमं च तत्' ।। इति त्रैकाल्ये ।। २७ ।।

दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः ।
गुणेष्व(सक्तः स्ववशः)सक्तधीरीशो गुणसङ्गो विपर्ययः ।। ४५ ।।

'विषये दोषबुद्धिः सन्निन्द्रियाणां वशे स्थितः ।।
कृपणः स तु सम्प्रोक्तो गुणबुद्धिर्विपर्ययः' ।। इति विवेके ।।

'पुरुषार्थमतिर्यस्य विषयेष्वेव देहिनः ।
विपरीतः स विज्ञेयः स्वात्मनो विपरीततः' ।। इति निवृत्ते ।।

वित्तासन्तोषमात्राद्दरिद्रः । सर्वविषयसङ्गी **विपरीतः** ।। ४५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे एकोनविंशोऽध्यायः ।।



## विंशोऽध्यायः

गुणदोषभिदादृष्टिर्नियमात् तेन हि स्वतः ।
नियमेनापवादश्च भिदाया इति हि भ्रमः ।। ५ ।।

श्रीभगवानुवाच–

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ।। ६ ।।

निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कर्मिणाम् ।। ७ ।।

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ।। ८ ।।

'स्वतः सर्वगुणात्मा तु विष्णुरेकः सनातनः ।
अन्यत्सर्वं तत्प्रियत्वाद्गुणो दोषस्तथाऽप्रियम् ।
एवं ज्ञानवतां दृष्टिरज्ञस्तन्नावगच्छति ।
कालदेशविशेषेषु प्रीतिभेदमवेक्ष्य तु ।
अविज्ञानवतस्तस्य मर्यादा वेदतः कृता ।
गुणदोषभिदा नास्ति भगवत्प्रियमन्तरा ।
गुणदोषदृशेर्दोषो ह्यन्यत्र भगवत्प्रियात् ।
गुणाश्च दो(यद्दो)षतामीयुर्दोषाश्च गुणतां क्वचित् ।

'अतो दोषो न दोषः स्यान्न गुणोऽपि गुणो भवेत् ।
भगवत्प्रीतिविज्ञानाद्गुणदोषभिदां यदि ।

पश्येत्तत्तु गुणायैव विपर्यासं न कारयेत् ।
गुणदोषभिदा क्वापि स्वातन्त्र्येण न हि क्वचित्' ।। इति ब्रह्मनये ।।

'स्वतस्तु गुणदोषत्वदृशेर्भेदेन वस्तुनाम् ।
दोषोऽथ गुण एव स्याद्भगवत्प्रीतितो गुणः ।
दोषस्तु तद्वैपरीत्याददिति दृष्ट्या भवेद्गुणः ।
कालदेशविशेषेण प्रीत्यज्ञानाज्जगत्स्थितेः ।
मर्यादा गुणदोषाणां कृता वेदेषु सर्वशः ।। इति परायणे ।।

एतदेवोच्यते ।

'स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः' ।। इति च ।।

'सनकाद्या ज्ञानयोगा भक्तियोगास्तु देवताः ।
मानुषाः कर्मयोगास्तु त्रिधैते योगिनः स्मृताः ।
सर्वेषां सर्वयोगैश्च प्राप्या मुक्तिर्न संशयः ।
तथापि तु विशेषेण स स तेषां विधीयते ।
भगवद्गुणानुसारेण वेदार्थो नीयते हि यैः ।
भक्तियोगास्तु ते प्रोक्तास्तादृशा हि सुराः सदा ।
अङ्गानुसारि वेदार्थं ज्ञात्वा तदनुसारतः ।
भगवद्गुणा यैर्नीयन्ते ते प्रोक्ता ज्ञानयोगिनः ।
कर्माणि शास्त्रतो ज्ञात्वा तत्प्राधान्यानुसारतः ।
विज्ञाता यैर्गुणा विष्णोर्ज्ञेयास्ते कर्मयोगिनः ।
भक्तिर्ज्ञानं च किञ्चित्तु पश्चात्तेष्वपि जायते ।
तथापि ते कर्मयोगाः कर्मपूर्वत्वकारणात् ।

भगवद्गुणानुरागित्वमधिकं भक्तियोगिनाम् ।
तस्मात्तेऽभ्यधिका ह्येषु देवा एव विशेषतः ।
ईषद्वैराग्यमल्पं तु पूर्वं देवेषु जायते ।
पश्चाद्विरागोऽभ्यधिको देवानां नात्र संशयः ।
ज्ञानाधिक्यं तु देवानां भक्त्याधिक्यं तथैव च ।
विरागोऽभ्यधिकस्तेषां सदैव सनकादिनाम् ।
ज्ञानाधिक्यान्मनुष्येभ्यो भण्यन्ते ज्ञानयोगिनः ।
न तु ज्ञानाधिकास्ते वै देवेभ्यस्तु कथञ्चन ।
देवानामपि कर्मित्वं विद्यते यद्यपि स्फुटम् ।
तथापि प्रत्यवायित्वान्मनुष्याः कर्मयोगिनः ।
त्रियोगाभ्यधिको ब्रह्मा सर्वेभ्यः परमो विभुः ।
महायोगेश्वरेशेशस्तस्माद्ब्रह्मा चतुर्मुखः' ।। इति त्रियोगे ।। ५-८ ।।

नृदेहमासाद्य सुदुर्लभं यः
प्लवं सुकल्पं (सुकल्यं) गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं
पुमान् भवाब्धिं न तरेत् स मार्गणः ।। १७ ।।

मार्गणवच्छरीरान्ते पतति ।। १७ ।।

कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।
गुणदोषविधानेन त्वंहसां त्याजनेच्छया ।। २७ ।।

स्वतोऽशुद्धानां कर्मणाम् । अनेन गुणदोषविधानेन नियमः कृतः । स्वतोऽशुद्धत्वेऽपि कर्मणां विध्यनुसारेणानुष्ठाने गुणत्वमेवेत्यर्थः ।।२७।।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ।। ३१ ।।

**हृदयग्रन्थिः** अन्तःकरणाख्यो बन्धः ।। ३१ ।।

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानान्न च वैराग्यात् प्रायः श्रेयो भवेदिह ।। ३२ ।।

मद्भक्तियुक्तस्य भक्त्यनुसारिज्ञानवैराग्ये विनाऽन्यस्माज्ज्ञानाद्वैराग्याच्च न श्रेयो भवेत् ।

'रागिणोऽपि विमुच्यन्ते देवा नास्त्यत्र संशयः ।
रागापनोदनार्थं च ज्ञानं साध्यं यतीश्वरैः' ।। इति च ।।

'स्मर्तव्या विषये दोषा यतिभिर्न तु दैवतैः ।
हरिरेव सदा पूज्य इत्यर्थं दैवतैरपि' ।। इति च ।।

वैराग्यार्थमपि विषयदोषादिज्ञानं सनकादीनां भाव्यं देवानां तदपि भगवद्भजनस्यैव सारतापरिज्ञानार्थमेवेत्यर्थः ।। ३२ ।।

यत् कर्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ।। ३३ ।।

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ।। ३४ ।।

न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ।। ३५ ।।

नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमकल्मषम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ।। ३६ ।।

न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः पार(पर)मुपेयुषाम् ।। ३७ ।।

एवमेतान् मयाऽऽदिष्टाननुतिष्ठन्ति मे पथः ।
क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ।। ३८ ।।

रागिणोऽपि ते भक्तियोगिनो भक्तिफलत्वेन किमपि नापेक्षन्ते ।।

'यदि दद्याद्भक्तियोगफलं मोक्षमपीश्वरः ।
भक्तियोगफलत्वेन न तद्गृह्णीयुरेव ते ।
कामिनोऽपि स्वयं कामान्भुञ्जते न फलात्मना ।
तस्माद्विरागेऽप्यधिका देवा एव हि तादृशाः' इति च ।। ३५ ।।

'उत्तमो भक्तियोगस्तु ज्ञानयोगस्तु मध्यमः ।
अधमः कर्मयोगश्च ब्रह्मैको मुख्यभक्तिभाक् ।
ज्ञानमप्यधिकं तेषां नियतं भक्तियोगिनाम् ।
उदेति भगवद्भक्त्या तद्वन्न ज्ञानयोगिनः ।
भक्त्यंशकं यतो ज्ञानं ज्ञानस्नेहात्मिका च सा ।
तथापि ज्ञानयोगित्वं मानुषज्ञानतोऽधिकम् ।
भक्तियोगे ततो यत्नः कार्यो विद्वद्भिरञ्जसा' ।। इति च ।। ३८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे विंशोऽध्यायः ।।



## एकविंशोऽध्यायः

शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।
द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ।। ३ ।।

भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः ।
आब्रह्मस्थावरादीनां शरीरा आत्मसंयुताः ।। ५ ।।

भेदेन नामरूपाणि विषमाणि समेष्वपि ।
धातुशुद्ध्यै विकल्प्यन्त एतेषां स्वार्थसिद्धये ।। ६ ।।

विवेकेन पुण्याधिक्यं भवतीति विचिकित्सार्थं गुणदोषौ विधीयेते ।

'पञ्चभूतात्मकत्वेन समता सर्ववस्तुषु ।
हरिसन्निधिवैशेष्याद्विशेषश्च महान् सदा' ।। इति वैशेष्ये ।।

**धातुः** परमेश्वरः ।

'यद्यद्धरेः सन्निहितं तत्तच्छुद्धतरं मतम् ।
स्वतः शुचितमो विष्णुः सान्निध्यं च स्वभावतः' ।। इति च ।।

एतेषां जीवानाम् ।। ३,५,६ ।।

कृष्णसारोऽथ देशानां ब्राह्मणानां शुचिर्भवेत् ।
कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणः ।। ८ ।।

कर्मण्यो गुणवान् कालो द्रव्यतः स्वत एव वा ।
यतो निवर्तते कर्म सदोषोऽकर्मकः स्मृतः ।। ९ ।।

'नदीसमुद्रगिरय आश्रमाश्च वनानि च ।
नगराणि च दिव्यानि शालग्रामादयस्तथा ।
तेषां समीपगाश्चैव देशा योजनमात्रतः ।
कर्मण्यास्तु समाख्यातास्तदन्ये कीकटाः स्मृताः ।
तदन्येऽपि तु ये देशाः कृष्णसारोषिताः स्वतः ।
कर्मण्या एव ते ज्ञेया यदि नाध्युषिताः खलैः ।
खलैरध्युषिताश्चापि यदि सद्भिरधिष्ठिताः ।
कर्मण्या इति विज्ञेया विष्णुलिङ्गानि यत्र च' ।। इति स्कान्दे ।।

'आन्तरः सन्निधिर्विष्णोर्बाह्यसन्निधिरेव च ।
द्विविधः सन्निधिः प्रोक्तः कृत्रिमो बाह्य उच्यते ।
स्वाभाविकस्त्वान्तरः स्यात् प्रतिमाजीवगो यथा' ।। इति च ।। ९ ।।

**क्वचिद् गुणोऽपि दोषः स्याद् दोषोऽपि विधिना गुणः ।**
**गुणदोषार्थनियमस्तद्भिदामेव बाधते ।। १६ ।।**

तद्भिदामेव । न तिर्यगादीनाम् ।

'वर्षाच्चतुर्दशादूर्ध्वं ये न विद्युः शुभाशुभम् ।
तेषामज्ञानजो दोषः सुमहान् कर्मजादपि ।
तिरश्चामिन्द्रियास(श)क्तेर्न दोषोऽज्ञानजो भवेत् ।
गुणोऽपि नैव कश्चित् स्याद्यतो ज्ञानबहिष्कृताः' ।। इति च ।

अतो मूर्खाणामदोष इति न ।। १६ ।।

**समानकर्माचरणेऽपतितानां न पातकम् ।**
**औत्पत्तिको गुणैः सङ्गो न शयानः पतत्यधः ।। १७ ।।**

यतो यतो निवर्तेत विमुच्येत ततस्ततः ।
एष धर्मो नृणां क्षेमः शोकमोहभयापहः ।। १८ ।।

**समानकर्माचरणे** आत्मयोग्यकर्माचरणे । पूर्वमपतितो येन पतति । प्रायश्चित्तत्वेन तत्समानकर्माचरणेऽपि न दोषः । तप्तसुरापानवद्देहत्यागिनः । तथा शयानः शूद्रोऽपि न पतति लशुनभक्षणादिभिः ब्राह्मणादिपातकैः । औत्पत्तिको यतस्तस्य तादृशगुणसङ्गः । अतः स्वायोग्य एव कर्मणि पतति ।

'त्रैवर्णिकाः सञ्चरन्तो वेदकर्मप्रवर्तनात् ।
शयानः शूद्र उद्दिष्टो वेदकर्माप्रवर्तनात् ।
न तस्याभक्ष्यजो दोषः शुश्रूषायां प्रवर्ततः ।
यथा सुवर्णस्य मलं शुक्रं ताम्रस्य नैव तत् ।
एवं विप्रादिदोषैस्तु न शूद्रो दोषितामियात् ।
मलं तु तस्यापि मलं यथैवं शूद्रजन्मनः ।
स्वधर्मप्रतिरूपस्य चरणं दोषदं मतम्' ।। इति च समाचारे ।।

'शूद्रस्यापि हरेर्दीक्षां प्रविष्टस्य तु विप्रवत् ।
अभक्ष्यादिकृतो दोषः स हि शूद्रो हि मुख्यतः' ।। इति विष्णुतन्त्रे ।।

सर्वतोऽप्यभिमानविमोकेन परमात्मसमर्पणमेव दोषहानिदमित्याह **यतो यत** इत्यादिना ।

'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा' ।
इत्यादेश्च ।। १७,१८ ।।

विषयेषु गुणध्यानात् पुंसः सङ्गस्ततो भवेत् ।
सङ्गादेव भवेत् कामः कामादेव कलिर्नृणाम् ।। १९ ।।

कलेर्दुर्विषहः क्रोधस्तमस्तदनुवर्तते ।
तमसा ग्रस्यते पुंसश्चेतना व्यापिनी ततः ॥ २० ॥

तया च रहितः साधो जन्तुः शून्याय कल्पते ।
ततोऽस्य स्वार्थविभ्रंशो(ऽ)मूर्च्छितस्य मृतस्य च ॥ २१ ॥

विषयाभिनिवेशेन नाऽत्मानं वेद नापरम् ।
वृक्षजीविकया जीवन् व्यर्थं ग्रस्तवयाः श्वसन् ॥ २२ ॥

'दोषिणो गुणवत्त्वेन श्रूयन्ते विषयाः सदा ।
असतां सङ्गतेस्तेषु दोषाः श्रोतुं सुदुर्लभाः ।
अतो नित्यगुणध्यानात् तद्गुणे प्रीतिमान् भवेत् ।
अतस्तत्र भवेत्कामः कामिनं कलिराविशेत् ।
अधर्माज्ञानरूपेण कलिनाऽऽविष्टदेहिनः ।
सत्सु क्रोधो दुर्विषहस्ततस्तमसि पात्यते ।
अन्धे तमसि मग्नस्य चेतनेन्द्रियसन्तता ।
सुखानुभवशक्तिर्या सा विनश्यति सर्वदा ।
तदा शमूनभावेन शून्य इत्युच्यते नरः ।
सर्वात्मना तु शम्भ्रंशस्तस्य दुःखविवर्धनः ।
अमूर्च्छितस्यैव भवेन्मृत्यनन्तरमेव च ।
दुःखाख्यविषयावेशान्नाऽत्मानं परमेव च ।
यथावद्वेत्ति पतितस्तमस्यन्धे कदाचन ।
वृक्षवद्वृश्च्यते नित्यं निष्प्रयोजनजीवनः ।
नित्यदुःखपरीतायुर्दृतिवत् प्रश्वसित्यपि' ॥ इति तन्त्रभागवते ।

स्वार्थस्य सुखस्य भ्रंशो विपरीतमतिशयेन जनयतीति स्वार्थविभ्रंशः ।। १९-२२ ।।

फलश्रुतिरियं नृणां नः श्रेयोरोचनं परम् ।
श्रोतुर्विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ।। २३ ।।

उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ।
आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ।। २४ ।।

न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ।
कथं युञ्ज्यात् पुनस्तेषु तांस्तमो विशतो बुधः ।। २५ ।।

तस्मात् स्वर्गादिविषयेष्वपि नेच्छेत ।

'फल(स्य)श्रुतिरेवेयं न कामकुसुमश्रुतिः ।
स्वर्गादिकामनायुक्तस्त्वैहिकेष्वपि सज्जते ।
तत्रापि देवकामेभ्यो विशेषं चाभिवाञ्छति ।
ततस्तमसि पातः स्यादतो वेदः कथं हि तान् ।
काम्यत्वेनाभिचक्षीत सर्वं जानन्स्वयं सदा' ।। इति ।।

नः श्रेयोरोचनं अस्मत्सकाशाच्छ्रेयो मोक्षाख्यं तदेव रोचयति फलश्रुतिः । कुसुमस्यानित्यतादिदोषज्ञानान्मोक्षस्यादोषत्वज्ञानाच्च । ईषदुत्तमस्य श्रोतुर्विवक्षया । बुधो वेदः कथं युञ्ज्यात् । अन्तरालागतोऽपि स्वर्ग एवंविधः किमु साक्षात् फलरूपो मोक्ष इति रोचकः । अनेकब्रह्मकालप्राप्यत्वान्मोक्षस्य तावन्तं कालं तप एव कर्तुं न शक्यत इति मन्दाधिकारिणां स्वर्गादिष्वप्यभिरुचिर्भवति । तान् प्रत्यन्ते मोक्ष एव भवति । अन्तरालेऽप्येवंविधस्वर्गादिकं सुखं भवति । तस्माद्विहितं कर्म कर्तव्यमिति रोचयति ।

उत्तमानां तु यस्मादेतादृशमप्यनित्यत्वादिदोषवत्स्वर्गादिकं तस्मान्मोक्षफल एव वेद इति दर्शयति । न हि सर्वप्रमाणोत्तमो वेदोऽल्पफले पर्यवसितः ।

'मन्दाधिकारिणां नित्यं तपसैव प्रतीक्षितुम् ।
मोक्षो न शक्यतेऽधैर्यात् ततः स्वर्गादिकं वदेत् ।
स्वर्गादिष्वल्पफलतां ज्ञापयित्वा विमोक्षदम् ।
ज्ञानं वक्तुं तूत्तमानां नित्यो वेदः प्रवर्तते ।
इक्षुदण्डं ददानीति यथा भैषज्यरोचनम् ।
एवं मन्देषूत्तमेषु मोक्षमाहात्म्यमुच्यते ।
नह्यल्पफलभाग्वेदो वासुदेवैकसंश्रयः' ।। इति विचारे ।।

'अयोग्यभार्यापुत्रादिकामिताऽनर्थसाधिनी ।
योग्यकामाद्धरेः प्रीतिरतो ब्रह्मादयोऽमलाः ।
भार्यापुत्रादिसंयुक्ता वासुदेवमुपासते' ।। इति च ।। २३-२५ ।।

एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ।
फलश्रुतिं कुसुमितामवेदज्ञा वदन्ति हि ।। २६ ।।

**एवं** वेद(स्य)व्यवसितम् । **फलश्रुतिं कुसुमिताम्** । फलं मोक्षः । तद्विषयां श्रुतिं स्वर्गादिकुसुमविषयां वदन्ति ।

'नित्यानन्द(न्दो)हरेर्भक्तिज्ञानाद्याः स्वर्गशब्दिताः ।
पुत्रभार्याप्तवित्ताद्यं सर्वं मोक्षगतं फलम् ।
उद्दिश्य स्वर्गकामस्य यजनं श्रुतिचोदितम् ।
तदविज्ञाय पुष्पाख्यमनित्यं स्वर्गमिच्छवः ।
यजन्ति मन्दमतयो वेदवादपरायणाः' ।। इति च ।

'स्त्रीभिर्वा यानैर्वा' ।। इत्यादि च ।।

'मोक्षाख्यं फलमेवात्र स्वर्गादिवचनं तु यत् ।
पुष्पस्वर्गादिवत्तस्य वचनं मन्दरोचनम्' ।। इति च ।।

'असुराणामयं स्वर्गशब्दः पुष्पात्मकं वदेत् ।
देवानां हरिसम्प्राप्तिं वेदो विष्णुपरो यतः' ।। इति च ।। २६ ।।

कामिनः कृपणा लुब्धाः पुष्पेषु पलबुद्धयः ।
अग्निमुग्धा धूमतान्ताः स्व(स्वं)लोकं न विदन्ति ते ।। २७ ।।

न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः ।
उक्थशासो ह्यसुतृपो यथा नीहारचक्षुषः ।। २८ ।।

ते मे मतमविज्ञाय परोक्षविषयात्मकाः ।
हिंसायां यदि कामः स्याद् यज्ञ एव न चोदना ।।२९।।

**स्व(स्वं)लोकं** स्वाश्रयम् ।।

कोऽसावाश्रयः? माम् । ते ये उक्थेन प्राणेन शास्याः ।

'विष्ण्वभक्तान् सदा वायुः शासयेत् तमसि क्षिपन् ।
विष्णुभक्तान् विमोक्षाय प्रापयित्वा सुखं नयेत्' ।। इति च ।।

'पथ एकः पीपाय तस्करो यथा एष वेद निधीनाम्' ।। इति च ।

मे मताविज्ञानात्परोक्षविषयात्मकाः । परोक्षमन्धन्तमः । तद्विषय-स्वरूपाः । तद्गमनार्थ(तद्भ्रमणार्थ)स्वरूपाः ।

'अन्धन्तमः परोक्षं च पश्चकष्टं तथोच्यते' । इति सुव्यक्ते ।।

तेषा(म)मासुराणां यदा हिंसायां कामः तदा यज्ञ एव न चोदना । यद्यदात्मनो हिंसितुमिष्टं तत्तद्विहितमिति प्रापयन्ति कुतर्कैः ।

'आसुरोऽविहितां हिंसां विहितत्वेन वर्णयेत् ।
आसुरा याज्ञिकाः सर्वे नारायणपराङ्मुखाः' ।। इति च ।।२७-२९।।

हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ।
यजन्ते देवता यज्ञैः पितॄन् भूतपतीन् खलाः ।। ३० ।।

'विष्णुं विहाय ये देवान्पितॄन् भूतेशमेव वा ।
साम्येन वा पूजयन्ति ते ज्ञेया आसुरा गणाः' ।। इति च ।।३०।।

रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ।
उपासते इन्द्रमुख्यान् देवादी(नयथैव)न् न यथैव माम् ।।३२।।

तामसेष्वेव रजःसत्त्वतमोनिष्ठाः ।

'तामसेषु तु ये सत्त्वा निरयप्रचुरास्तु ते ।
ईषत्स्वर्गादिसंयुक्ता एवं निष्ठाश्च ते स्मृताः ।
केवलं निरये निष्ठा ये ते तामसराजसाः ।
अन्धे तमसि ये निष्ठास्ते वै तामसतामसाः ।
एवं त्रिभेदयुक्तास्तु याज्ञिका विष्णुवर्जिताः' ।।
इति हरिवंशेषु ।। ३२ ।।

वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया अपि ।
परोक्षवादो वेदोऽयं परोक्षं मम च प्रियम् ।। ३५ ।।

'ब्रह्मत्वं पूर्णता प्रोक्ता तद्यस्य स्वत एव तु ।
स ब्रह्मात्मा समुद्दिष्टो वासुदेवः सनातनः' ।। इति च ।। ३५ ।।

शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ।। ३६ ।।

प्राणेन्द्रियमनोभिर्मीयते ।

'मेयत्वान्मय उद्दिष्टो वेदः प्राणादिभिः सदा' ।। इति वाराहे ।।

'अन्तो विनाश उद्दिष्टः पारः परिमितिस्तथा ।
अनन्तपारो वेदोऽयं ताभ्यां स रहितो यतः' ।।
इति व्यासस्मृतौ ।। ३६ ।।

मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना ।
भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ।। ३७ ।।

भूम्ना ब्रह्मणा अतिमहापूर्णेन ।। ३७ ।।

यथोर्णनाभिर्हृदयादूर्णामुद्वहते मुखात् ।
आकाशाद् घोषवान् प्राणो मनसाऽऽस्पर्शरूपिणा ।। ३८ ।।

छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ।
ओङ्कारेष्वञ्जितां स्पर्शस्वरोष्मान्तस्थभूषिताम् ।। ३९ ।।

विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः ।
अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ।। ४० ।।

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् जगत्यतिच्छन्दो ह्यष्ट्यत्यष्टी जगद् विराट् ।। ४१ ।।

आस्पर्शरूपिणा । आस्पर्शो विष्णुस्तं रूपयति प्रकाशयतीत्यास्पर्शरूपि प्राणस्य मनः । आसमन्तात् स्पर्शा भोगा अस्यैवेत्यास्पर्शः ।

'भुङ्क्ते यदखिलान् स्पर्शानास्पर्शो विष्णुरुच्यते ।
तस्य प्रकाशकं नित्यं नमस्ये प्राणमेकलम् ।
प्राणस्यैव मनो नित्यं वासुदेवं प्रकाशयेत्' ।। इति वायुप्रोक्ते ।।

'मीयन्तेऽनेन छन्दांसि प्राणश्छन्दोमयस्ततः' इति च ।

'त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकः ।
प्रणवास्ते विभेदेन ह्यनन्ताः परिकीर्तिताः ।
एकमात्रोत्तराः सर्वे वासुदेवाभिधायकाः ।
तेषां व्याख्यानरूपा हि सर्वे वेदाः प्रकीर्तिताः ।
ओङ्कारेणाञ्जिताः (ओङ्कारेणान्विताः) तस्मात् सदोच्चार्या हरेः प्रियैः ।।
इति प्रणवमहात्म्ये ।।

'गुह्यदर्शनभाषे च भाषा चैव समाधिका ।
तिस्रस्तु मूलभाषाः स्युरेकैका च त्रिधा पुनः ।
गुह्यदर्शनसञ्ज्ञा च गुह्यगुह्या तथाऽपरा ।
एवमादिक्रमेणैव त्वेकाशीतिविभेदिताः ।
भाषास्तत्र च गुह्या च प्रसिद्धार्थेष्वनन्विता ।
गुह्यार्थतत्परैवान्धो मणिमित्यादिका च सा ।
दर्शनान्यवलम्ब्यैव पशुपत्यादिनां तु या ।

बहुश्रुतिविरुद्धं तु वदेत्सा दर्शनात्मिका ।
अन्ते निषेधसंयुक्ता भस्मस्नानादिका च सा ।
यथा प्रदृश्यमानार्था समाधिः सा प्रकीर्तिता ।
विष्णुः परम इत्याद्या सा च विद्वद्भिरीरिता' ।। इति भाषाविवेके ।

'भस्मस्नानविधानं तु श्रुत्युक्तं दर्शनानुगम् ।
भस्मस्नानं ततोऽग्राह्यं विधानं तु नृसिंहगम्' ।। इति स्कान्दे ।

गायत्र्या उष्णिक् चतुर्वर्णाधिकेत्यादि चतुरुत्तरैः ।

जगत्यन्तानामेव चतुरुत्तरत्वनियमः–

'छन्दस्तु नवपादं यज्जगदित्युच्यते बुधैः' ।।
इति छन्दोविधाने ।। ३८-४१ ।।

**किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।**
**इत्यस्या हृदयं लोके (साक्षात्) नान्यो मद् वेद कश्चन**
**।। ४२ ।।**

**मां विधत्तेऽभिधत्ते मां विकल्पा(ल्प्यो)पोह्य इत्यहम् ।। ४३ ।।**

विविधरूपत्वेन कल्पनं **विकल्पः**– 'चत्वारि वाक्' इत्यादि । तत्र वागित्यनुवादः ।

'विधिभागे हरेः पूजैवाभिधाने च तद्गुणाः ।
विकल्पे तद्बहुत्वं चाप्यपोहे तु तदप्रियम् ।
उच्यते सर्ववेदेषु तच्च वेद स एव हि' ।। इति आगमतात्पर्ये ।

'सुरा हरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् ।
सुरापानमिति प्रोक्तं तन्न कुर्यात् कथञ्चन ॥
ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनम् ।
ब्रह्महत्या समुद्दिष्टा तां न कुर्यात् कथञ्चन ।
इत्याद्यपोहवाक्यार्थश्चिन्त्यो विष्णुर्बुधैर्जनैः' ॥ इत्यादि च ।

मदन्यः कश्चन कोऽपि न वेद ॥ ४२-४३ ॥

एतावान् सर्ववेदार्थः शब्द आस्थाय माऽभिदाम् ।
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रशाम्यति ॥ ४४ ॥

अभिदश्च स एव अश्च अभिदाः तं अभिदां मामास्थाय, **मायामात्रं** मदिच्छानिर्मितं शरीरादिकं अनूद्य, उपासनादिकं विधाय, मोक्षरूपेण तच्छरीरादिकं प्रतिषिध्य प्रशाम्यति ।

'सर्वावताररूपेषु निर्भेदत्वाददोषतः ।
अभिदा विष्णुरुद्दिष्टस्तमेवोक्त्वा तदिच्छया ।
निर्मितं दैहिकं बन्धं तस्योपासन एव तु ।
प्रतिषिध्य विमोक्षे तु स्वभावोपास्तिरूपतः ।
प्रतिशाम्यति वेदोऽयं वासुदेवैकसंश्रयः' ॥ इति च ।

अभिदामास्थाय कोऽपि शब्दो मे(ने)ति वा ॥ ४४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे एकविंशोऽध्यायः ॥

*** *** ***

## द्वाविंशोऽध्यायः

श्रीभगवानुवाच–

युक्तयः सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ।
मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ।। ४ ।।

नैतदेवं यथाऽऽत्थ त्वं यदहं वच्मि तत् तथा ।
एवं विवदतां हेतुः शक्त्यो मे दुरत्ययाः ।। ५ ।।

यासां व्यतिकरादासीद् विकल्पो वदतां पदम् ।
प्राप्ते शमदमे व्येति (शमदमेऽप्येति) वादस्तमनु शाम्यति ।। ६ ।।

परस्परानुप्रवेशात् तत्त्वानां पुरुषर्षभ ।
पौर्वापर्यप्रसङ्ख्यानं यथा वक्तुर्विवक्षितम् ।। ७ ।।

**मायां** मदीयां मत्सामर्थ्यम् ।

'विष्णोः सामर्थ्यमालम्ब्य तत्त्वसङ्ख्यां मुनीश्वराः ।
चक्रुर्हि तदविज्ञाय विवदन्त्यल्पबुद्धयः ।
तत्रापि कारणं विष्णोः शक्तिर्यस्या विकारतः ।
अव्यक्तादेर्विकल्पोऽयं मनसः सम्प्रजायते ।
विरुद्धकल्पनं तच्च वासुदेवैकनिष्ठया ।
निरहङ्कारया नश्येद्विवादैकाश्रयं हि तत्' ।। इति तन्त्रभागवते ।।

यासां सकाशादव्यक्तादिव्यतिकराद्विकल्पो विरुद्धकल्पः । स हि विवादाश्रयः । तत्त्वसङ्ख्या विवक्षाभेदेन बहुधा भवति ।। ४-७ ।।

एकस्मिन्नपि दृश्यन्ते प्रविष्टानीतराणि च ।
पूर्वस्मिन् वाऽपरस्मिन् वा तत्वे तत्वानि सर्वशः ।। ८ ।।

पौर्वापर्यमथोऽमीषां प्रसङ्ख्यानमभीप्सताम् ।
यथा विविक्तं यद्युक्तं गृह्णीमो युक्तिसम्भवात् ।। ९ ।।

अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ।
स्वतो न सम्भवेद् यस्मात् ततोऽन्यः पुरुषो भवेत् ।। १० ।।

सर्वथा जीवादन्यः परमेश्वरोऽङ्गीकर्तव्यः । जीवस्य स्वत एव ज्ञानायोगात् ।। ८-१० ।।

पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ।
तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ।। ११ ।।

स च पुरुषरूपेण तत्स्थितो ज्ञानमुत्पादयति । ईश्वररूपेण बहिःस्थितः फलं ददाति । न च तयोः स्वरूपयोः किञ्चिद्वैलक्षण्यम् । तयोश्चान्यत्व-कल्पना तत्स्वरूपादपगमनप्रयोजनाऽनर्थकारिणीत्यर्थः । ज्ञानस्वरूपस्य जीवस्य कथं ज्ञानोत्पादनमित्यतो वक्ति ज्ञानं च प्रकृतेर्गुण इति । जन्यज्ञानं प्रकृतेर्गुणः ।

'स्वरूपभूतज्ञानं तु सदा जीवस्य विष्णुना ।
नियतं प्राकृतं ज्ञानं भक्त्या तेनैव दीयते' ।। इति च ।। ११ ।।

प्रकृतेर्गुणसाम्ये तु प्रकृतेर्नाऽत्मनो गुणाः ।
सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ।। १२ ।।

जन्यज्ञानस्य प्राकृतत्वं साधयति – प्रकृतेर्गुणसाम्ये त्वित्यादिना ।।

अन्तःस्थः पुरुषो नाम ज्ञानदः सर्वदेहिनाम् ।
बहिःस्थ ईश्वरो नाम ज्ञानादिफलदो हरिः' ।। इति मात्स्ये ।।

'पुरुषाख्यो हृद्गतस्तु विष्णुर्जीवविबोधकः ।
फलदात्रा तु बाह्येन य ईशेन भिदां वदेत् ।
तथैवान्यस्वरूपेषु विष्णोर्यो भेददर्शकः ।
यश्च जीवेश्वराभेदं पश्येत् तेऽनर्थभागिनः' ।। इति ब्राह्मे ।। १२ ।।

सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ।
गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ।। १३ ।।

कालो भगवान् ।। १३ ।।

पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः ।
ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ।। १४ ।।

श्रोत्रं त्वग् दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ।
वाक्पाण्युपस्थपाय्वङ्घ्रि कर्माण्यङ्गोभयं मनः ।। १५ ।।

शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः ।
गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ।। १६ ।।

सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ।
सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्तमीक्षते ।। १७ ।।

व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ।
लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ।। १८ ।।

'नवैकादश पञ्च त्रीणि' इत्युक्तानि पुरुषः प्रकृतिरित्यादीनि ।।

उत्सर्गस्य द्विविधत्वात् पञ्चकद्वयम् ।।

त्रीनिति त्रिगुणानिति वक्तुं गुणप्रवृत्तिमाह– **सर्गादावित्यादिना ।।**

कार्यकारणभावादन्योन्यानुप्रवेशो युक्त इति वक्तुं सृष्ट्युक्तिः ।

'सृज्यस्रष्टृस्वरूपत्वादन्योन्यानुप्रवेशिनः ।
तिष्ठन्ति तात्विका देवा विशेष(प्रीति)प्राप्तिकारणात्' । इति नैसर्गे ।।

'अन्वेकमप्येषु' इत्युक्तत्वात् पुरुषो हिरण्यगर्भः ।

'यदा पुरुषशब्देन विरिञ्चस्यैव वाच्यता ।
परस्य पृथगुक्त्यैव व्यक्तस्तत्र तु शङ्करः ।
तदाऽहङ्कारशब्देन स्कन्दस्यैव वचो भवेत्' ।। इति विवेके ।।१४-१८।।

**सप्तैव धातव इति यत्रार्थाः पञ्च खादयः ।**
**ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ।। १९ ।।**

सत्वादीन् गत्यादींश्च विना परमात्मना सह षड्विंशतिः । महदहङ्कारौ ब्रह्मरुद्रौ अङ्गीकृत्य स्कन्दं विना परमात्मना सह पञ्चविंशतिः ।

'विषयेन्द्रियप्रकृतिदेवताः परमात्मना ।
पञ्चविंशतितत्त्वानि सङ्ख्यातानि विदो विदुः' ।। इति च ।

'ज्ञानशब्दोदितो ब्रह्मा तदाधारो हरिः स्मृतः' । इति च ।।

ततो ज्ञानं विना परमात्मानमङ्गीकृत्यैव देहेन्द्रियाण्यसुश्च नव तत्त्वानि ।

'सर्वदेहाभिमानी तु देहिनां तु दिवाकरः ।
इन्द्रियात्मेन्द्र एवैकः प्राणो नाम प्रजापतिः' ।। इति च ।। १९ ।।

चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ।
जातानि तैरिदं जातं जन्मावयविनः खलु ।। २१ ।।

अवयविनो जन्म तैः खलु ।। २१ ।।

सङ्ख्याने सप्तदशके भूतमात्रेन्द्रियाणि च ।
पञ्चपञ्चैकमनसा आत्मा सप्तदशः स्मृतः ।। २२ ।।

'भूतानि मात्राश्च परस्तत्त्वैकादशकं स्मृतम्' । इति च । भूतमात्रेत्यारम्भात् तत्सिद्धेरेकादशानां पृथगनुक्तिः ।। २२ ।।

तद्वत् षोडशसङ्ख्यानि आत्मना मन उच्यते ।
भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ।। २३ ।।

इति नानाप्रसङ्ख्यानं तत्वानामृषिभिः कृतम् ।
सर्वं न्याय्यं युक्तिमत्त्वाद् विदुषां किमशोभनम् ।। २४ ।।

आत्मना सहैव मन उच्यते ।

'आत्मनः सन्निधिस्थत्वान्मनसस्तु तदुक्तितः ।
उक्तो भवेत्परात्माऽपि तत्त्वषोडशकं यदा' ।। इति च ।

आत्मशब्देन च ब्रह्मा परमात्मा चोभावुच्येते ।

'भूतेन्द्रियाणि च मनो ब्रह्मा विष्णुस्तथैव च ।
एवं त्रयोदशैवाऽहुस्तत्त्वानि मुनयो वराः' ।। इति च ।

'आत्मेति परमात्मा च विरिञ्चश्चापि कथ्यते ।
वायुर्मनश्च देहश्च स्वयमित्यपि कुत्रचित्' ।। इति प्रत्यये ।।२३,२४।।

उद्धव उवाच–

प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ।
अन्योन्यापाश्रयात् कृष्ण दृश्यते न भिदा तयोः ।
प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथाऽऽत्मनि ।। २५ ।।

एतन्मते पुण्डरीकाक्ष महान्तं संशयं हृदि ।
छेत्तुमर्हसि पद्मेश वचोभिस्तत्त्वनैपुणैः ।। २६ ।।

त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तनुशक्तितः ।
त्वमेव ह्यात्ममायाया गतिं वेत्थ नचापरः ।। २७ ।।

यद्यपि परमात्मा प्रकृतिश्च विलक्षणौ तथापि तयोर्वैलक्षण्यं न लक्ष्यते ।

'अन्तरं च भिदा चेति वैलक्षण्यं प्रकीर्तितम्' । इति च ।

तद्वैलक्षण्यं कुतो न दृश्यत इति प्रश्नाभिप्रायः ।। अन्योन्याधारत्वमेव दृश्यते । न तु परमेश्वरस्यानन्याधारत्वेन प्रकृत्याधारत्वं मन्दमतीनामित्यर्थः ।।

'आधारः प्रकृतेर्विष्णुर्नाऽधारस्तु हरेः क्वचित् ।
तथाऽप्यव्यक्तगो यद्वद्दृश्यते मन्दचेतसाम्' ।। इति पाद्मे ।।२५-२७।।

श्रीभगवानुवाच–

प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ।
एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ।। २८ ।।

प्रकृतिः पुरुषश्चेत्येव अन्योन्यविलक्षणावेव । एष विकल्पः । वैलक्षण्यादर्शनं विरुद्धकल्पनमेव । यस्माद् गुणव्यतिकरात्मकः सर्गो विकार-

निमित्तः । स च गुणव्यतिकरस्त्रिविधः सत्त्वरजस्तमसामेकैकप्राधान्येन । तत्र तमःप्रधानानामेव विरुद्धकल्पनम् । तस्मात् तम एवात्र कारणमित्यर्थः ।। २८ ।।

ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धिं च गुणैर्विधत्ते ।
वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ।।२९।।

तत्रापि प्रकृतिरेव कारणम् । ईश्वरेच्छा च । विकाराज्जातत्वाद् वैकारिक इत्युच्यते अहङ्कारस्त्रिविधोऽपि ।

'वैकारिको महांश्चैव तथाऽहङ्कार एव च ।
तथैव सात्विक(श्चासौ)श्चांशो वैकारिक इति त्रिधा' ।।
इति शब्दनिर्णये ।। २९ ।।

दृग् रूपमर्कश्च परत्र रन्ध्रे
परस्परं सिध्यति न स्वतोऽसौ ।
आत्मा यदेषामुपराम आद्यः
स्वयाऽनुभूत्याऽखिलसिद्धयसिद्धिः ।। ३० ।।

एवं त्वगादि श्रवणादि चक्षु-
र्जिह्वादि नासादि च चित्तयुक्तम् ।। ३१ ।।

योऽसौ गुणक्षोभकृतो विकारः
प्रधानमूलो जगतः प्रसूतिः ।
अहं त्रिवृन्मोहविकल्पहेतु-
र्वैकारिकः तामस ऐन्द्रियश्च ।। ३२ ।।

आत्मा परिज्ञानमयो विवादो
ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः ।
व्यर्थोऽपि नैवोपरमेत पुंसां
मत्तः परावृत्तधियां स्वलोकात् ।। ३३ ।।

अध्यात्ममिन्द्रियाणि । तैरेव विपरीतं ज्ञानं जायते ।

'अहङ्कारे विद्यमाने भ्रमो भवति नान्यदा ।
सम्यज्ज्ञानं हरेः शक्त्या तन्मुक्तस्य विशेषतः ।
देवतानुग्रहो नित्यो मुक्तस्यापि ह्यपेक्ष्यते ।
नित्यं तत्प्रतिबिम्बत्वाज्जीवानामेव कृत्स्नशः ।
बाह्यज्ञानं च मुक्तस्य न जडाहङ्कृतेः क्वचिद् ।
किन्तु स्वरूपशक्त्यैव देवेभ्यश्चाभिजायते' ।। इति ब्रह्मतर्के ।।

'पश्यन्नपि जगत् सर्वं चिद्बलेनैव पश्यति ।
कुतो मुक्तस्य तु जडं चिद्रूपस्य व्यपेक्ष्यते' ।। इति च ।

एषामुपरमे मुक्तौ । चक्षुरिति पुनर्वचनमवधारणार्थम् ।

योऽसौ भ्रमहेतुर्विकारः स गुणक्षोभकृतः । आत्मा तु परिज्ञानस्वरूपो न गुणक्षोभकृतः ।।

भिदा (भिदया) विपर्ययेण विद्यमानं नास्ति अविद्यमानमस्तीति विवादः ।

'असदस्ति च सन्नास्तीत्येवं भेदाद्विवादनम् ।
सदैव हरिपादाब्जविमुखानां प्रवर्तते' ।। इति च ।। ३०-३३ ।।

विषयाभिनिवेशेन नाऽत्मानं यत् स्मरेन्मनः ।
जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ।। ३८ ।।

विषयाभिनिवेशेन उत्तरदेहाभिनिवेशेन पूर्वदेहास्मरणं यत् तन्मृत्युः ।। ३८ ।।

ईदृशायास विज्ञाय त्रैविध्यं भाति वस्तुनि ।
बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद् यथा ।। ४१ ।।

ईदृशं वर्तमानं आयः एष्यन् सः अतीत इति त्रैविध्यं भाति । **विज्ञाय** वस्तुनि विज्ञाते सति । दीर्घलोपः 'अत्रा ते' (यत्रा त) इतिवत् । 'क्षिप्रे दीर्घलोपः' इति सूत्रात् । अयमेवाऽत्मानात्मनोर्विशेषहेतुः । यथा प्रायोऽसज्जनोऽसज्जनमेव जनयतीति पितृज्ञानात् पुत्रदौरात्म्यं ज्ञायते । एवमनित्य-त्वादनात्मत्वं देहादेरित्यर्थः ।। ४१ ।।

सोऽयं दीपोऽर्चिषां यद्वत् स्रोतसां तदिदं जलम् ।
सोऽयं पुमानिति नृणां मृषा गीर्भिर्मृषायुषाम् ।। ४४ ।।

सोऽयमेवेति मृषा ।

'स चायमिति तु ज्ञानं न मृषाऽयं स एव तु ।
इति ज्ञानं मृषैव स्यात् भेदाभेदौ यतस्तनोः ।
अभेद एव जीवस्य नित्यं प्रत्येकशः पृथक् ।
दीपदेहनदीवारिफलादीनां पृथक् स्वतः ।
भेदाभेदौ परिज्ञेयौ कार्यकारणयोरपि ।
गुणस्य गुणिनश्चैव जातिव्यक्त्योस्तथैव च ।
तथाऽवयव्यवयवयोः क्रियायास्तद्वतस्तथा ।
एवं जडेषु नियमश्चिद्रूपेष्वभिदेव तु' ।। इति च ।।

'ये धर्मा नियमेनैव धर्मिणो न वियोगिनः ।
जडस्था अप्यभिन्नास्ते भिन्नाभिन्ना वियोगिनः' ।। इति च ।।४४।।

आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ।
भवाप्ययौ हि भूतानामभिज्ञाद्वयलक्षणौ ।। ४८ ।।

**अभिज्ञाद्वयलक्षणौ** अभिमानमात्रौ ।। ४८ ।।

तरोर्बीजविकाराभ्यां यो विद्वान् जन्मसंयमौ ।
तरोर्विलक्षणो दृष्ट एवं द्रष्टा तनोः पृथक् ।। ४९ ।।

तरोर्बीजविकारदृष्टान्तेन विद्वान् देहाभिमानं त्यक्त्वा संयमं याति । परमात्मनश्च भेदं जानाति प्रकृत्यादेः ।

'बीजाद्यवस्थासंयुक्ताद्वृक्षाद्द्रष्टा यथा पृथक् ।
एवं विकारिणो विष्णुर्जीवश्च पृथगेव तु' ।। इति च ।। ४९ ।।

नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् ।
एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ।। ५२ ।।

'दुःखशोकादयः सर्वे ज्ञेया बुद्धिगुणा इति ।
सुखज्ञाने तु जीवस्य भक्तिः स्नेहस्तथैव च ।
विपर्ययेणासुराणां जीवबुद्धिगुणा मताः' ।। इति च ।।

'आत्मनोऽपि गुणा बुद्धिकृता बुद्धिगुणा इति ।
उच्यन्ते सुखदुःखाद्याः परमात्मकृता यथा' ।। इति त्रैकाल्ये ।।५२।।

यथा मनोरथधियो विषयानुभवो मृषा ।
स्वप्नदृष्टश्च दाशार्ह तथा संसार आत्मनः ।। ५४ ।।

**मृषा** वृथा ।

'अल्पप्रयोजनं यत्तन्मृषेत्येव तदुच्यते' । इति शब्दनिर्णये ।

आत्मनः स्वत एव दुःखाद्याः सुखादिवदिति मिथ्याबुद्धिरिति वा ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे द्वाविंशोऽध्यायः ।।



## त्रयोविंशोऽध्यायः

**मनोवशेऽन्ये हि भवन्ति देवा**
**मनश्च नान्यस्य वशं समेति ।**
**भीमो हि देवः सहसः सहीया-**
**न्नात्याविशत् तत् स हि देवदेवः ।। ४८ ।।**

**तं दुर्जयं शुत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित् ।**
**कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्रैरुदासीनरिपुं विमूढाः ।। ४९ ।।**

सात्त्विकमनोविवक्षया देवशब्दः । तामसमनोविवक्षया शत्रुशब्दः ।

'एकस्थानाधिपत्ये तु भिन्नानामपि युज्यते ।
अभेदेन परामर्शः सादृश्येनापि वस्तुनोः' ।। इति प्रयोगे ।।

'ऋते द्वे ब्रह्मणी कस्य मनो याति वशं क्वचित् ।
श्रियं सरस्वतीं वापि याति वा तत्प्रसादतः' ।। इति पाद्मे ।।

उदासीनानां रिपुम् । सम्यग्ज्ञानवतां (सम्यक् यततां) न रिपुत्वं शक्यत इत्यर्थः ।। ४८,४९ ।।

देहं मनोमात्रमिदं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः ।
एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ।।५०।।

अभिमानमात्रेणैव जीवस्य देहेन सम्बन्ध इति मनोमात्रम् । मनसा निर्माणमिति । अहमन्य इत्यपि देहमात्रे मन्यन्ते ।

'देहमात्रं स्वमात्मानं यः परं चाभिपश्यति ।
अन्धे तमसि मग्नस्य नोत्तारस्तस्य कुत्रचित्' ।। इति च ।। ५० ।।

जनोऽस्य हेतुः सुखदुःखयोश्चेत्
किमात्मनश्चात्र हि भौमयोस्तत् ।
जिह्वां क्वचित् सन्दशति स्वदद्भि-
स्तद्वेदनायां कतमाय कुप्येत् ।। ५१ ।।

'जनशब्दः स्वतो जीवे क्वचिद्देहे च वर्तते' । इति प्रयोगे ।। ५१ ।।

दुःखस्य हेतुर्यदि देवताऽस्तु
किमात्मनस्तत्र विकारयोस्तत् ।
यदङ्गमङ्गेन विहन्यते क्वचित्
क्रुध्येत कस्मै पुरुषः स्वदेहे ।। ५२ ।।

अयोग्यक्रोधादेर्मन एव कारणम् ।

'अविकाराश्च ते देवा विकारा इति शब्दिताः ।
अभिमानाद्विकारस्य स्वतः शक्ता अपि ध्रुवम्' ।। इति च ।।५२।।

आत्मा यदि स्यात् सुखदुःखहेतुः
किमन्यतस्तत्र निजः स्वभावः ।
न ह्यात्मनोऽन्यद् यदि तन्मृषा स्यात्
क्रुध्येत कस्मै न सुखं न दुःखम् ।। ५३ ।।

नह्यात्मनः स्वभावादन्यद्भवति । यदि दृश्यते तथाऽपि मृषा स्यात् । सुखरूपं दुःखं न भवति । अतो मन एव तथा दर्शयति ।

'जीवस्य सुखरूपस्य न दुःखं क्वचिदिष्यते ।
अतो मनोऽभिमानेन दुःखी भवति नान्यथा' ।। इति भारते ।।५३।।

ग्रहा निमित्तं सुखदुःखयोश्चेत्
किमात्मनोऽजस्य जनस्य ते वै ।
ग्रहैर्ग्रहस्यैव भवन्ति पीडाः
क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ।। ५४ ।।

गृह्यमाणत्वाद् ग्रहो देहः ।। ५४ ।।

कर्मास्तु हेतुः सुखदुःखयोर्वै
किमात्मनस्तद् हि जडेऽजडत्वे ।
देहे स्ववित् पुरुषोऽयं सुपर्णः
क्रुध्येत कस्मै न हि कर्म मूलम् ।। ५५ ।।

अजडत्वे आत्मनः ।। ५५ ।।

कालोऽस्तु हेतुः सुखदुःखयोश्चेत्
किमात्मनस्तत्र तदात्मनोऽसौ ।

नाग्नेर्हि तापो न हिमस्य तत् स्यात्
क्रुध्येत कस्मै न परस्य बोद्धुः ॥ ५६ ॥

**तदात्मनः** कालाधीनस्य ।

'स्वातन्त्र्य(स्वामित्व)मात्मशब्दोक्तं स्वरूपमपि कुत्रचित्' ॥
इति विवेके ॥

यथाऽग्नेर्हिमस्य च नैव दुःखं तापादिनिमित्तं जडत्वात् । एवं जडत्वाद्देहस्यापि कालादिसम्बन्धे विद्यमानेऽपि न दुःखं युक्तम् ।

'सदा कालादिसम्बन्धाद्दुःखं देहस्य युज्यते ।
तथाऽपि नैव दुःखी स जडत्वान्नियमेन तु ।
आत्मनः सुखरूपत्वान्न दुःखं युज्यते क्वचित् ।
तस्मान्मनोभ्रमेणैव दुःखी जीवो न चान्यथा ।
सर्वेषां मनसो नेता मनोरूपस्त्रिलोचनः ।
तद्वशाः सर्वदेवाश्च तेनैव सुखदुःखिनः ।
नियन्ता तस्य च प्राणस्ततोऽपि बलवत्तरः ।
तन्नियन्ता हरिः साक्षात् परमानन्दलक्षणः' ॥ इति तात्पर्ये ॥५६॥

न केनचित् क्वापि कथञ्चनास्य
द्वन्द्वोपरागः परतः परस्य ।
यथाऽऽत्मनः संसृतिरूपिणः स्यात्
एवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥

**आत्मनः** मनसः ॥ भौमयोर्विकारयोः पीड्यपीडकयोः उभयमनसोः सतोर्दुःखं भवति । ग्रहस्य ग्रहणरूपस्य मनसः सत एव । जडे मनसि

आत्मा यदि स्यात् सुखदुःखहेतुः
किमन्यतस्तत्र निजः स्वभावः ।
न ह्यात्मनोऽन्यद् यदि तन्मृषा स्यात्
क्रुध्येत कस्मै न सुखं न दुःखम् ।। ५३ ।।

नह्यात्मनः स्वभावादन्यद्भवति । यदि दृश्यते तथाऽपि मृषा स्यात् । सुखरूपं दुःखं न भवति । अतो मन एव तथा दर्शयति ।

'जीवस्य सुखरूपस्य न दुःखं क्वचिदिष्यते ।
अतो मनोऽभिमानेन दुःखी भवति नान्यथा' ।। इति भारते ।।५३।।

ग्रहा निमित्तं सुखदुःखयोश्चेत्
किमात्मनोऽजस्य जनस्य ते वै ।
ग्रहैर्ग्रहस्यैव भवन्ति पीडाः
क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ।। ५४ ।।

गृह्यमाणत्वाद् ग्रहो देहः ।। ५४ ।।

कर्मास्तु हेतुः सुखदुःखयोर्वै
किमात्मनस्तद् हि जडेऽजडत्वे ।
देहे स्ववित् पुरुषोऽयं सुपर्णः
क्रुध्येत कस्मै न हि कर्म मूलम् ।। ५५ ।।

अजडत्वे आत्मनः ।। ५५ ।।

कालोऽस्तु हेतुः सुखदुःखयोश्चेत्
किमात्मनस्तत्र तदात्मनोऽसौ ।

नाग्नेर्हि तापो न हिमस्य तत् स्यात्
क्रुध्येत कस्मै न परस्य बोद्धुः ।। ५६ ।।

**तदात्मनः** कालाधीनस्य ।

'स्वातन्त्र्य(स्वामित्व)मात्मशब्दोक्तं स्वरूपमपि कुत्रचित्' ।।
इति विवेके ।।

यथाऽग्नेर्हिमस्य च नैव दुःखं तापादिनिमित्तं जडत्वात् । एवं जडत्वाद्देह-स्यापि कालादिसम्बन्धे विद्यमानेऽपि न दुःखं युक्तम् ।

'सदा कालादिसम्बन्धाद्दुःखं देहस्य युज्यते ।
तथाऽपि नैव दुःखी स जडत्वान्नियमेन तु ।
आत्मनः सुखरूपत्वान्न दुःखं युज्यते क्वचित् ।
तस्मान्मनोभ्रमेणैव दुःखी जीवो न चान्यथा ।
सर्वेषां मनसो नेता मनोरूपस्त्रिलोचनः ।
तद्वशाः सर्वदेवाश्च तेनैव सुखदुःखिनः ।
नियन्ता तस्य च प्राणस्ततोऽपि बलवत्तरः ।
तन्नियन्ता हरिः साक्षात् परमानन्दलक्षणः' ।। इति तात्पर्ये ।।५६।।

न केनचित् क्वापि कथञ्चनास्य
द्वन्द्वोपरागः परतः परस्य ।
यथाऽऽत्मनः संसृतिरूपिणः स्यात्
एवं प्रबुद्धो न बिभेति भूतैः ।। ५७ ।।

**आत्मनः** मनसः ।। भौमयोर्विकारयोः पीड्यपीडकयोः उभयमनसोः सतोर्दुःखं भवति । ग्रहस्य ग्रहणरूपस्य मनसः सत एव । जडे मनसि

सत्येव । तदात्मनो मनसः सतः । संसृतिरूपिणः आत्मनो जीवस्य यथा तथा न हि परस्य । अमनस्त्वात् (अमनस्कत्वात्) । अतो मनोऽन्वयव्यतिरेक इति भावः ।। ५७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे त्रयोविंशोऽध्यायः ।।



## चतुर्विंशोऽध्यायः

आसीज्ज्ञानमथो ह्यर्थश्चैकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगे जनाः ।। २ ।।

'यथैवार्थस्तथा ज्ञानं ज्ञानार्थैक्यमुदाहृतम् ।
तथा कृतयुगे प्रायस्तदन्येषु तु कस्यचित्' ।। इति ब्रह्मतर्के ।।२।।

तन्मया फलरूपेण केवलेन विकल्पितम् ।
वाङ्मनोगोचरं सत्यं द्विधा समभवद् बृहत् ।। ३ ।।

फलं रूपयतीति फलरूपः । ज्ञानार्थैक्येन सत्यम् । पश्चात् तद्द्विधा समभवत् । तच्छब्दार्थात्मकमुभयं बृहत्तरम् ।। ३ ।।

तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भागः पुरुषः सोऽभिधीयते ।। ४ ।।

तमो रजः सत्त्वमिति प्रकृतेरभवन् गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन वा ।। ५ ।।

तेभ्यः समभवत् सूत्रं मत्सूत्रेण च संयुतम् ।
ततो विकुर्वतो जातो योऽहङ्कारो विमोहकः ।। ६ ।।

वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ।
तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ।। ७ ।।

'ज्ञानाभिमानी पुरुषः स ब्रह्मा समुदाहृतः ।
अर्थाभिमानी प्रकृतिर्गायत्री सा प्रकीर्तिता ।
तयोर्नियामको विष्णुः श्रीश्चानुग्राहिका स्मृता ।
वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत ।
त्रिगुणात्मा समुद्दिष्टः प्रायः सत्त्वात्मकस्तथा ।
गायत्री चैव सावित्री तथैव च सरस्वती ।
एवं त्रिरूपा प्रकृतिरेका सत्त्वादिभेदतः ।
तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमागतम् ।
स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायकः ।
तस्यापि सूत्रं भगवान् धारणाद्विष्णुरव्ययः ।
सूत्रपुत्रस्त्वहङ्कारः स रुद्रः समुदाहृतः ।
सूत्रात्मना महांश्चापि सहजातश्चतुर्मुखः ।
तस्यापि पुत्रोऽहङ्कारः स चानन्त उदाहृतः ।
अनन्तादपि रुद्रोऽभूद् ब्रह्मणश्चेति स त्रिधा ।
वैकारिको ब्रह्मजस्तु तैजसो वायुजः स्मृतः ।
तामसोऽनन्तजश्चैव स एको गुणभेदतः' ।। इति प्राथम्ये ।।

'चिदचिद् यद्वशे सर्वं स रुद्रश्चिदचिन्मयः' ।। इति च ।। ४-७ ।।

**तस्मिन्नहं समभवमण्डे सलिलसंस्थिते ।**
**मम नाभ्यामभूत् पद्मं विश्वाख्यं तत्र चाऽत्मभूः ।। १० ।।**

'चिदानन्दशरीरस्तु प्रविष्टोऽण्डे हरिः स्वयम् ।
तन्नाभेर्भूतदेहोऽभूत् पद्मादपि चतुर्मुखः ।
चतुर्मुखस्तु सर्वाण्डव्याप्तदेहो महातपाः ।
हरिस्तु सर्वव्याप्तोऽपि भूतदेहो न तु क्वचित् ।
नैवास्य प्राकृतो देहः प्रादुर्भावेष्वपि क्वचित्' ।। इति निवृत्ते ।।१०।।

**योगस्य तपसश्चैव ज्ञानस्य गतयोऽमलाः ।**
**महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ।। १४ ।।**

महरादीनामपि भक्तियोगोऽपेक्षित एव । आधिक्येनापेक्षितत्वात् 'भक्ति-योगस्य मद्गतिः' । इत्युक्तम् ।

'नैव विष्णावभक्तस्य महर्लोकादिका गतिः ।
भक्त्युद्रेकात् क्रमादूर्ध्वं यावद्विष्णुप्रवेशनम् ।
एवं ज्ञानं विना साऽपि महर्लोकादिका गतिः ।
ज्ञानोद्रेकात् क्रमादूर्ध्वं यावद्विष्णुप्रवेशनम् ।
नित्यशो भगवद्रूपस्याऽपरोक्ष्येण दर्शनम् ।
मुहूर्तमात्रं ज्ञानं स्यान्महाज्ञानं ततोऽधिकम् ।
ज्ञानेन ब्रह्मलोकः स्यान्महाज्ञानाद्धरेर्गतिः ।
सदैवाखण्डितं ध्यानं तप इत्युच्यते बुधैः ।
अपरोक्षदृशा युक्तं नित्यं षण्मात्रकालया ।
अपरोक्षदृशा नित्यं एकमात्रायुजा युतम् ।
योगनाम्ना समुद्दिष्टं ध्यानं नित्यमखण्डितम् ।

तच्चतुर्भागया नित्यमपरोक्षदृशा युतम् ।
पादयोगाख्यमुद्दिष्टं ध्यानं नित्यमखण्डितम् ।
पादयोगान्महर्लोको जनलोकस्तु योगतः ।
तपसस्तु तपोलोकः प्राप्यते नान्यतः क्वचित्' ॥
इति ध्यानयोगे ॥ १४ ॥

मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ।
गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥

**कालात्मना** ज्ञानाद्यात्मना ॥ १५ ॥

यस्तु यस्याऽदिरन्तश्च स वै मध्यं च तस्य तत् ।
विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥

'प्रकृतेस्तु विकाराणां कोट्यंशोऽभेद (शाभेद) (शो भेद) इष्यते ।
तथैवैकांशतो भेदः सोऽपि नाभेदवर्जितः ।
भेदाभेदमतः प्राहुरभेदं वा तयोर्बुधाः' ॥ इति विवेके ॥ १७ ॥

यदुपादाय पूर्वस्तु भावो विकुरुते परम् ।
आदिरन्तो यतो यस्मिंस्तत् सत्यमभिधीयते ॥ १८ ॥

'पारमार्थिकसत्यत्वं स्वातन्त्र्यमभिधीयते ।
तद्विष्णोरेव नान्यस्य तदन्येषां सदाऽस्तिता' ॥ इति च ॥

यद्ब्रह्मोपादाय । पूर्वः प्रकृत्यादिः । आदिरन्तश्च यद्ब्रह्मणि यस्मात् तस्मात् तद्ब्रह्म परमार्थसत्यम् ॥ १८ ॥

प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ।
सतोऽभिव्यञ्जकः कालो ब्रह्म तत् त्रितयं त्वहम् ।। १९ ।।

परः पुरुषो हिरण्यगर्भः । कालोऽपि रूपान्तरेण स एव ।

'कालाभिमानी ब्रह्मा तु काल इत्यभिशब्दितः ।
सर्वजीवाभिमानी स परः परुष उच्यते ।
प्रकृतिर्नाम तत्पत्नी प्रकृतेरभिमानिनी ।
सा प्रसूते जगत्सर्वं सूत्रमारभ्य सर्वशः' ।। इति च ।

आधारो व्यञ्जकश्चैव (प्रसविता) प्रसवीता च केशवः ।

'कालप्रकृतिपुंसां च तन्मूलप्रकृतेरपि ।
आधारो व्यञ्जकश्चैव सर्वस्यापि नियामकः' ।। इति च ।। १९ ।।

सर्गः प्रवर्तते तावत् पौर्वापर्येण नित्यशः ।
महान् गुणविसर्गोऽर्थः स्थित्यन्तो यावदीक्षणम् ।। २० ।।

यावत् स्थितिरस्ति तावदुत्पत्तिरस्त्येव । यावदीक्षणं यावत्प्रलयः स्यादिति भगवतः स्मरणम् ।। २० ।।

विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ।
पञ्चत्वायाविशेषाय कल्पते भुवनैः सह ।। २१ ।।

'विशेषेण गुणोद्रेकाद्विशेषः पृथिवी स्मृता' । इति प्रवृत्ते ।
पञ्चत्वानन्तरमविशेषाय ।। २१ ।।

अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ।
धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ।। २२ ।।

'देव्यामोषधिमानिन्यां लीयतेऽन्नाभिमानिनी' । इत्यादि च ।।२२।।

योनिर्वैकारिके सौम्य लीयते महतीश्वरे ।
शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ।। २५ ।।

स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ।
तेऽव्यक्ते सम्प्रलीयन्ते तत् काले लीयतेऽव्यये ।। २६ ।।

कालो मायामये जीवे जीव आत्मनि मय्यजे ।
आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ।। २७ ।।

'विकारजत्वात्तु महान्वैकारिक उदाहृतः ।
ईशनादीश्वरश्चैव ब्रह्मा बृंहणतः स्मृतः' ।। इति च ।।

'गायत्री चैव सावित्री तथैव च सरस्वती ।
एवं त्रिरूपा प्रकृतिर्ब्रह्मपत्नी प्रकीर्तिता ।
महत्तत्त्वात्मको ब्रह्मा तज्जत्वात् तत्र लीयते ।
गुणाधिकः पतिरपि तस्याः सत्त्वादिभेदतः ।
त्रिविधा मूलरूपायां प्रकृत्यां सा प्रलीयते ।
प्रकृतिर्मूलरूपा सा ब्रह्मपत्नी जगन्मया ।
पुरुषाभिधे विरिञ्चे तु स स्वस्मिन् कालसञ्ज्ञिते ।
कालाभिधो विरिञ्चस्तु महालक्ष्म्यां विलीयते ।
जीवमायेति यामाहुः सा च सत्त्वादिभेदतः ।
त्रिविधैकत्वमापाद्य विष्णावेव विलीयते ।
हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः ।
पुरुषेणापि सामीप्यं प्रकृतेर्लय उच्यते ।

ब्रह्मा च प्रकृतिश्चैव मुक्तिगौ विलये यतः ।
अतस्तौ भिन्नदेहौ तु ज्ञानमात्रौ समीपगौ' ।। इत्यादि च ।। २५-२७।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे चतुर्विंशोऽध्यायः ।।



## पञ्चविंशोऽध्यायः

काम ईहा मदस्तृष्णा (मनस्तृष्णा) स्तम्भ आशीर्भिदाऽसुखम् ।
मनोत्साहो यशःप्रीतिर्धाष्ट्र्यवीर्यबलोद्यमाः ।। ३ ।।

'राजसेऽपि यदा दुःखं तामसे किमुतेति तत् ।
राजसे दुःखवचनं तामसेऽतिविवक्षया' ।। इति प्रद्योते ।। ३ ।।

सत्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।
तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ।। २२ ।।

'नैर्गुण्यसाधनं यत् तन्निर्गुणं परिकीर्तितम्' । इति च ।। २२ ।।

कैवल्यं सात्त्विकं ज्ञानं कर्मनिष्ठं तु राजसम् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ।। २४ ।।

'यथाशास्त्रोक्तविज्ञानं केवलं ज्ञानमुच्यते ।
स्वदृष्टशास्त्रानुकूल्याददृष्टानां च भक्तितः ।
गुणानां तु हरौ भावं विनिश्चित्यैतदाश्रयात् ।
यथाशास्त्रानुसन्धानं ज्ञानं तु हरिसंश्रयम्' ।। इति च ।। २४ ।।

सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी ।
तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ।। २७ ।।

'श्रुतशास्त्रानुसारेण या श्रद्धा परमात्मनि ।
सा सात्त्विकी तदन्यस्याप्यनुसारेण निर्गुणा ।
अश्रुत्वाऽपि प्रमाणं यो वासुदेवैकसंश्रयः ।
स निर्गुणो भागवतः समुद्दिष्टो मनीषिभिः' ।। इति च ।। २७ ।।

सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ।। २९ ।।

'परोक्षज्ञानमात्मोत्थमापरोक्ष्येण दर्शनम् ।
विष्ण्वाश्रयं सुखं नित्यं गमयेत् तत्प्रसादतः ।
न तु विष्णोः स्वरूपं तु सुखं केनचिदाप्यते ।
तस्यैव विषयत्वात्तु तत्सुखं चेति भण्यते ।
परोक्षज्ञानगो यस्माद्विषयः स्वमनोगतः ।
अत आत्मोत्थमित्येव सुखमाहुर्विपश्चितः' ।। इति च ।। २९ ।।

सर्वे गुणमया भावा पुरुषाव्यक्तनिष्ठिताः ।
दृष्टं श्रुतमनुध्यायेद् बुद्ध्या वा पुरुषर्षभ ।। ३१ ।।

दृष्टं श्रुतम् । बुद्ध्या दृष्टं चानु परं ब्रह्म ध्यायेत् ।।

'सत्वाद्गुणाज्जातमपि व्यवधानं विनैव तु ।
मुक्तिदं निर्गुणं प्रोक्तं व्यवधानेन सात्त्विकम्' ।। इति ब्राह्मे ।।३१।।

।। इति श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे पञ्चविंशोऽध्यायः ।।

## षड्विंशोऽध्यायः

गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ।
गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ।
वर्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः ।। २ ।।

'वस्तु स्वतन्त्रमुद्दिष्टमस्वतन्त्रमवस्तु च' । इति माहात्म्ये ।। २ ।।

सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ।
देवता बान्धवाः सन्तः पिता माताऽहमेव च ।। ३४ ।।

भगवतोऽपि सतां मध्ये प्रधानत्वात् सन्तोऽहमेव चेत्युक्तम् ।

'विष्णोश्च सत्प्रधानत्वान्न सतां विद्यते परम् ।
इत्याहुर्वेदविदुषः स हि सर्वेश्वरेश्वरः' ।। इति च ।। ३४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे षड्विंशोऽध्यायः ।।



## सप्तविंशोऽध्यायः

पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ।
अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ।। २२ ।।

तयाऽऽत्मभूतया पिण्डे व्याप्ते सम्पद्य तन्मयः ।
आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ।। २३ ।।

जीवः कला यस्याः सा **जीवकला** भगवन्मूर्तिः ।

'हृदिस्था या हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः ।
यद्वशे वर्तते जीवः सा तु जीवकला स्मृता ।
शब्दैः सर्वात्मनाऽनुक्तेर्नादान्तस्था च सा मता' ।। इति विवेके ।।

'व्याप्तो भूतश्च नित्यं यदात्मभूतो हरिस्ततः ।
जीवस्य तत्प्रधानत्वं तन्मयत्वमुदाहृतम्' ।। इति तन्त्रभागवते ।।

'व्याप्तोऽपि भगवान् विष्णुर्देहे सर्वगतत्वतः ।
भक्तस्य फलदो यस्माद् व्याप्तिकृत्तस्य तेन सः' ।। इति च ।।२२,२३।।

स्वस्य घर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेणापि सूक्तेन धामनीराजनादिभिः ।। ३० ।।

स्वस्य विष्णुसूक्तेन । धामसूक्तं 'समुद्रादूर्मिः' इति ।

'नितरां रञ्जयेद् यस्मात् पावमानं तु मण्डलम् ।
विष्णुनीराजनं तस्माद्विद्वद्भिः समुदाहृतम्' ।। इति च ।। ३० ।।

उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम ।
मत्कथाः श्रावयन् शृण्वन् मुहूर्तक्षणिको भवेत् ।। ४३ ।।

मम कर्माणि कीर्तयित्वाऽभितो नयन् सर्वेषां प्रकाशयन् मत्कथाः श्रावयन्नित्यभिनयपदार्थः ।। ४३ ।।

प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ।। ५१ ।।

मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ।
स भक्तियोगं लभते एवं यः पूजयेत माम् ।। ५२ ।।

नैरपेक्ष्येण भक्तियोगेनैव साम्यमित्यर्थः ।

'निर्दुःखत्वं हरेः साम्यं न तादृशसुखात्मता ।
सर्वोत्तमः सदानन्दः कथं कस्य कदाऽऽप्यते' ।। इति प्रवृत्ते ।।

'आधिपत्यं त्रिलोकस्य योग्यानामिन्द्रता स्मृता ।
अयोग्यानां त्रिलोकेऽपि पूज्यत्वं समुदाहृतम् ।
तद्भवेत्परया भक्त्या विष्णोरालयकारिणः ।
ततोऽप्युद्रिक्तया भक्त्या विष्णुं पूजयतः सदा ।
अवाप्यते ब्रह्मलोकस्तदुद्रिक्तश्च मुच्यते' ।। इति च ।। ५१,५२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे सप्तविंशोऽध्यायः ।।



## अष्टाविंशोऽध्यायः

श्रीभगवानुवाच–

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ।। १ ।।

परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रंशते स्थानादसत्याभिनिवेशतः ।। २ ।।

'न प्रशंसेत निन्द्यांस्तु प्रशंस्यान्नैव निन्दयेत् ।
उभयं यः करोत्येतदसत्यात् स पतत्यधः ।
यः प्रशंस्यान्न प्रशंसेन्निन्द्यो येन न निन्द्यते ।
सोऽपि तद्वदधो याति यतोऽरिवदुदासकः' ।। इति सत्कारे ।।

प्रकृत्या पुरुषेण च सह एकेन परमात्मना व्याप्तमेकात्मकम् । तथा पश्यत एव यथार्थज्ञानं भवति ।। १,२ ।।

**तैजसे निद्रयाऽऽपन्ने पिण्डस्थो नष्टचेतनः ।**
**मायां प्राप्नोति मृत्युं वा तद्धि नानार्थदं मनः ।। ३ ।।**

'तैजसाहङ्कृतेर्जात इन्द्रियग्रामके परात् ।
निद्रया वशमापन्ने जीवः स्यान्नष्टचेतनः ।
अतो विष्णोर्वशे सर्वं तेन व्याप्तमिति स्मरेत्' ।। इति च ।।

'निद्रा चैव सुनिद्रा च द्विधा निद्रा प्रकीर्तिता ।
तत्र निद्रा भवेन्नित्या सुनिद्रा मृतिकालगा' ।। इति पाद्मे ।

'मनोमात्रस्वरूपत्वात् स्वप्नो मायेति कथ्यते' । इति च ।

तथा नानार्थदं मन एव । मनसा हि विषयाः प्रतीयन्ते ।। ३ ।।

**किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ।**
**वाचोदितं तदनृतं मनसा ध्यातमेव च ।। ४ ।।**

'एकं तु शुभमुद्दिष्टमशुभं द्वैतमुच्यते ।
पुंसोऽशुभस्य किं भद्रं किमभद्रं विशेषतः ।
सर्वदाऽशुभरूपत्वाद् विशेषोऽत्यल्प एव हि' ।। इति भारते ।।

द्वैतस्याशुभस्य पुरुषस्य कियदल्पमेव हि भद्रमभद्रं वा स्वयोग्यादाधिक्येन न भवति यन्नवतोऽपीत्यर्थः । अतस्तद्विषये ध्यातमुक्तं च शुभमनृतमेव ।

'उच्यते ध्यायते वापि कुनरं प्रति यच्छुभम् ।
असत्यमेव भवति स्वभावोऽसत्त्वमेव यत्' ।। इति प्रद्योते ।। ४ ।।

छायाप्रत्युदकाभासा ह्यसन्तोऽप्यर्थकारिणः ।
एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ।। ५ ।।

स्वभावतोऽशुभस्याशुभदेहादिकं नाशुभकारणं तर्हीत्यत आह– **छाया-प्रत्युदकाभासा** इति ।

'व्यपेक्ष्य जीवं देहादि निःशक्तत्वादवस्त्वपि ।
पुनः शुभाशुभनृणां यच्छेदेव शुभाशुभम् ।
छाया नीहारकाभासा निःशक्ता अपि कार्यदाः ।
एवं शुभादिदेहादेर्भवेत् कार्यं शुभादिकम्' ।। इति सुमते ।।
'नीहारः प्रत्युदं चैव धूम्रमित्यभिशब्द्यते' । इति शब्दनिर्णये ।।५।।

आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ।
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ।। ६ ।।

तस्मान्न ह्यात्मनोऽमुष्मादन्यो भावो निरूपितः ।
अनिरूपितेयं त्रिविधा निर्मूला मतिरात्मनि ।। ७ ।।

इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ।। ८ ।।

एतद् विद्वान् मदुदितं ज्ञानविज्ञाननैपुणः ।
न निन्दति न च स्तौति लोके चरति सूर्यवत् ।। ९ ।।

प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा ।
आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ।। १० ।।

इदं विश्वं सृजति त्राति हरति च, स्वयं स्वात्मनैव सृज्यते त्रायते ह्रियते च ।

'दीपाद् दीपान्तरं यद्वत् सृष्टिरीशस्य कीर्त्यते ।
एतावत्कालमाशिष्ये मानुषेष्विति चिन्तनम् ।
विष्णोस्त्राणं समुद्दिष्टं स्वस्यैव स्वेच्छयैव तु ।
दीपे दीपान्तरस्येव ह्येकीभावश्च संहृतिः' ।। इति च ।।

'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ।। इति च ।।

आत्मनः परमेश्वरस्य तस्मादन्यो भावो नास्ति ।

'सृष्टिः स्थितिश्च संहारो भावनं समुदाहृतम् ।
तद्यः करोति पुरुषः स भाव इति कीर्त्यते' ।। इति विवेके ।

अन्येन सृष्टिः स्थितिः संहार इति त्रिविधा मतिर्विद्वद्भिर्नैव निरूपिता निर्मूला प्रमाणवर्जिता (च) ।

'अन्यस्मात् सृष्टिसंहारौ स्थितिश्च परमात्मनः ।
निरूपिता न विद्वद्भिः प्रमाणाभावतो हरेः' ।। इति ब्रह्मतर्के ।।

अन्यतः सृष्टिः स्थितिः संहार इति त्रयं गुणप्रधानं सत्त्वादिगुणाधीनम् ।

'गुणसम्बन्धयोग्यानामुत्पत्त्याद्याः स्युरन्यतः ।
सर्वदा निर्गुणस्यास्य सर्गाद्याः स्युः कुतोऽन्यतः' ।। इति च ।।

'असमर्थमसत्प्रोक्तं सत्समर्थं प्रकीर्तितम्' । इति च ।। ६-१० ।।

श्रीभगवानुवाच–

यावद् देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् ।
संसारः फलवांस्तावदपार्थोऽप्यविवेकिनः ।। १३ ।।

'फलवान् मोक्षहेतुत्वान्नित्यानन्दादपार्थकः ।
जीवात्मनस्तु संसारः स्वप्नवच्चञ्चलत्वतः' ।। इति तत्त्वविवेके ।।१३।।

अर्थेऽप्यविद्यमानेऽपि संसृतिर्न निवर्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ।। १४ ।।

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थकृत् ।
स एव प्रतिबुद्धस्य न वै मोहाय कल्प(ल्प्य)ते ।। १५ ।।

संसृत्यभावस्यैव फलरूपत्वान्निरर्थ एव संसार इत्यवधारयति– **अर्थेऽपीति ।**

'उच्यते निष्फलत्वेन यदत्यल्पफलं भवेत्' । इति च ।
अतोऽल्पफलत्त्वावधारणार्थं च पुनर्वचनम् ।। १४,१५ ।।

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नाऽत्मनः ।। १६ ।।

अहङ्कारस्य सकाशाद् दृश्यन्ते । नाऽत्मनः स्वतः ।

'अहङ्कारात्तु संसारो भवेज्जीवस्य न स्वतः ।
कुतश्चिदानन्दतनोः स्वरूपेच्छायुतस्य सः' ।।
इति तन्त्रभागवते ।। १६ ।।

देहेन्द्रियप्राणमनोऽभिमानो
जीवोऽन्तरात्मा गुणकर्ममूर्तिः ।
सूत्रं महानित्युरुधेह गीतः
संसार आधावति कालतन्त्रः ।। १७ ।।

देहेन्द्रियप्राणमनसामभिमानयुक्तः । सूत्रं महानित्याद्यधिकारनामभिर्युक्तः । प्रधानजीवो हिरण्यगर्भोऽप्याधावति संसारे किमुतान्य इत्याशयः ।

'संसारयुग् यो ब्रह्माऽपि सर्वजीवेश्वरेश्वरः ।
विष्ण्वधीनः सदा ज्ञानी किमुतान्येऽल्पचित्तिनः' ।। इति सत्तत्त्वे ।।

अमूलमेतद् बहुरूपरूपं
मनोवचःप्राणशरीरकर्म ।
ज्ञानासिनोपासनया शितेन
च्छित्त्वा मुनिर्गां विचरत्यतृष्णः ।। १८ ।।

**अमूलं** विष्णुमूलम् । बहुरूपेण तेनैव रूप्यते । मनआदीनां विषयः ।।१८।।

ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ।
आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ।।१९।।

**केवलं** स्वतन्त्रम् । आद्यन्तयोर्यत्स्वतन्त्रं तदेव मध्येऽपि स्वतन्त्रम् । **परं** ब्रह्म । ज्ञानविवेकादिस्वरूपम् । परिपूर्णगुणत्वात् । अन्यतो विविक्तत्वाद् **विवेकः** । सर्वं निगमयति प्रापयतीति **निगमः** । सर्वैरालोच्यत्वात् **तपः** । प्रतिप्रत्यक्षेषु स्थितत्वात् **प्रत्यक्षम्** । आचार्यसम्प्रदायसिद्धत्वात् **ऐतिह्यम्** । अनुमेयत्वाद् **अनुमानम्** ।। १९ ।।

यथा हिरण्यं स्वकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ।। २० ।।

हिरण्यखचितत्वेन हिरण्यप्रधानं हिरण्मयम् । शङ्खमश्वरथादिषु मध्येऽपि केवलं प्राधान्येन व्यवहार्यमाणं तदेव ।

'रथोपस्थे परिष्कारात् पूर्वं दारुमयाद् रथात् ।
सुवर्णं व्यवहाराय मुख्यं रथपरिष्कृतम् ।
मध्ये चान्ते रथोपस्थान् निष्कृष्य पृथगास्थितम् ।
यद्वदेवं हरिः साक्षाज्जगद्देहात् पृथक् स्थितः ।
पूर्वं जगति संस्थश्च जगदन्ते पृथक् स्थितः ।
स एव मुख्यो जगतः स्वातन्त्र्यात् परमेश्वरः' ।। इति ब्रह्मतर्के ।।

'सुरपितृमनुजादिकल्पनादिभिः' इत्याद्यन्तर्याम्यपेक्षया ।

'यथा सुवर्णमकृतं क्रियते कुण्डलादिकम् ।
पुनरेकीभवत्यद्धा तद्वद् विष्णुरजोऽपि सन् ।
सुराद्यन्तःस्थितो भूत्वा पुनरेकीभवेद् विभुः' ।। इति च ।।

'तत्तन्नियामकस्यैव नाम सर्वं सुरादिकम् ।
तत्सम्बन्धादुदीर्येत व्यवहृत्यै सुरादिषु' ।। इति शब्दनिर्णये ।।

'एकलं केवलं चेति स्वतन्त्रमभिधीयते ।
स्वतन्त्रस्तु हरिः साक्षात् परिष्कृतहिरण्यवत्' ।। इति प्रवृत्ते ।

'प्रत्येकं न तु दार्वादि स्वतन्त्रं विक्रियागतम् ।
महाफलं स्यात् स्वर्णं तु स्वतन्त्रं विक्रियोपगम् ।
तद्वत् स्वतन्त्रो भगवान् प्रवृत्तावन्यदन्यथा' ।। इति च ।। २० ।।

विज्ञानमेतत् त्रिपदस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ ।
समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ।। २१ ।।

मोक्षदं संसारदं तमःप्रदं चेति त्रिपदस्थं विज्ञानम् । तदिच्छायाः सत्त्व एतत् सर्वमस्ति, अन्यथा नास्तीत्यन्वयव्यतिरेकौ ।।

तदेव केवलं सत्यमिति सर्वत्र सम्बध्यते ।

'स्वातन्त्र्यमेव सत्यत्वं विष्णोरन्यस्य सत्यता ।
प्रवाहतः सदाऽस्तित्वं पुंप्रकृत्योः सदाऽस्तिता' ।।
इति वस्तुतत्वे ।। २१ ।।

न यत् पुरस्तादुत यन्न पश्चा-
न्मध्ये च तन्न व्यपदेशमात्रम् ।
भूतं प्रसिद्धं च परेण यद्यत्
तदेव सत् स्यादिति मे मनीषा ।। २२ ।।

मध्ये च तत् केवलं नेति सम्बध्यते ।

'तत्स्वातन्त्र्येण नैवास्ति यदुत्पत्तिविनाशवत् ।
स्वातन्त्र्येणास्तिता तस्य यत् सत्ताज्ञानदं सदा' ।। इति वैभवे ।

'जगतो नास्तिता सैव या पराधीनता सदा ।
अभावस्तु कुतस्तस्य यद्विभातीह सर्वदा' ।। इति प्राकाश्ये ।।२२।।

अविद्यमानोऽप्यवभासते यो
वैकारिको राजससर्ग एषः ।

ब्रह्म स्वयञ्ज्योतिरतो विभाति
ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ।। २३ ।।

'अविद्यमानता नाम जगतः परतन्त्रता ।
यथाऽशक्तस्तु पुत्रादिरसन्नित्युच्यते जनैः' ।। इति विवेके ।।

अतो ब्रह्मण एव विभाति । द्वितीयं ब्रह्म प्रकृतिः । आत्मा जीवः प्रकृतीन्द्रियविषयजीवादिविचित्रं जगद् ब्रह्मत एव विभातीत्यर्थः ।।२३।।

नात्मा वपुः पार्थिवमिन्द्रियाणि
देवा ह्यसुर्वायुजलं हुताशः ।
मनोऽन्नमात्रं धिषणा च सत्त्व-
महङ्कृतिः स्वं कृतिरर्थसाम्यम् ।। २५ ।।

'वायुरेव स्वयं प्राणस्तत्रस्थे चोदतेजसी ।
उदेन तेजसा चैव प्राणस्य हि कृतं वपुः' ।। इति प्रकाशिकायाम् ।।

'प्राणस्य वायुरूपस्य भूतत्रयकृतं वपुः ।
ततो (यतो) हि पार्थिवं नात्र खं चात्यल्पमुदाहृतम्' ।। इति सन्धारणे ।।

**सत्त्वं** मूलबुद्धिः । अहं शृणोम्यहं स्पृशाम्यहं पश्यामीति सर्वार्थेषु समत्वादहङ्कारोऽर्थसाम्यम् ।

'न देहो नेन्द्रियप्राणमनोबुद्ध्यहमादयः ।
विष्णुश्चिदानन्दतनुः स हि जीवाधिपः सदा' ।। इति सत्तत्त्वे ।।२५।।

समाहितैः कः करणैर्गुणात्मभि-
र्गुणो भवेत् तत्सुविविक्तधाम्नः ।

विक्षिप्यमाणैरुत किं नु दूषणं
घनैरुपेतैर्विगतै रवेः किम् ।। २६ ।।

यथा नभो वाय्वनलाम्बुभूगुणै-
र्गतागतैर्वा त्रिगुणैर्न सज्जते ।
तथाऽक्षरं सत्त्वरजस्तमोमलै-
रसङ्गतं संसृतिहेतुभिः परम् ।। २७ ।।

तथापि सङ्गः परिवर्जनीयो
गुणेषु मायारचितेषु तावत् ।
मद्भक्तियोगेन दृढेन यावद्
रजो निरस्येत तमःकषायम् ।। २८ ।।

भगवतो गुणदोषाभावेऽपि जीवस्य सङ्गोऽवर्जनीय एव मुक्तिपर्यन्तम् ।

'समाहिते(ऽपि)न जीवेन विक्षिप्ते वा न तु क्वचित् ।
विशेषो विद्यते विष्णोस्तथापि तु समाहिते ।
प्रीतो भवति वै नित्यं सर्वधर्मकृतोऽपि च' ।। इति पाद्मे ।।२६-२८।।

तिष्ठन्तमासीनमुत व्रजन्तं
शयानमुद्यन्तमदन्तमन्नम् ।
स्वभावमन्यत् किमपीहमान-
मात्मानमात्मस्थमतिर्न वेद ।। ३२ ।।

**आत्मस्थमतिः** परमात्मस्थमतिः । परमात्मनोऽन्यत् । पारतन्त्र्यादेः
।। ३२ ।।

यदि स्म पश्यत्यसदिन्द्रियार्थं
नानानुमानेन विरुद्धमन्यत् ।
न मन्यते वस्तुतया मनीषी
स्वप्नं यथोत्थाय तिरोदधानम् ।। ३३ ।।

'नानामानविरुद्धं हि स्वातन्त्र्यं जगतः सदा ।
स्वतन्त्रो भगवान्विष्णुरेक एव न संशयः' ।। इति च ।।

वस्तुतया स्वतन्त्रत्वेन । विरुद्धं तथा न मन्यते ।

'अस्त्येव स्वाप्नमखिलं वासनारूपमात्मनि ।
जाग्रदेतदिति ज्ञानं यत्तदेव भ्रमात्मकम् ।
तद्वज्जगदिदं सर्वं विद्यमानं न संशयः ।
स्वतन्त्रमेतदिति तु यज्ज्ञानं तद्भ्रमात्मकम्' ।। इति च ।।

'उत्थितो नैव जाग्रत्त्वं क्वचित् स्वप्नस्य पश्यति ।
स्वातन्त्र्यमेवं जगतो ज्ञानवान् नैव पश्यति' ।। इति विवेके ।।३३।।

पूर्वं गृहीतं गुणकर्मचित्र-
मज्ञानमात्मन्यविविक्तमङ्ग ।
निवर्तते तत् पुनरीक्षयैव
न गृह्यते नापि विसृज्य आत्मा ।। ३४ ।।

भगवद्गुणविषयं तत्कर्मविषयं चेति गुणकर्मचित्रम् । आत्मनि परमात्म-विषयम् । एतन्न जानामीत्यप्यविविक्तम् ।

'अन्यैर्ज्ञातेऽपि वाऽज्ञाते न विशेषो हरेः क्वचित् ।
तेषामेव विशेषः स्यादज्ञानापगमेन तु' ।। इति च ।। ३४ ।।

एष स्वयंज्योतिरजोऽप्रमेयो
महानुभूतिः सकलानुभूतिः ।
एकोऽद्वितीयो वचसां विरामो
येनेरिता वाग्रचनाश्चरन्ति ।। ३६ ।।

'ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृतः' इति च ।। ३६ ।।

एतावानात्मसम्मोहो यद् विकल्पस्तु केवले ।
आत्माऽमृते स्वमात्मानमचलं यन्न पश्यति ।। ३७ ।।

'एतावानात्मसम्मोहो यद्विरुद्धस्य कल्पनम् ।
यत्परात्माश्रयान् जीवान् निश्चयेन (नियमेन) न पश्यति' ।।
इति तन्त्रभागवते ।

अचलमिति क्रियाविशेषणम् ।। ३७ ।।

यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ।
व्यर्थो नाप्यर्थवादोऽयं द्वयं विन्दन्ति सूरयः ।। ३८ ।।

अयं व्यर्थवादो न भवति । किन्त्वर्थवादः । जगत् परमेश्वरं च द्वयं विन्दन्ति (विदन्ति) ज्ञानिनः ।

'पञ्चभूतात्मकं विश्वं भ्रान्तिसिद्धमपण्डिताः ।
वदन्ति पण्डितास्त्वद्धा जगदाहुरबाधितम् ।
प्रवाहरूपेण सदा विष्णोरिच्छावशे स्थितम्' ।। इति च ।। ३८ ।।

।। इति श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे अष्टाविंशोऽध्यायः ।।

## एकोनत्रिंशोऽध्यायः

श्री शुक उवाच–

इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ।
गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेम मनोहरस्मितः ।। ७ ।।

'आत्मान्तरात्मा परमात्मेति मूर्तित्रयं हरेः ।
जाग्रत्स्वप्नसुषुप्तीनां सृष्ट्यादेश्च प्रवर्तकम्' ।। इति त्रैकाल्ये ।।७।।

पृथक् सत्रेण वा मह्यं मम यात्रामहोत्सवम् ।
कारयेन्नृत्यगीताद्यैर्महाराजविभूतिभिः ।। ११ ।।

पृथक्स्वयमेव, सत्रेण बहुभिः सह वा, मम यात्रामहोत्सवं कुर्यात् ।।११।।

मामेव सर्वभूतेषु बहिरन्तरवस्थितम् ।
ईक्षे(यजे)तात्मनि चात्मानं यथा खममलाशयः ।। १२ ।।

इति सर्वाणि भूतानि मद्भावेन महाद्युते ।
सभाजयेन्मन्यमानो ज्ञानं केवलमाश्रयन् ।। १३ ।।

ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्यर्के स्फुलिङ्गके ।
अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः ।। १४ ।।

'सर्वभूतेष्वस्ति विष्णुरिति भावः सतां मतः ।
अनेन सर्वभूतानामादित्ये तद्गतात्मना' ।। इति च ।। १२-१४ ।।

सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ।
परिपश्यन्ति च परं परमात्मानमच्युतम् ।। १८ ।।

'ब्रह्मणाऽऽत्तमिदं सर्वं यत्किञ्चित्सचराचरम् ।
इति पश्येत यो विद्वान् स हि ब्रह्मात्मविन्मतः' ।। इति ब्राह्मे ।। १८ ।।

यो योऽपरो मनोधर्मः कल्पते निष्फलाय ते ।
तदायासो निरर्थः स्यान्नयादेरिव सत्तम ।। २१ ।।

'नयादिर्दुर्नयः प्रोक्तो यन्नयं सोऽस्ति सर्वदा' इति शब्दतत्त्वे ।।२१।।

एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ।
यत् सत्यमनृतेनेह मर्त्येनाऽप्नोति माऽमृतम् ।। २२ ।।

'एकदा ज्ञातरूपेण यन्न तिष्ठति सर्वदा ।
चञ्चलत्वात् सत्यमपि ह्यनृतं जगदुच्यते' इति च ।।

'सर्वदैकप्रकारत्वात् सत्यं ब्रह्म सदोच्यते' इति च ।। २२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे एकोनत्रिंशोऽध्यायः ।।



## त्रिंशोऽध्यायः

राजोवाच–

ततो महाभागवत उद्धवे बदरीं गते ।
द्वारवत्यां किमकरोद् भगवान् भूतभावनः ।। १ ।।

ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ।
प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ।। २ ।।

तनुमत्यजत् । अतिशयेनाहरत् । 'अज हरणे' इति धातोः । भूलोकात् स्वर्गलोकं प्रत्यहरदित्यर्थः ॥ १,२ ॥

प्रत्याक्रष्टुं नयनमबला यत्र लग्नं (मग्नं) न शेकुः
कर्णाविष्टं न सरति यशो यत् सतामात्मलग्नम् ।
यच्छ्रीवाचं(क्यं) जनयति रतिं कोऽनुमानः कवीनां
दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥

**कः** सुखरूपः । **अनुमानः** कवीनां मानानुसारी ॥ ३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे त्रिंशोऽध्यायः ॥



## एकत्रिंशोऽध्यायः

लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलाम् ।
योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत् स्वकम् ॥ ६ ॥

आग्नेय्या धारणया स्वतनुमदग्ध्वा स्वकं धामाविशत् ।

'आग्नेय्याऽन्ये धारणया दग्ध्वा देहं परं पदम् ।
यान्ति देवाः समस्ताश्च तेषामन्यां तनुं हरिः ।
नृसिंहरूपी सर्वेषां भित्त्वा ताभिरलङ्कृतः ।
नृत्यते प्रलये देवः स्वयं कृष्णादिरूपवान् ।
अदग्ध्वैव तनुं याति नित्यानन्दस्वरूपतः' ॥ इति तन्त्रभागवते ॥६॥

राजन् परस्य तनुभृज्जननाप्ययेहां
मायाविडम्बनमवैहि यथा नटस्य ।
सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते
संहृत्य चाऽत्ममहिमोपरतः स आस्ते ।। ११ ।।

तनुभृद्वज्जननवदप्ययवच्च ईहा तनुभृज्जननाप्ययेहा ।

'प्रजापतिश्चरति गर्भे अन्तः,' 'अजायमानो बहुधा विजायते' । इति च ।

'अजातो जातवद्विष्णुरमृतो मृतवत् तथा ।
मायया दर्शयेन्नित्यमज्ञानां मोहनाय च' ।। इति ब्राह्मे ।। ११ ।।

तथाऽप्यशेषस्थितिसम्भवाप्यये-
ष्वनन्यहेतुर्यदशेषशक्तिधृक् ।
नैच्छत् प्रणेतुं वपुरत्र शेषितं
मर्त्येन किं स्वस्थ (स्वस्य) गतिं प्रदर्शयन् ।। १३ ।।

**शेषितं** वपुर्बलभद्रादीनाम् ।

'जगतो मोहनार्थाय भगवान् पुरुषोत्तमः ।
दर्शयेन्मानुषीं चेष्टां तथा मृतकवद्विभुः ।
प्रकाशयेददेहोऽपि मोहाय च दुरात्मनाम् ।
मायया मृतकं देहं तदा सृष्ट्वा प्रदर्शयेत् ।
कुतो हि मृतकं तस्य मृत्यभावात्परात्मनः' ।। इति च ।

'जीवविष्ण्वोरभेदश्च देहयोगवियोजने ।
विष्णोर्दुःखं व्रणित्वादि पराभावस्तथैव च ।

अस्वातन्त्र्यं च वेदादावुक्तवद् भासते विभोः ।
क्वचित्क्वचिद् विमोहाय दैत्यादीनां दुरात्मनाम् ।। इति ब्रह्माण्डे ।।१३।।

रामपत्न्यश्च तं देहमुपगुह्याग्निमाविशन् ।
वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः ।
कृष्णपत्न्योऽविशन्नग्निं रुग्मिण्याद्यास्तदात्मिकाः ।। २० ।।

'अग्नावन्तर्दधे भैष्मी सत्यभामा वने तथा ।
न तु देहवियोगोऽस्ति तयोः शुद्धचिदात्मनोः' ।। इति च ।।२०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये एकादशस्कन्धे एकत्रिंशोऽध्यायः ।।

## ।। एकादशस्कन्धः समाप्तः ।।



# द्वादशस्कन्धः

## चतुर्थोऽध्यायः

न यत्र वाचो न मनो न सत्त्वं
तमो रजो वा महदादयोऽमी ।
न प्राणबुद्धीन्द्रियदेवता वा न
सन्निवेशः खलु लोककल्पः ।। २० ।।

न यत्र वाच इत्यादि कालाख्यस्य ब्रह्मणः स्वरूपम् ।। २० ।।

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति होच्यते ।
मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि ।। २५ ।।

'प्रत्येकं विष्णुरूपाणां भ्रान्तिमात्रा भिदा मता ।
जगतश्चैव विष्णोश्च सत्यो भेदः सदैव तु ।
यथाऽऽकाशघ(नौ)टौ नित्यं भिन्नावेव परस्परम् ।
एवमीशो जगच्चैव भिन्नावेव परस्परम्' ।। इति च ।। २५ ।।

एते ह्यवयवाः प्रोक्ताः सर्वावयविनामिह ।
विनाऽर्थेन प्रतीयेरन् पटस्येवाङ्ग तन्तवः ।। २७ ।।

'अवयव्यवयवाभेदात् कोट्यंशो भेद ईरितः ।
सोऽपि भेदो न चाभेदात् पृथगेव प्रवर्तते ।
अवयव्यवयवानां च कार्यकारणवस्तुनाम् ।
एक एव नियन्ताऽसौ हरिर्नारायणः परः' ।। इति च ।। २७ ।।

न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते ।
नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वा तयोरपि ।। ३० ।।

'महाकाशो बहिस्थश्च घटाद्यन्तःस्थ एव च ।
द्वेधा समुदितोऽन्यौ च द्वावाकाशौ प्रकीर्तितौ ।
घटरूपस्तदन्यश्च महाकाशात् परो लघुः ।
महाकाशवदेवात्र परमात्मा सनातनः ।
घटान्तःस्थमहाकाशप्रतिमोऽन्तर्गतो हरिः ।
घटस्यान्तर्गताकाशो महाकाशात् परो मतः ।
तद्वद्देवादयः सर्वे जीवा मुक्त्युपयोगिनः ।
तमोगाश्चैव ये सर्वे घटरूपखवन्नराः' ।। इति तत्त्वसंहितायाम् ।।३०।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वादशस्कन्धे चतुर्थोऽध्यायः ।।



## पञ्चमोऽध्यायः

इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः ।
बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः ।। २२ ।।

तं पतन्तं विमानेन सहतक्षकमम्बरात् ।
विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ।। २३ ।।

'स्वसन्तानोद्भवं कीर्त्या योजयन् जनमेजयम् ।
शक्तोऽप्यशक्तवद्यष्टुरिन्द्र आसीदुपेक्षकः ।

एवमेव ऋषीणां च कीर्तिं योजयताऽमुना ।
कृतोपेक्षा महेन्द्रेण किमु विष्णुः परात्परः ।
तस्माद्विष्णोरशक्यं न भूतभव्यभवत्स्वपि ।
न चानिष्टं गुणैरेष पूर्णो नारायणः सदा' ।।

इति वामने ।। २२-२३ ।।

नित्यादोषस्वरूपाय गुणपूर्णाय सर्वदा ।
नारायणाय हरये नमः प्रेष्ठतमाय मे ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभागवततात्पर्यनिर्णये द्वादशस्कन्धे पञ्चमोऽध्यायः ।।

## ।। द्वादशः स्कन्धः समाप्तः ।।

# ।। समाप्तोऽयं ग्रन्थः ।।

।। श्रीकृष्णार्पणमस्तु ।।



## परिशिष्टम्

## भागवततात्पर्यनिर्णयोदाहृतप्रमाणग्रन्थाः

अन्तर्यामिसंहिता
अभिधानम्
अंशविवेकः
आगमतात्पर्यम्
आग्नेयम्
आत्मसंहिता
अध्यात्मम्
आरुणिश्रुतिः
आश्रमविवेकः
इन्द्रद्युम्नश्रुतिः
उद्दामसंहिता
उद्योगः
उदारशाण्डिल्यश्रुतिः
उभयनिरुक्तम्
ऋक्संहिता
ऐश्वर्यम्
औद्दालकायनश्रुतिः
कपिलसंहिता
कमठश्रुतिः
कर्मतन्त्रः
कर्मविवेकः
कलापश्रुतिः
कापिलेयम्
कापिलेययोगः
कालसंहिता
कुशिकश्रुतिः
कूर्मसंहिता
कौण्ठरव्यश्रुतिः
कौर्मम्
कौशिकश्रुतिः
क्रियायोगः
क्रियाविधानम्
गान्धर्वम्
गारुडम्
गीता
गीताकल्पः
गुरुविवेकः
चाक्रायणश्रुतिः
चैतन्यविवेकः
छन्दोविधानम्
जीवतत्त्वम्
जीवनिर्णयः
ज्योतिःसंहिता
तत्त्वम्
तत्त्वनिर्णयः
तत्त्वप्रतिपत्तिः
तत्त्वलयः
तत्त्वविवेकः
तत्त्वोदयः
तत्त्वोद्योगम्
तन्त्रनिरुक्तम्
तन्त्रनिर्णयः
तन्त्रप्रकाशिका
तन्त्रभागवतम्
तन्त्रमाला
तन्त्रसारः
तात्त्विकः
तात्पर्यम्
त्रियोगः
त्रैकाल्यम्
दत्तात्रेययोगः
दर्शनम्
देवतत्त्वम्
देवहार्दम्
धर्मतत्त्वम्
धर्मविवेकः
धर्मश्रुतिः
धर्मसंहिता
ध्यानयोगः
नाममहोदधिः
नामसंहिता
नारदीयम्

